अथैवमवदद्रोपभीषणाक्षो विभीषण । अलं मातर्विषादेन न वेत्सि सुतविक्रमम् ॥ १३ ॥
आर्यस्य दशकण्ठस्य पुरस्तादेवि दोष्मत । क इन्द्रो वैश्रवण क केऽन्ये विद्याधरा अपि ॥ १४ ॥
अज्ञातपूर्विणा लङ्काराज्य सोढ द्विषामिदम् । दशास्येन प्रसुप्तेन सिंहेनेवेभगर्जितम् ॥ १५ ॥
आस्तामार्यो दशग्रीव परानतिभटानपि । अप्यार्य कुम्भकर्णोऽय नि शेषीकर्तुमीश्वर ॥ १६ ॥
अस्त्वार्य कुम्भकर्णोऽपि तदादेशात् करोम्यहम् । द्विषामकाण्डे सहार मात पात पवेरिव ॥ १७ ॥
अथोचे रावणोऽप्येव दर्शनैरधर दशन् । त्व वज्रकठिनास्यम्ब मृदु कल्यमभाषिरम् ॥ १८ ॥
अप्येकबाहुस्थाम्ना तान् हन्यामिन्द्रादिकान् द्विष । कलाऽशिकथाप्यस्तु वस्तुतस्ते तृण हि मे ॥ १९ ॥
दोर्वीर्येणापि निर्जेतु यद्यप्यलमह परान् । तथापि हि प्रयोक्तव्या विद्याशक्ति क्रमागता ॥ २० ॥
तद्विद्या साधयिष्यामि निरवद्या समन्तत । अनुजानीहि यास्यामि तत्सिद्ध्यै सानुजोऽप्यहम् ॥ २१ ॥
एवमुक्त्वा नमस्कृत्य पितरौ सानुजोऽपि स । ताभ्या च चुम्बितो मूर्ध्नि भीमारण्यमुपाययौ ॥ २२ ॥
श्वानश्रुनि श्वासकम्पमानान्तिकद्रुमम् । व्याघ्रशार्दूललाङ्गूलाच्छोटस्फोटितभूतलम् ॥ २३ ॥
अस्तोकघूकघूत्कारघोरमूकगह्वरम् । नृत्यद्भुतपदाघातपतद्गिरितटोपलम् ॥ २४ ॥
भयङ्कर दिविषदामप्येक पदमापदाम् । भ्रातृभ्या सहितस्ताभ्या तदरण्य विवेश स ॥ २५ ॥

॥ त्रिभिर्विशेषकम् ॥

ते जटामुकुटान्मूर्ध्नि धारयन्तस्तपस्विवत् । अक्षसूत्रधरा नासावशाग्रन्यस्तदृष्टय ॥ २६ ॥

१ एकहस्तबलेन । २ अजगर ।

श्वेतांशुकंभृतो याममद्वितयेन त्रयोऽपि हि । सर्वकामप्रदामष्टाक्षरीं विद्यामसाधयन् ॥ २७ ॥ युग्मम् ॥
दशकोटीसहस्राणि जपो यस्य फलप्रदः । आरेभिरे ते अपितु त मन्त्रं षोडशाक्षरम् ॥ २८ ॥
तदा त्वनादृतो नाम जम्बुद्वीपपतिः सुरः । सान्तःपुरः क्रीडनाय तत्रायातो ददर्श तान् ॥ २९ ॥
विद्यासाधनविघ्नाय तेषां यक्षाधिपः स तु । अनुकूलोपसर्गाय प्रजिघाय स्वयोषितः ॥ ३० ॥
तेषां क्षोभार्थमायातास्तद्रूपैरतिसुन्दरैः । ताः क्षोभं स्वयमेवेयुर्निस्तृतस्वामिशासनाः ॥ ३१ ॥
निर्विकारान् स्थिराकारांस्तूर्णीकानवलोक्य तान् । अकृत्रिमस्मरावेशविवशास्ते बभाषिरे ॥ ३२ ॥
भो भो ध्यानजडा यूयं यत्नतः पश्यताग्रतः । देव्योऽपि च वशीभूताः का वः सिद्धिरतः परा ॥ ३३ ॥
किं विद्यासिद्धये यत्नस्तत्क्लेशेनामुना कृतम् । किं करिष्यथ विद्याभिर्देव्यः सिद्धा वयं हि वः ॥ ३४ ॥
रमध्वं स्वैरमस्माभिस्त्रयाणां जगतामपि । रम्यरम्यप्रदेशेषु सुरदेश्या यथारुचि ॥ ३५ ॥
सकाममिति जल्पन्त्योऽनल्पधैर्येषु तेषु ताः । विलक्षा जज्ञिरे यक्षास्तालिंका नैकहस्तिका ॥ ३६ ॥
जम्बुद्वीपपतिर्यक्षस्ततस्तानब्रवीदिति । मुग्धैः किमेतदारब्धं युष्माभिः कष्टचेष्टितम् ॥ ३७ ॥
मन्ये पाखण्डिना केनाप्यकाण्डे मृत्युहेतवे । पाखण्डं शिक्षिता यूयमनाप्तेन दुरात्मना ॥ ३८ ॥
यात याताधुनाप्येतं मुक्त्वा ध्यानदुराग्रहम् । ब्रूताहमपि यच्छामि वाञ्छितं वः कृपापरः ॥ ३९ ॥
इत्युक्तेऽपि हि तूर्णीकास्तान् क्रुद्धः सोऽब्रवीदिति । मुक्त्वा प्रत्यक्षदेवं मा किमन्यं ध्यायथापरम् ॥ ४० ॥
इति स क्रूरवाग्यक्षस्तत्परिक्षोभहेतवे । भ्रूसङ्ज्ञया समादिक्षत् किङ्करान् वानमन्तरान् ॥ ४१ ॥

---

१ अंशुकं वस्त्रम् । २ देवसदृशाः । ३ एकहस्तेन तालिका न भवेदिति यावत् ।

ततः किलकिलारावकारिणो बहुरूपिणः । उत्पाट्य गिरिशृङ्गाणि तदग्रे केऽपि चिक्षिपुः ॥ ४२ ॥
चन्दनद्रुमवत् सर्पीभूय तान् कोऽप्यवेष्टयन् । सिंहीभूय पुरस्तेषां पूत्कृतं केऽपि दारुणम् ॥ ४३ ॥
अच्छभल्लशृकव्याघ्रविडालादिवपुर्भृतः । चक्रुर्बिभीषिकां केचिन्नाक्षुभ्यस्ते तथापि हि ॥ ४४ ॥
कैकसीं रत्नश्रवसं जामिं चन्द्रणखां च ते । विकृत्य बद्ध्वा च पुरस्तेषां सपदि चिक्षिपुः ॥ ४५ ॥
रत्नश्रवःप्रभृतयस्ते च मायामयास्तदा । उदश्रुनयना एवं चक्रन्दुः करुणस्वरम् ॥ ४६ ॥
वयं हन्यामहे बद्ध्वा तिर्यञ्चो नु पशूनिव । एभिर्गतघृणैः कैश्चिद्युष्माकं पश्यतामपि ॥ ४७ ॥
उत्तिष्ठोत्तिष्ठ वत्स त्वं त्रायस्व दशकन्धर । एकान्तभक्तस्ताहक् त्वमस्मान् कथमुपेक्षसे ॥ ४८ ॥
यो बालोऽपि महाहारं कण्ठे न्यधाः स्वयम् । तस्य बाहुबलं क्वाद्य क्वाहङ्कारश्च ते गतः ॥ ४९ ॥
कुम्भकर्ण त्वमपि नो नाकर्णयसि किं वचः । यदवमस्मान् दीनास्यानुदासीन इवेक्षसे ॥ ५० ॥
बिभीषण क्षणमपि न भक्तिविमुखोऽभवः । किं पराभवितं [illegible] दुष्टदैवेन सम्प्रति ॥ ५१ ॥
विलपत्स्वपि तेष्वेवं न चेलुस्ते समाधितः । ततस्तदग्रे तन्मौलींश्चिच्छिदुर्यक्षकिङ्कराः ॥ ५२ ॥
अपश्यन्त इवाग्रस्थमपि तत्कर्म दारुणम् । न मनागप्यगुः क्षोभं ते ध्यानाधीनचेतसः ॥ ५३ ॥
रावणाग्रेऽपातयस्ते मौली तदनुजन्मनोः । दशग्रीवस्य मूर्धानं तयोरग्रे तु मायया ॥ ५४ ॥
किञ्चिच्चुक्षुभतुः कोपात्कुम्भकर्णबिभीषणौ । गुरुभक्तिस्तत्र हेतुर्न पुनः स्वल्पसत्त्वता ॥ ५५ ॥
रावणः परमार्थज्ञस्तमनर्थमचिन्तयन् । विशिष्टध्याननिष्ठोऽभूद्गिरीन्द्र इव निश्चलः ॥ ५६ ॥

---

१ भगिनीम् । २ तस्य लघुभ्रात्रोः ।

साधु साध्वित्यभूद्वाणी गीर्वाणानामथाम्बरे । ते च द्रुतमपासर्पन्थकिता यक्षकिङ्कराः ॥ ५७ ॥
तव स्मो वशवर्तिन्य इति जल्पन्त्य उच्चकैः । विद्याः सहस्रमभ्येयुर्दशास्यं द्योतिताम्बराः ॥ ५८ ॥
प्रज्ञप्ती रोहिणी गौरी गान्धारी च तथा परा । नभःसञ्चारिणी कामदायिनी कामगामिनी ॥ ५९ ॥
अणिमा लघिमाक्षोभ्या मनःस्तम्भनकारिणी । सुविधाना तपोरूपा दहनी विपुलोदरी ॥ ६० ॥
शुभप्रदा रजोरूपा दिनरात्रिविधायिनी । वज्रोदरी समाकृष्टिरदर्शन्यजरामरा ॥ ६१ ॥
अनलस्तम्भनी तोयस्तम्भनी गिरिदारणी । अवलोकनी तु वह्निर्घोरा धीरा भुजङ्गिनी ॥ ६२ ॥
वारिणी भुवनाऽवन्ध्या दारुणी मदनाशिनी । भास्करी रूपसम्पन्ना रोशनी विजया जया ॥ ६३ ॥
वर्धनी मोचनी चैव वाराही कुटिलाकृतिः । चित्तोद्भवकरी शान्तिः कौबेरी वशकारिणी ॥ ६४ ॥
योगेश्वरी बलोत्सादा चण्डा भीतिः प्रधर्षिणी । दुर्निवारा जगत्कम्पकारिणी भानुमालिनी ॥ ६५ ॥
एवमाद्या महाविद्याः पुरा सुकृतकर्मणा । स्वल्पैरेव दिनैः सिद्धा दशास्यस्य महात्मनः ॥ ६६ ॥
॥ अष्टभिः कुलकम् ॥

संवृद्धिर्जृम्भणी सर्वाहारिणी व्योमगामिनी । इन्द्राणीति पञ्च विद्याः कुम्भकर्णस्य चासिधन् ॥ ६७ ॥
सिद्धार्था शत्रुदमनी निर्व्याघाता खगामिनी । विद्याश्चतस्रः संसिद्धाः कुम्भकर्णानुजन्मनः ॥ ६८ ॥
जम्बूद्वीपपतिः सोऽपि क्षमयामास रावणम् । महतामपराद्धे हि प्रणिपातः प्रतिक्रिया ॥ ६९ ॥
स यक्षोऽकृत तत्रैव रावणस्य कृते कृती । स्वयम्प्रभं पुरं विघ्नप्रायश्चित्तचिकीर्षिव ॥ ७० ॥

१ देवानाम् । २ अनश्यन् ।

विद्यासिद्धिं तु तां तेषां श्रुत्वा तौ पितरौ स्वसा । बन्धवश्चाययुस्तत्र प्रतिपत्तिश्च तैः कृता ॥ ७१ ॥
पित्रोर्दृशां सुधावृष्टिं बन्धूनामेकमुत्सवम् । जनयन्तः सुखं तस्थुर्भ्रातरस्ते त्रयोऽपि हि ॥ ७२ ॥
उपवासैरथो षड्भिश्चन्द्रहासमसिं वरम् । दशास्यः साधयामासौपयिकं साधने दिशाम् ॥ ७३ ॥
इतश्च वैताढ्यगिरौ दक्षिणश्रेणिभूषणे । पुरेऽभूत्सुरसङ्गीते मयो विद्याधरेश्वरः ॥ ७४ ॥
तस्य हेमवती नाम गुणानां धाम गेहिनी । तत्कुक्षिजन्मा दुहिता नाम्ना मन्दोदरीत्यभूत् ॥ ७५ ॥
सा प्राप्तयौवना प्रेक्ष्य तद्वरार्थी व्यचिन्तयत् । विद्याधरकुमाराणां मयराजो गुणागुणान् ॥ ७६ ॥
अनुरूपमपश्यंश्च वरं मयनरेश्वरः । यावद्विषादमग्नोऽस्थात्तावन्मन्त्र्येवमब्रवीत् ॥ ७७ ॥
स्वामिन्मा विषीद किन्त्ववस्त्यस्या उचितो वरः । रत्नश्रवःसुतो दोष्मान् रूपवांश्च दशाननः ॥ ७८ ॥
सिद्धविद्यासहस्रस्याकम्पितस्य सुरैरपि । विद्याधरेषु नास्यास्ति तुल्यो मेरोरिवाद्रिषु ॥ ७९ ॥
एवमेतदिति प्रोच्य मयो हर्षमहामनाः । सबान्धवः ससैन्यश्च सान्तःपुरपरिच्छदः ॥ ८० ॥
मन्दोदरीमुपादाय प्रदातुं दशमौलये । पुरुषैर्ज्ञापयित्वा स स्वयम्प्रभपुरं ययौ ॥ ८१ ॥ युग्मम् ॥
सुमालिप्रमुखास्तत्र गोत्रवृद्धा महाशयाः । मन्दोदरीं दशास्याय ग्रहीतुं प्रतिपेदिरे ॥ ८२ ॥
विवाहं कारयामासुस्तयोरथ शुभे दिने । वैवाहिकाः सुमाल्याद्या मयप्रभृतयश्च ते ॥ ८३ ॥
ययुर्मयाद्याः स्वपुरं कृतोद्वाहमहोत्सवाः । रावणोऽपि चिरं रेमे रमणीवरया तया ॥ ८४ ॥

---

१ उपयोगिनम् ।

रावणः क्रीडयान्येद्युरयौ मेघरवं गिरिम् । उत्पक्ष्मिन पार्श्वविलम्बिविमिर्मेघनष्टलैः ॥ ८५ ॥
सेरस्यपश्यन्मज्जन्तीस्तत्र खेचरकन्यकाः । षट् सहस्रान् सोऽप्सरस इव क्षीरसरस्वति ॥ ८६ ॥
पद्मिन्य इव मार्तण्डं स्मेरलोचनपङ्कजाः । नांथीयन्त्यः सानुरागास्तमीक्षाञ्चक्रिरेऽथ ताः ॥ ८७ ॥
सद्योऽप्यपास्य मन्दाक्षममन्दस्मरपीडिताः । भर्ता नस्त्वं भवेवं ताः प्रार्थयाञ्चक्रिरे स्वयम् ॥ ८८ ॥
तत्र पद्मावती सर्वश्रीसुरसुन्दरोद्भवा । मनोवेगाबुधसुता चान्याशोकलतामिधा ॥ ८९ ॥
अन्या विद्युत्प्रभा नाम सुता कनकसन्ध्ययोः । एवमन्या अपि जगत्प्रख्यातान्वयसम्भवाः ॥ ९० ॥
ताः सरागाः सरागेण दशग्रीवेण कन्यकाः । गान्धर्वेण विवाहेन सर्वा अप्युपयेमिरे ॥ ९१ ॥
तत्सौविदांस्तत्पितृणामिदमेत्य व्यजिज्ञपन् । कोऽप्येष कन्या यौष्माकीः परिणीयाद्य गच्छति ॥ ९२ ॥
समं तत्पितृभिर्विद्याधरैरमरसुन्दरः । क्रुद्धोऽन्वधावद्रभसा जिंघांसुर्दशकन्धरम् ॥ ९३ ॥
नवोढास्ता दशग्रीवमूचुः प्रकृतिकातराः । त्वरितं प्रेरय स्वामिन् विमानं मा विलम्बय ॥ ९४ ॥
एकोऽप्यजय्योऽयं विद्याधरेन्द्रोऽमरसुन्दरः । किं पुनः कनकबुधप्रमुखैः परिवारितः ॥ ९५ ॥
दशास्यस्तद्गिरा स्मित्वा व्याजहारेति सुन्दरीः । पश्यताजिं ममामीभिर्गरुडस्योरगैरिव ॥ ९६ ॥
इति ब्रुवाणमेयुस्तं कुर्वाणाः शस्त्रदुर्दिनम् । घना इव महाशैलं विद्याधरमहाभटाः ॥ ९७ ॥
अस्त्राण्यस्त्रैः खण्डयित्वा रावणो वीर्यदारुणः । सद्य प्रस्वापनास्त्रेणार्जिघांसुस्तानमोहयत् ॥ ९८ ॥

१ सरोवरे । २ नाथमिच्छन्त्यः । ३ लज्जाम् । ४ सौविदा अन्तःपुररक्षका नपुंसकनरा । ५ हन्तुमिच्छुः । ६ जेतुमशक्यः । ७ सङ्ग्रामम् । ८ हन्तुमनिच्छु ।

नागपाशैरबध्नाच पशूनिव दशानन । देयसीमि पितृभिक्षां याचितस्तान्मुमोच च ॥ ९९ ॥
ततस्ते स्वपुर जग्मु सम ताभिश्च रावण । स्वयम्प्रभपुर प्राप दत्तार्घो मुदितैर्जनै ॥ १०० ॥
अथ कुम्भपुरेशस्य महोदरमहीपते । सुरूपनयनादेवीकुक्षिजां नवयौवनाम् ॥ १०१ ॥
सुतां नाम्ना तडिन्मालां तडिन्मालोपमद्युतिम् । पूर्णकुम्भस्तनाभोगां कुम्भकर्ण उपायत ॥ १०२ ॥
॥ युग्मम् ॥
वैताढ्यदक्षिणश्रेण्यां ज्योतिष्पुरपुरेशितु । वीरनाम्नो नन्दवतीदेवीकुक्षिसमुद्भवाम् ॥ १०३ ॥
पङ्कजश्रीदस्युरसं नामत पङ्कजश्रियम् । कन्या सुरस्त्रियमिव पर्यणैषीद्विभीषण ॥ १०४ ॥ युग्मम् ॥
अथ मन्दोदरी देवी दवेन्दुसमतेजसम् । पुत्रमिन्द्रजित नाम सुषुवेऽद्भुतविक्रमम् ॥ १०५ ॥
कियत्यपि गते काले द्वितीयमपि नन्दनम् । मेघवन्नयनानन्द सुषुवे मेघवाहनम् ॥ १०६
आकर्ण्य पितृवैर तत्कुम्भकर्णविभीषणौ । वैश्रवणाश्रिता लङ्कामुपद्रुद्रुवतु सदा ॥ १०७ ॥
वैश्रवणोऽथ दूतेनेत्यवोचत सुमालिनम् । निघ्नौ शाधि शिशू हन्त रावणावरजाविमौ १०८ ॥
स्वान्यशक्ती न जानीतो दुर्मदौ वीरमानिनौ । एतौ पातालङ्कास्थौ भेकौ कूपोदकाविव ॥ १०९ ॥
अस्मत्पुर्यामवस्कन्द ददाते छद्मकर्मणा । ञितकामितया भव्यौ मया चिरमुपेक्षितौ ॥ ११० ॥
न चेच्छिक्षयसि क्षुद्र तदिमौ मालिवर्त्मना । त्वया सहैव नेष्यामि त्व वेत्स्यस्मद्बल न तु ॥ १११ ॥
इत्युक्त्वा रावण क्रुद्धोऽभ्यधादिति महामना । रे क एष वैश्रवण करदो य परस्य हि ॥ ११२ ॥

१ कमललक्ष्म्याश्चोरोयस्यां तथो नैव यस्यास्ताम् । २ शिक्षय । ३ जेतुमिच्छया ।

अन्यस्य शासनाल्लङ्घ्यं यः शास्त्येवं वदन्स किम् । न लज्जते स्वात्मनोऽपि तस्य धाष्टर्यमहो महत् ॥ ११३ ॥
दूतोऽसीति न हन्मि त्वां याहीति दशमौलिना । उक्तो वैश्रवणं गत्वा दूतोऽशंसद्यथातथम् ॥ ११४ ॥
दूतानुपदमेवाथ दशकण्ठः ससोदरः । ससैन्यः प्रययौ लङ्कामसर्षेण गरीयसा ॥ ११५ ॥
अग्रे गतेन दूतेन तेनाख्यातप्रवृत्तिकः । ससैन्यो निर्ययौ लङ्कापुर्या वैश्रवणो युधि ॥ ११६ ॥
वन्यामिव महावातः प्रसरन्ननिवारितम् । क्षणादभाङ्क्षीच्च तस्याक्षौहिणीं दशकन्धरः ॥ ११७ ॥
रावणेन बले भग्ने भग्नंमन्यः स्वयं ततः । एवं वैश्रवणो दध्यौ विध्यातक्रोधपावकः ॥ ११८ ॥
सरसो लूनपद्मस्य भग्नदन्तस्य दन्तिनः । शाखिनश्छिन्नशाखस्यालङ्कारस्य च निर्मणेः ॥ ११९ ॥
नष्टज्योत्स्नस्य शशिनस्तोयदस्य गताम्भसः । परैश्च भग्नमानस्य मानिनो धिगवस्थितिम् ॥ १२० ॥
॥ युग्मम् ॥
तस्याथवास्त्ववस्थानं यतमानस्य मुक्तये । लोकं विहाय बहिष्णुर्न हि लज्जास्पदं पुमान् ॥ १२१ ॥
तदलं मम राज्येनानेकानर्थप्रदायिना । उपादास्ये परिव्रज्या द्वारं निर्वाणवेश्मनः ॥ १२२ ॥
अप्येतावपकर्तारौ कुम्भकर्णविभीषणौ । जातौ ममोपकर्तारावीदृक्पथनिदर्शनात् ॥ १२३ ॥
रावणोऽग्रेऽपि मे बन्धुर्बन्धुः सम्प्रति कर्मतः । विनास्योपक्रममिमं न हि स्यान्मम धीरियम् ॥ १२४ ॥
एवं ध्यात्वा वैश्रवणस्त्यक्त्वा शस्त्रादि सर्वतः । तत्क्षणं परिव्रज्यां स्वयमेव समाददे ॥ १२५ ॥
तं नत्वा रावणोऽप्येवमुवाच रचिताञ्जलिः । ज्येष्ठो भ्राता त्वमसि मे सहस्वागोऽनुजन्मनः ॥ १२६ ॥

---

१ वनानां समूहो वन्या, ताम् । २ मेघस्य । ३ अपराधम् ।

राज्य कुरुष्व नि शङ्को लङ्कायामपि वा वर । वयमन्यत्र यास्यामो न हीयत्येव मेदिनी ॥ १२७ ॥
तस्मिन्नेव ब्रुवाणेऽपि महात्मा प्रतिमास्थित । किञ्चनोचे वैश्रवणस्तद्भवेऽपि शिवङ्गमी ॥ १२८ ॥
ज्ञात्वैनीह वैश्रवण क्षमयित्वा प्रणम्य च । विमान पुष्पक तस्य सोऽग्रहीत्सह लङ्कया ॥ १२९ ॥
जयलक्ष्मीलतापुष्प सोऽधिरुह्याथ पुष्पकम् । सम्मेतशैलशृङ्गेऽर्हत्प्रतिमा वन्दितु ययौ ॥ १३० ॥
वन्दित्वा प्रतिमा शैलाद्रावणस्यावरोहत । सेनाकलकलेनैको जगर्ज वनकुञ्जर ॥ १३१ ॥
अथ प्रहस्त इत्यूचे प्रतिहारो दशाननम् । हस्तिरत्नमसौ देव देवस्यार्हति यानताम् ॥ १३२ ॥
तत पिङ्गोत्तुङ्गदन्त मधुपिङ्गललोचनम् । उदग्रकुम्भशिखर मदनिर्झरिणीगिरिम् ॥ १३३ ॥
सप्तहस्तसमुच्छ्राय नवहस्तायत च तम । क्रीडापूर्वं वशीकृत्याध्यारुरोह दशानन ॥ १३४ ॥
॥ युग्मम् ॥

चकार तस्य भुवनालङ्कार इति नाम स । ऐरावणगजारूढशक्रलक्ष्मीं विडम्बयन् ॥ १३५ ॥
गजमालानित कृत्वा तत्रैवोवास तां निशाम् । दशास्य प्रातरध्यष्ठादास्थानीं सपरिच्छद ॥ १३६ ॥
तत्रोपेत्य प्रतीहारविज्ञप्तो घातजर्जर । विद्याधरस्त पवनवेगो नत्वैवमब्रवीत् ॥ १३७ ॥
देव पातालकलङ्कायां किष्किन्धिनृपनन्दनौ । किष्किन्धायां गतौ सूर्यरजा ऋक्षरजा अपि ॥ १३८ ॥
अभूद्युद्ध तयोस्तत्र यमेन सह भूभुजा । यमेनेवातिघोरेण प्राणभञ्जयदायिना ॥ १३९ ॥

---

१ शिवं मोक्षं गमिष्यतीति । २ दुष्करावहितम् । ३ जयलक्ष्मीरेव लता तस्याः पुष्परूपम् । ३ मदतरलः । ५ वाहनताम् । ६ मदनधाराझरवेण गिरिसमानम् ।

चिरं युध्वा यमेनोच्चैर्बध्वा कारानिकेतने । क्षिप्तौ सूर्यरवा स्वक्षरजाः सपदि दस्युवत् ॥ १४० ॥
विधाय नरकावासांस्तेन वैतरणीप्लुतान् । छेदभेदादिदुःखं तौ प्राप्येते सर्वरिच्छदौ ॥ १४१ ॥
तौ त्वदीयौ क्रमायातौ सेवकौ दशकन्धर । मोचय त्वमलङ्घ्याज्ञस्तवैव स पराभवः ॥ १४२ ॥
रावणोऽपि जगादैवमेवमेतदसंशयम् । आश्रयस्य हि दौर्बल्यादाश्रित परिभूयते ॥ १४३ ॥
परोक्षत पत्तयोऽमी यद्बद्धास्तेन दुर्धिया । कारायां यत्र निक्षिप्ता एष यच्छामि तत्फलम् ॥ १४४ ॥
इत्युदीर्योग्रदोर्वीर्यं सानीकोऽनीकलालसः¹ । पुरीं जगाम किष्किन्धां यमदिक्पालपालिताम् ॥ १४५ ॥
त्रपुपानशिलास्फालपर्शुच्छेदादिदारुणान् । ददर्श नरकांस्तत्र सप्तापि दशकन्धर ॥ १४६ ॥
क्लिश्यमानाभिजान पत्तीन् दृष्ट्वा रुष्टो दशानन । परमाधार्मिकांस्तत्रात्रासयद्गरुडोऽहिवत् ॥ १४७ ॥
स्वपत्तीन् मोचयामास तत्रस्थानपरानपि । महतामागमो ह्याशु क्लेशच्छेदाय कस्य न ॥ १४८ ॥
यमाय नरकारक्षास्ततु नारकमोक्षणम् । क्षणाद्गत्वा समाचख्यु सपूत्कारोर्ध्ववाहव- ॥ १४९ ॥
क्रोधारुणाक्ष सद्योऽपि यमो यम इवापर । नगर्या निर्ययौ योद्धुं युद्धनाटकसूत्रभृत्² ॥ १५० ॥
सैन्या सैन्यै सम सेनाधिपै सेनान्य आहवम् । चक्रुर्यम पुनः क्रुद्ध क्रुद्धेन दशमौलिना ॥ १५१ ॥
शराशरि चिरं कृत्वा यमोऽधावित्वि वेगत । शुण्डादण्डमिव व्यालो दण्डमुत्पाट्य दारुणम् ॥ १५२ ॥
खण्डश खण्डयामास नालकाण्डमिवाथ तम् । क्षुरप्रेण³ दशग्रीव क्लीववद्गणयन् परान् १५३ ॥
यम- पृषत्कैर्भूयोऽपि च्छादयामास रावणम् । अवारयद्रावणस्ताञ्छोभ सर्वगुणानिव ॥ १५४ ॥

---

१ युद्धलालस । २ युद्धनाटके सूत्रधार । ३ बाणविशेषेण । ४ वाणे ।

युगपद्भूयसो बाणान् वर्षश्च दशाननः । यमं जर्जरयाञ्चक्रे जरेव बलनाशकृत् ॥ १५५ ॥
अथ प्रणश्य संग्रामाद्यमस्त्वरितमभ्यगात् । रथनूपुरनेतारमिन्द्रं विद्याधरेश्वरम् ॥ १५६ ॥
यमः शक्रं नमस्कृत्य जगादेति कृताञ्जलिः । जलाञ्जलिर्मया दायि यमत्वाय प्रभोऽधुना ॥ १५७ ॥
रुष्य वा तुष्य वा नाथ करिष्ये यमतां न हि । उत्थितो हि दशग्रीवो यमस्यापि यमोऽधुना ॥ १५८ ॥
विद्राव्य नरकारक्षान्नारकास्तेन मोचिताः । अबध्यतबनेनोर्वजीव मुक्तोऽस्मि चाहवात् ॥ १५९ ॥
जित्वा वैश्रवणं तेन लङ्कापि जगृहे पुरी । तद्विमानं पुष्पकं च जितश्च सुरसुन्दरः ॥ १६० ॥
क्रुद्धोऽथ शक्रो युयुत्सुर्निषिद्धः कुलमन्त्रिभिः । तैस्तैरुपायैर्बलिना सह विग्रहभीरुभिः ॥ १६१ ॥
यमाय सुरसङ्गीतं पुरमिन्द्रोऽथ दत्तवान् । स्वयं तथैव तस्थौ च विलसन्रथनूपुरे ॥ १६२ ॥
इतश्चादित्यरजसे किष्किन्धां नगरीं ददौ । दशास्य ऋक्षरजसे पुरमृक्षपुरं पुनः ॥ १६३ ॥
जगाम तु स्वयं लङ्कामलङ्कर्मीणविक्रमः । स्तूयमानो देवतैश्च भूमिनागरैश्च सः ॥ १६४ ॥
अमरेन्द्रोऽमरावत्यामिव तस्यामवस्थितः । दशास्यः प्रशशासाथ राज्यं पैतामहं महत् ॥ १६५ ॥
इतश्चादित्यरजसः कपिराजस्य नन्दनः । महिष्यामिन्दुमालिन्यां वाली नामाभवद्बली ॥ १६६ ॥
जम्बूद्वीपं समाक्रान्तः वाली बाहुबलोल्बणः । नित्यं प्रदक्षिणीकुर्वन् सर्वचैत्यान्यवन्दत ॥ १६७ ॥
सुग्रीव इति चान्योऽभूदादित्यरजसः सुतः । कन्या कनीयसी तस्य सुप्रभेति च नामतः ॥ १६८ ॥
अभूतामृक्षरजसोऽप्युभौ भुवनविश्रुतौ । भार्यायां हरिकान्तायां नलनीलाभिधौ सुतौ ॥ १६९ ॥

---

१ बलनाशकारिणी मृत्युवस्येव । २ अलं समर्थः कर्मणे कार्याय विक्रमो यस्य सः ।

नरेन्द्र आदित्यरजा वालिने बलशालिने। दत्वा राज्यं प्रवव्राज तपस्तप्त्वा ययौ शिवम् ॥ १७० ॥
सम्यग्दृष्टिं न्यायवन्तं दयावन्तं महौजसम्। स्वानुरूपं यौवराज्ये सुग्रीवं वाल्यपि न्यधात् ॥ १७१ ॥
अन्यदा तु दशग्रीवश्चैत्यकन्दनहेतवे। सकलत्रो गजारूढः प्रययौ मेरुपर्वते ॥ १७२ ॥
अत्रान्तरे चन्द्रणखामपश्यत् खरखेचरः। जातरागो जातरागां जह्रे मेघप्रभात्मजः ॥ १७३ ॥
ययौ पातालल‍ङ्कां च तत्र चन्द्रोदरं नृपम्। आदित्यरजसः सूनुं निर्वास्यादत्त तां स्वयम् ॥ १७४ ॥
क्षणेनाप्याययौ मेरोर्लङ्कायां दशकन्धरः। आकर्ण्य तच्चन्द्रणखाहरणं प्रचुकोप च ॥ १७५ ॥
खरखेचरघाताय चचालाथ दशाननः। पञ्चानन इव क्रुद्धो गजाखेटककर्मणे ॥ १७६ ॥
अथ मन्दोदरी देवी निजगादेति रावणम्। संरम्भः कोऽयमस्थाने मनाग्विमृश मानद ॥ १७७ ॥
कन्या ह्यवश्यं कस्मैचिद्दातव्या यदि सा स्वयम्। वरं वृणीते रुचितमभिजातं च साधु तत् ॥ १७८ ॥
अनुरूपो वरश्चन्द्रणखाया दूषणात्मजः। अदूषणश्च ते पत्तिर्भविष्यत्येष विक्रमी ॥ १७९ ॥
प्रेष्य मधानपुरुषांस्तदुद्वाहय तं तया। अस्मै पातालल‍ङ्कां च देहि धेहि प्रसन्नताम् ॥ १८० ॥
एवं सोऽवरजाभ्यामप्युक्तो युक्तविचारकृत्। प्रस्थाप्य मयमारीचौ तेन तां पर्यणाययत् ॥ १८१ ॥
ततः पातालल‍ङ्कायां स चन्द्रणखया समम्। निर्विघ्नं बुभुजे भोगान् दद्रावणशासनम् ॥ १८२ ॥
निर्वासिते तदा तेन कालाच्चन्द्रोदरे मृते। अनुराधेति तत्पत्नी नंष्ट्वागाद्गर्भिणी वने ॥ १८३ ॥

१ खरनामा विद्याधरः। २ निराकृत्य। ३ गजमृगयाकर्मणे। ४ कुलिनम्। ५ अनुज्ञाभ्याम्। ६ तेन खरेण निर्वासिते चन्द्रोदरे कालान्मृते सतीत्यन्वयः।

साम्प्रत च वने तस्मिन् सिंही सिंहमिवोल्बणम् । विराध नाम तनय नयादिगुणभाजनम् ॥ १८४ ॥
सम्प्राप्तयौवन सर्वकलानलधिपारग । अस्खलत्प्रसर पृथ्वीं विजहार महाभुज ॥ १८५ ॥
इत कथाप्रसङ्गन समायां रावणोऽशृणोत् । प्रौढप्रताप बलिन वालिन वानरेश्वरम् ॥ १८६ ॥
रावणोऽन्यप्रतापस्यासहनो भानुमानिव । प्रनिधायानुशिष्यैक दूत वालिमहीभुजे ॥ १८७ ॥
स गत्वा वालिन नत्वा व्याजहारति धीरवाक् । दूतोऽह दशकण्ठस्य राजस्तद्वाचिक शृणु ॥ १८८ ॥
अस्माक पूर्वज कीर्तिधवल पूर्वजस्तव । शरण्य शरणायागाच्छ्रीकण्ठो वैरिविद्रुत ॥ १८९ ॥
श्वशुरिम्य श्रीनुप स तद्वियोगैककातर । इहैव वानरद्वीप श्रीकीर्तिधवलो न्यधात् ॥ १९० ॥
तदादि चावयोर्भर्तृभृत्यसम्बन्धतो मिथ । भूयांस क्ष्माभुजो जग्मु पर्ययोरुभयोरपि ॥ १९१ ॥
अथाभवत्क्षितिपति किष्किन्धिस्ते पितामह । सुकेश इत्यभिधया मम तु प्रपितामह ॥ १९२ ॥
तयोरपि हि निर्व्यूढ स सम्बन्धस्तथैव हि । ततो नृप सूर्यरजास्त्वदीयस्त्वभवत्पिता ॥ १९३ ॥
यमगुप्तस्तमाकर्ण्य यथाह वेत्ति तज्जन । यथा च किष्किन्धाराज्ये न्यधा तदपि विश्रुतम् ॥ १९४ ॥
नयवांस्तनयस्तस्य वालिस्त्वमधुनाभव । प्राग्वत्स्वस्वामिसम्बन्धादस्मत्सेवा कुरुष्व तत् ॥ १९५ ॥
क्रुद्धोऽप्यविकृताकारो गर्ववह्निशमीतरु । एव गम्भीरगीर्वाली व्याजहार महामना ॥ १९६ ॥
अन्योऽन्य स्नेहसम्बन्ध जानामि कुलयोर्द्वयो । रक्षोवानरराजानामद्य यावदखण्डितम् ॥ १९७ ॥

---

१ अकुण्ठितगमनः । २ प्रेषयामास । ३ शिक्षयित्वा । ४ श्वशुरपुत्रम् श्यालकम् । ५ निर्वाहीकृतः । ६ स्थापितवान् । ७ सेव्यसेवकसम्बन्धात् । ८ गर्व एवाग्निस्तस्मिन् शमीवृक्षसमः ।

सम्पद्यापदि चान्योऽन्यं पूर्वे साहायकं व्यधुः । स्नेहो निर्बन्धनं तत्र सेव्यसेवकता न तु ॥ १९८ ॥
देवं सर्वज्ञमर्हन्तं साधुं च सुगुरुं विना । सेव्यमन्यं न जानीमो मोहः कः स्वामिनस्तव ॥ १९९ ॥
मन्यमानेन सेव्यं स्वमस्मानपि च सेवकान् । कुलक्रमागतः स्नेहगुणस्तेनाद्य खण्डितः ॥ २०० ॥
तस्य मित्रकुलोत्पत्तेर्निजां शक्तिमजानतः । न करोमि स्वयं किञ्चिदपवादैककातरः ॥ २०१ ॥
विप्रियं कुर्वतस्तस्य करिष्यामि प्रतिक्रियाम् । अग्रेगूर्न भविष्यामि पूर्वस्नेहद्रुकर्त्तने ॥ २०२ ॥
यथाशक्ति तव स्वामी स करोतु अरेजाररे । वालिनैवं विसृष्ट स गत्वाख्यद्दशमौलये ॥ २०३ ॥
तद्गिरोद्दीपितक्रोधपावकोऽथ दशानन । ससैन्य उद्धुरस्कंधः किष्किन्धामाययौ द्रुतम् ॥ २०४ ॥
सन्नह्य वालिराजोऽपि राजमानो भुजौजसा । तमभ्यागाद्दोष्मतां हि प्रियो युद्धातिथिः खलु ॥ २०५ ॥
तत प्रववृते युद्धमुभयोरपि सैन्ययोः । गण्डशैलागण्डशैलि द्रुमाद्रुमि गदागदि ॥ २०६ ॥
तत्राचूर्यन्त शतशो भ्रष्टपर्पटवद्रथाः । मृत्पिण्डवदभिद्यन्त महान्तो पि मतङ्गजाः ॥ २०७ ॥
कुष्माण्डवदखण्ड्यन्त स्थाने स्थाने तुरङ्गमाः । चञ्चापुरुषवद्भूमावपात्यन्त च पत्तयः ॥ २०८ ॥
तं प्रेक्ष्य प्राणिसंहारं सानुक्रोशः प्लवङ्गराट् । वीरः सत्वरमभ्येत्य जगादेति दशाननम् ॥ २०९ ॥
युज्यते न वधः प्राणिमात्रस्यापि विवेकिनाम् । पञ्चेन्द्रियाणां हस्त्यादिजीवानां वत का कथा ॥ २१० ॥
द्विषज्जयाय यद्येष तथाप्यह्रो न दोष्मताम् । दोष्मन्तो हि नि॰रेव दोर्भिर्विजयकाङ्क्षिणः ॥ २११ ॥

---

१ पूर्वजाः । २ कारणम् । ३ अग्रेसरः । ४ पूर्वस्नेह एव वृक्षस्तस्य च्छेदने । ५ अररे इति क्षुद्रसंबोधनेऽव्ययम् । ६ दढस्कन्धः । ७ अग्निना भ्रष्टाः ये पर्पटाः भाषाया "पापड" तद्वत् । ८ सकरुणः । ९ एष प्राणिवधः ।

त्वं दोष्माञ्छ्लाघ्यकथासि सैन्ययुद्धं विमुञ्च तत् । अनेकप्राणिसंहाराच्चिराय नरकाय यत् ॥ २१२ ॥
एवं सम्बोधितस्तेन दशास्योऽपि हि धर्मवित् । अङ्गेन योद्धुमारेभे सर्वयुद्धविशारदः ॥ २१३ ॥
यद्यदस्त्रं दशग्रीवोऽक्षिपत्तत्तत्कपीश्वरः । स्वास्त्रैः प्रतिजघानोच्चैर्वह्नितेज इवार्यमा ॥ २१४ ॥
सार्पवारुणमुख्यानि मन्त्रास्त्राण्यपि रावणः । मुमोच तानि तार्क्ष्याद्यैरस्त्रैर्वाली जघान च ॥ २१५ ॥
शस्त्रमन्त्रास्त्रवैफल्यक्रुद्धो दशमुखस्ततः । चकर्ष चन्द्रहासासिं महाहिमिव दारुणम् ॥ २१६ ॥
एकशृङ्गो गिरिरिवैकदन्त इव कुञ्जरः । उच्चन्द्रहासोऽधाविष्ट वालिने दशकन्धरः ॥ २१७ ॥
सचन्द्रहासं लङ्केशं सशाखमिव शाखिनम् । वामेन बाहुना वाली लीलयैव समाददे ॥ २१८ ॥
तं कन्दुकमिव न्यस्य विहस्तो हस्तकोटरे । चतुः समुद्रीं बभ्राम क्षणेनापि कपीश्वरः ॥ २१९ ॥
तदानीमेव तत्रेत्य त्रपावनतकन्धरम् । दशकन्धरमुज्झित्वा वालिराजोऽब्रवीदिति ॥ २२० ॥
वीतरागं सर्वविदमाप्तं त्रैलोक्यपूजितम् । विनार्हतं न मे कश्चिन्नमस्योऽस्ति कदाचन ॥ २२१ ॥
अङ्गोत्थितं द्विषन्तं तं धिङ्मानं येन मोहितः । इमामवस्थां प्राप्तोऽसि मत्प्रणामकुतूहली ॥ २२२ ॥
पूर्वोपकारान् स्मरता मया मुक्तोऽसि सम्प्रति । दत्तं च पृथिवीराज्यमखण्डाज्ञं प्रशाधि तत् ॥ २२३ ॥
विजिगीषौ मयि सति तवेयं पृथिवी कुतः । क्व हस्तिनामवस्थानं वने सिंहनिषेविते ॥ २२४ ॥
तदादास्ये परिव्रज्यां शिवसाम्राज्यकारणम् । किष्किन्धायां तु सुग्रीवो राजास्त्वाज्ञाधरस्तव ॥ २२५ ॥
एवमुक्त्वा निजे राज्ये सुग्रीवं न्यस्य तत्क्षणात् । स्वयं गगनचन्द्रर्षिपादमूलेऽग्रहीद्व्रतम् ॥ २२६ ॥

---

१ गारुडाद्यैः । २ व्याकुलः स तं रावणं हस्तकोटरे कक्षायां न्यस्य निक्षिप्य । ३ विजेतुमिच्छति मयि ।

विविधाभिग्रहस्तपस्तत्परः प्रतिमाधरः । ध्यानवान्निर्ममो वाली मुनिर्व्याहरतावनौ ॥ २२७ ॥
वालिभट्टारकस्याथोत्पेदिरे लब्धय क्रमात् । सम्पदः पादपस्येव पुष्पपत्रफलादयः ॥ २२८ ॥
अष्टापदाद्रौ गत्वा च कायोत्सर्गमदत्त सः । लम्बमानभुजो बद्धदोलादण्ड इव द्रुमः ॥ २२९ ॥
कायोत्सर्गं समुत्सृज्य मासान्ते पारणं व्यधात् । तत्सर्गपारणान्येवं भूयोभूयश्चकार सः ॥ २३० ॥
इतश्च दशकण्ठाय सुग्रीवः श्रीप्रभां ददौ । संशुष्यत्प्राक्तनस्नेहतरोः सारणिसन्निभाम् ॥ २३१ ॥
यौवराज्ये तु सुग्रीवो वालिपुत्रं महौजसम् । चन्द्ररश्म्युज्ज्वलयशाश्चन्द्ररश्मिं न्यवीविशत् ॥ २३२ ॥
सुग्रीवप्रतिपन्नाज्ञः[1] श्रीप्रभां तत्सहोदराम् । उपयम्य गृहीत्वा च ययौ लङ्कां दशाननः ॥ २३३ ॥
विद्याधरनरेन्द्राणामन्येषामपि कन्यकाः । उपयेमे रूपवतीर्बलादपि हि रावण ॥ २३४ ॥
नित्यालोकपुरे नित्यालोकविद्याधरेशितुः । कन्यां रत्नावलीं नाम्ना तदोद्वोढुं[2] चचाल स ॥ २३५ ॥
अष्टापदाद्रेरुपरि गच्छतस्तस्य पुष्पकम् । विमानं स्खलितं सद्यो वप्रे बलमिव द्विषाम् ॥ २३६ ॥
न्यग्राङ्गरं महापोतमिव बद्धमिव द्विपम् । विमानं रुद्धगतिकं प्रेक्ष्याकुप्यद्दशाननः ॥ २३७ ॥
को मद्विमानस्खलनाद्विविक्षति यमाननम् । एव वदन् समुत्तीर्य सोऽद्रिमूर्धानमैक्षत ॥ २३८ ॥
अधस्तात् स विमानस्य ददर्श प्रतिमास्थितम् । वालिनं तस्य शैलस्य नवं शृङ्गमिवोत्थितम् ॥ २३९ ॥
ऊचे च रावणः क्रुद्धो विरुद्धोऽद्यापि मय्यसि । व्रतं वहसि दम्भेन जगदेतद्विदम्भिषुः ॥ २४० ॥
कयापि माययाग्रेऽपि मां वाहीक इवावहः । प्राव्राजीः शङ्कमानोऽस्मत्कृतप्रतिकृतं[3] खलु ॥ २४१ ॥

---

१ सुग्रीवेन प्रतिपन्नाज्ञा यस्य सः । २ वोढुमिच्छति । ३ अस्माकं कृतस्य प्रतिक्रियाम् ।

नन्वद्यापि स एवास्मि त एव मम बाहवः । कृतप्रतिकृतं तच्चे प्राप्तकालं करोम्यहम् ॥ २४२ ॥
सचन्द्रहासं मामूढ्वा यथाभ्राम्यस्त्वमब्धिषु । तथा त्वां साद्रिमुत्पाट्य क्षेप्स्यामि लवणार्णवे ॥ २४३ ॥
एवमुक्त्वा विदार्योर्वीमष्टापदगिरेस्तले । प्रविवेश दशग्रीवश्च्युतो दिव इवाशनिः ॥ २४४ ॥
विद्यासहस्रं स्मृत्वा च युगपद्दशकन्धरः । धरं दुर्धरमुद्दध्रे स दोर्बलमदोद्धुरः ॥ २४५ ॥
तडत्तडितिनिर्घोषवित्रस्तव्यन्तरामरम् । झलज्झलितिलोलाब्धिपूर्यमाणरसातलम् ॥ २४६ ॥
खडत्खडितिविभ्रश्यद्ग्रावक्षुण्णवनद्विपम् । कडत्कडितिनिर्भग्ननितम्बोपवनद्रुमम् ॥ २४७ ॥
गिरिं तेनोद्धृतं ज्ञात्वावधिना स महामुनिः । अनेकलब्धिनद्यब्धिरिति दध्यौ विशुद्धधीः ॥ २४८ ॥
॥ त्रिभिर्विशेषकम् ॥

आ कथं मयि मात्सर्यादयमद्यापि दुर्मतिः । अनेकप्राणिसंहारमकाण्डे तनुतेतराम् ॥ २४९ ॥
भरतेश्वरचैत्यं च भ्रंशयित्वैष संप्रति । यतते तीर्थमुच्छेत्तुं भरतक्षेत्रभूषणम् ॥ २५० ॥
अहं च त्यक्तसङ्गोऽस्मि स्वशरीरेऽपि निःस्पृहः । रागद्वेषविनिर्मुक्तो निमग्नः साम्यवारिणि ॥ २५१ ॥
तथापि चैत्यत्राणाय प्राणिनां रक्षणाय च । रागद्वेषौ विनैवैनं शिक्षयामि मनागहम् ॥ २५२ ॥
एवं विमृश्य भगवान् पादाङ्गुष्ठेन लीलया । अष्टापदाद्रेर्मूर्धानं वाली किञ्चिदपीडयत् ॥ २५३ ॥
मध्याह्नदेहच्छायावत् पयोमग्नस्थकूर्मवत् । अभितः सङ्कुचद्गात्रो दशास्यस्तत्क्षणादभूत् ॥ २५४ ॥
अतिभग्नगुरुदोर्दण्डो मुखेन रुधिरं वमन् । अरावीद्रावयन्नुर्वीं रावणस्तेन सोऽभवत् ॥ २५५ ॥

---

१ पर्वतम् । २ खड खड इति शब्देन पतद्भिर्ग्रावभिः क्षुण्णा वनगजा यस्मिंस्तमिति गिरिविशेषणमेव पूर्वोत्तराणि विशेषणान्यपि ।

तस्य चारदनं दीनं श्रुत्वा वाली कृपापरः । तं मुमोचाशु तत्कर्म शिक्षामात्राय न क्रुधा ॥ २५६ ॥
निःसृत्य दशकण्ठोऽथ निःप्रतापोऽनुतापवान् । उपेत्य वालिनं नत्वा व्याजहारेत्युदञ्जलिः ॥ २५७ ॥
भूयो भूयोऽपराधानां कर्ताहं त्वयि निस्त्रपः । उत्कृपस्त्वं च सोढासि महात्मन् शक्तिमानपि ॥ २५८ ॥
मन्ये मयि कृपां कुर्वन्नुर्वी प्रागत्यजः प्रभो । न त्वसामर्थ्यतस्तत्तु नाज्ञासिषमहं पुरा ॥ २५९ ॥
अज्ञानान्नाथ तेनेयं स्वशक्तिस्तोलिता मया । अद्रिपर्यसने यत्नं कलभेनेव कुर्वता ॥ २६० ॥
ज्ञातमन्तरमद्येदं भवतश्चात्मनोऽपि च । शैलवल्मीकयोर्यादृग्यादृग्गरुडभासयो ॥ २६१ ॥
दत्ताः प्राणास्त्वया स्वामिन्मृत्युकोटिं गतस्य मे । अपकारिणि यस्येयं मतिस्तस्मै नमोऽस्तु ते ॥ २६२ ॥
दृढभक्त्येति भाषित्वा क्षमयित्वा च वालिनम् । त्रिश्च प्रदक्षिणीकृत्य नमश्चक्रे दशाननः ॥ २६३ ॥
तादृङ्माहात्म्यमुदिताः साधु साध्विति भाषिणः । उपरिष्टाद्वालिमुनेः पुष्पवृष्टिं व्यधुः सुराः ॥ २६४ ॥
प्रणम्य वालिनं भूयस्तच्छैलमुकुटोपमे । जगाम रावणश्चैत्ये भरतेश्वरनिर्मिते ॥ २६५ ॥
चन्द्रहासादिशस्त्राणि मुक्त्वा सान्तःपुरः स्वयम् । अर्हतामृषभादीनां पूजां सोऽष्टविधां व्यधात् ॥ २६६ ॥
समाकृष्य स्नसां तन्त्रीं प्रमृज्य च दशाननः । महासाहसिको भक्त्या भुजवीणामवादयत् ॥ २६७ ॥
उपवीणयति ग्रामरागरम्यं दशानने । गायत्यन्तःपुरे चास्य सप्तस्वरमनोरमम् ॥ २६८ ॥
चैत्यवन्दनयात्रायै धरणः पन्नगेश्वरः । तत्रायययावर्हतश्च पूजापूर्वमवन्दत ॥ २६९ ॥ युग्मम् ॥
अर्हद्गुणमयैर्गीतैः करणध्रुवकादिभिः । गायन्तं वीणया प्रेक्ष्य रावणं धरणोऽब्रवीत् ॥ २७० ॥

१ अनुताप पश्चात्तापस्तद्वान् । २ निर्लज्ज । ३ अधिकदयावान् । ४ भासः गृध्रः । ५ मृत्योरग्रम् । ६ स्नायुम् । ७ वीणां वादयति सति ।

अर्हद्गुणस्तुतिमयं साधु गीतमिदं ननु । निजभावानुरूपं ते तेन तुष्टोऽस्मि रावण ॥ २७१ ॥
अर्हद्गुणस्तुतेर्मुख्यं फलं मोक्षस्तथाप्यहम् । अक्षीणवासनस्तुभ्यं किं यच्छामि वृणीष्व भो ॥ २७२ ॥
रावणोऽप्यभ्यधादेवं देवदेवगुणस्तवे । युक्तं तुष्टोऽसि नागेन्द्र स्वामिभक्तिर्हि सा तव ॥ २७३ ॥
यथा तव ददानस्य स्वामिभक्तिः प्रकृष्यते । तथा ममाददानस्य सा काममपकृष्यते ॥ २७४ ॥
भूयो प्युवाच नागेन्द्रः साधुमानद रावण । विशेषतोऽस्मि तुष्टस्ते निराकाङ्क्षतयानया ॥ २७५ ॥
उक्त्वेत्यमोघविजयां शक्तिं रूपविकारिणीम् । सो दाद्विधा रावणाय जगाम च निजाश्रयम् ॥ २७६ ॥
तीर्थनाथान्नमस्कृत्य नित्यालोकपुरेऽगमत् । ऊढ्वा रत्नावलीं लङ्कामाजगाम दशाननः ॥ २७७ ॥
वालिनोऽपि तदोत्पेदे केवलज्ञानमुज्ज्वलम् । केवलज्ञानमहिमा विदधे च सुरासुरैः ॥ २७८ ॥
क्रमेण कर्मणां सोऽथ भवोपग्राहिणां क्षयात् । सिद्धानन्तचतुष्टोऽगात् पदं तदपुनर्भवम् ॥ २७९ ॥
इतश्च वैताढ्यगिरौ पुरे ज्योतिःपुराभिधे । बभूव नाम्ना ज्वलनशिखो विद्याधरेश्वरः ॥ २८० ॥
तस्याभूच्छ्रीमती देवी श्रीमती रूपसंपदा । तस्या च दुहिता जज्ञे तारा तारविलोचना ॥ २८१ ॥
तामेकदा तु चक्राङ्कविद्याधरनृपात्मजः । ददर्श साहसगतिः स्मरार्तः सहसाप्यभूत् ॥ २८२ ॥
ज्वलनं याचयाञ्चक्रे तां साहसगतिर्नरैः । वानरेन्द्रश्च सुग्रीवो रत्ने हि बहवोऽर्थिनः ॥ २८३ ॥
अभिजातौ द्वावपीमौ रूपवन्तौ महौजसौ । तत्कस्मै दीयते कन्या पप्रच्छ ज्ञानिनं पिता ॥ २८४ ॥
अल्पायुः साहसगतिर्दीर्घायुश्च कपीश्वरः । इति नैमित्तिकेनोक्ते सुग्रीवाय ददौ स ताम् ॥ २८५ ॥

---

१ साधूनां मानं ददातीति तत्सम्बोधनम् । २ लक्ष्मीमती । ३ दीर्घलोचना । ४ कुलिनौ ।

अभिलाषविप्रलम्भात् साहसोऽपि दिने दिने । अङ्गारचुम्बित इव न प्राप क्वापि निर्वृतिम् ॥ २८६ ॥
तारायां रममाणस्य सुग्रीवस्य बभूवतु । द्वावङ्गदजयानन्दावङ्गजौ दिग्गजोर्जितौ ॥ २८७ ॥
स चापि साहसगतिस्तारायामनुरागवान् । मन्मथोन्मथ्यमानात्मा चिन्तयामासिवानिदम् ॥ २८८ ॥
चुम्बिष्यामि कदा तस्या मृगशावकचक्षुषः । पक्वबिम्बाधरदलच्छदनं वदनाम्बुजम् ॥ २८९ ॥
कदा स्प्रक्ष्याम्यहं तस्या कुचकुम्भौ स्वपाणिना । कदा च तौ करिष्यामि गाढालिङ्गनवामनौ ॥ २९० ॥
बलेनापि च्छलेनापि तां हर्तास्मीति चिन्तयन् । सस्मार शेमुषीं विद्यां रूपस्य परिवर्तिनीम् ॥ २९१ ॥
गत्वा च क्षुद्रहिमवद्गिरौ स्थित्वा गुहान्तरे । तां साधयितुमारेभे चक्राङ्कनृपनन्दनः ॥ २९२ ॥
इतश्च पुर्यां लङ्काया दिग्यात्रायै दशाननः । विकर्तनः पूर्वशैलतटादिव विनिर्ययौ ॥ २९३ ॥
विद्याधरान्नरेन्द्रांश्च द्वीपान्तरनिवासिनः । वशीकृत्य स पातालङ्कां नाम पुरीं ययौ ॥ २९४ ॥
तत्र चन्द्रणखाभर्त्रा खरेणांखरभाषिणा । प्राभृतैर्भृत्यकेनेव निभृतं सोऽभ्यपूज्यत ॥ २९५ ॥
रावणेन सहाचालीत् खर इन्द्रजिगीषया । विद्याधराणां सहस्रैश्चतुर्दशभिरावृतः ॥ २९६ ॥
तत्र सुग्रीवराजोऽपि रक्षोराजस्य दोष्मतः । अन्वचालीत्ससैन्योऽपि वायोरिव विभावसुः ॥ २९७ ॥
अनेकपृतनाच्छन्नरोदसीको दशानन । पयोराशिरिवोद्भ्रान्त प्रययावस्खलद्गतिः ॥ २९८ ॥
कूजन्मरालमालाभिरावद्धरसनामिव । पुलिनोर्व्यां विपुलया नितम्बेनेव शोभिताम् ॥ २९९ ॥
अलकानिव बिभ्राणा तरङ्गैरतिभङ्गुरैः । कटाक्षानिव मुञ्चन्तीं शफरोद्वर्तनैर्मुहुः ॥ ३०० ॥

१ अभिलाषविरहात् । २ सूर्यः । ३ मृदुभाषिणा । ४ भृत्येनेव । ५ अग्निः । ६ रसना कटिमेखला ।

कामिनीमिव चतुरां रेवा नाम तरङ्गिणीम् । विन्ध्यशैलादुत्तरन्तीं ददर्शाथ दशाननः ॥ ३०१ ॥

॥ त्रिभिर्विशेषकम् ॥

रोधस्युवास रेवायाः ससैन्यो दशकंधरः । सिन्धुराधिपतिर्यूथसमावृत इवोद्धुरः ॥ ३०२ ॥
सोऽथ तस्यां कृतस्नानो वसानो धौतवाससी । अर्हद्बिम्बं रत्नमयं न्यस्य पट्टे मणीमये ॥ ३०३ ॥
रेवाम्भोभिः स्नापयित्वा तदम्भोजविकासिभिः । समारेभे पूजयितुं समाधिसुदृढासनः ॥ ३०४ ॥

॥ युग्मम् ॥

ततश्च पूजाव्यग्रस्य दशग्रीवस्य तत्क्षणं । अकस्मादर्णवेलेव महापूरः समाययौ ॥ ३०५ ॥
उन्मूलयन्मूलतोऽपि गुल्मानिव महीरुहान् । तटीनाम्रलतानामप्युपरि प्रासरत्पयः ॥ ३०६ ॥
आस्फोटयस्तटाघातैर्स्तटीस्तटनिर्यान्त्रिता । विष्वक्छोत्कपुटानीवाकुलिता वीचिपङ्क्तयः ॥ ३०७ ॥
रोधोगर्तान्महतोऽपि पातालकुहरोपमान् । स पूरः पूरयामास भक्ष्यैः कुक्षिम्भरीनिव ॥ ३०८ ॥
समन्तादन्तरीपाणि स्थगयामास सा नदी । ज्योतिश्चक्रविमानानि चन्द्रज्योत्स्नेव शारदी ॥ ३०९ ॥
मत्स्यानुच्छादयामास प्रोच्छलन्निम्नमहोर्मिभिः । पूरो महावात इव वेगवान् द्रुमपल्लवान् ॥ ३१० ॥
तत्कालं सावकरं पूरवारि रयागतम् । अर्हत्पूजामपानैषीद्दशकण्ठस्य कुर्वतः ॥ ३११ ॥
तेन पूजापहारेण शिरश्छेदाधिकेन सः । जातकोपो दशग्रीवः साक्षेपमिदमभ्यधात् ॥ ३१२ ॥
अरे रे केन वारीदं दुर्वारमतिवेगतः । अर्हत्पूजान्तरायाय मुक्तमकारणारिणा ॥ ३१३ ॥

१ तीरे। २ गजनायक। ३ तृणगुच्छान्। ४ नाव। ५ द्वीपानि। ६ छादयामास। ७ सपदम्। ८ अकारणशत्रुणा।

परस्तादस्ति किं कोऽपि मिथ्यादृष्टिर्नराधिपः । किं वा विद्याधरः कश्चिदसुरो वा सुरोऽथवा ॥ ३१४ ॥
अथ विद्याधरः कश्चिदाचख्यौ दशमौलये । इत पुरस्तादस्त्युच्चैर्देव माहिष्मती पुरी ॥ ३१५ ॥
तस्यां नाम्ना सहस्रांशुः सहस्रांशुरिवापरः । सहस्रशो नृपैः सेव्यः पार्थिवोऽस्ति महाभुजः ॥ ३१६ ॥
सेतुबन्धेन रेवायां वारिबन्धं व्यधादसौ । जलक्रीडोत्सवकृते किमसाध्यं महौजसाम् ॥ ३१७ ॥
समं राज्ञीसहस्रेण सहस्रांशुरसावितः । वशाभिर्वरदन्तीव सुखं क्रीडति वारिभिः ॥ ३१८ ॥
आत्मरक्षा लक्षसङ्ख्या द्वयोरपि हि तीरयो । संवर्मिता उदस्त्रांश्च तिष्ठन्त्यस्य हरेरिव ॥ ३१९ ॥
अदृष्टपूर्वोऽवष्टम्भः कोऽप्यस्याप्रतिमौजसः । शोभामात्र यथा तेऽपि यदि वा कर्मसाक्षिण ॥ ३२० ॥
क्षुभितं जलदेवीभिर्यादोभिश्च पलायितम् । जलक्रीडाकराघातैरूर्जितैस्तस्य दोष्मतः ॥ ३२१ ॥
इदमत्यन्तरुद्धत्वात् स्त्रीसहस्रयुतेन च । तेन पर्यस्यमाणत्वात् काममुल्लुठितं पयः ॥ ३२२ ॥
रोदसी प्लावयित्वोभे वेगाद्वारीदमुद्धतम् । इह ते प्लावयामास देवपूजां दशानन ॥ ३२३ ॥
पश्यैतानि च तत्स्त्रीणां निर्माल्यानि दशानन । रेवातीरे तरन्त्युच्चैस्तदर्भिज्ञानमादिमम् ॥ ३२४ ॥
तदङ्गनाजनस्याङ्गरागैर्मृगमदादिजैः । इदमत्याविलं वारि दुर्वारं वीरवारण ॥ ३२५ ॥
इति तद्गिरमाकर्ण्य प्राप्याहुतिमिवानलः । उद्दिदीपेऽधिकं चैवमुवाच च दशाननः ॥ ३२६ ॥
अरे मुमूर्षुणा तेन वारिभि स्वाङ्गदूषितै । दूषिता देवपूजेयं देवदूष्यमिवाञ्जनै ॥ ३२७ ॥
तद्यात राक्षसभटास्तं पापं भटमानिनम् । बद्धा समानयत भो मत्स्यमानायिका इव ॥ ३२८ ॥

---

१ ऊर्ध्वशस्त्रा । २ प्रारम्भः । ३ मुच्यमानत्वात् । ४ चिन्हम् । ५ अतिपङ्किलम् । ६ धीवराः ।

उच्चैस्तेनैवमादिष्टा अनुचरास्ते दधाविरे । लक्षशो राक्षसभटा रेवोमय इवोद्भटा ॥ ३२९ ॥
तीरस्थितै सहस्रांशुसैनिकै सह ते रणम् । गजा वनान्तरगजैरिव चक्रुर्निशाचरा ॥ ३३० ॥
विद्याभिर्मोहयन्तस्ते भूमिष्ठांस्तान्नभ स्थिता । उपद्रुद्रुवुरम्भोदा शरभान् करकैरिव ॥ ३३१ ॥
स्वानुपद्रूयमाणांस्तु प्रेक्ष्य क्रोधधुताधर । चलत्पताकस्तनाध्यासयत् मयसीनिजा ॥ ३३२ ॥
ऐरावण सुरसिन्धोरिव रथात्त उच्चकै । निर्जगाम सहस्रांशुरधिज्य च धनुर्व्यधात् ॥ ३३३ ॥
बाणैर्विद्रावयामास रक्षोवीरान्नभ स्थितान् । सहस्रांशुर्महाबाहुस्तूलपूलानिवानिल ॥ ३३४ ॥
व्यावृत्तांस्तान् रणात्प्रेक्ष्य सक्रुद्धो रावण स्वयम् । उपतस्थे सहस्रांशुमभिवर्षञ्छिलीमुखान् ॥ ३३५ ॥
द्वावप्यमर्षणौ द्वावप्यूर्जितौ द्वावपि स्थिरौ । विविधैरायुधैर्युद्ध विदधाते चिराय तौ ॥ ३३६ ॥
दोर्वीर्येणाविजय्य त ज्ञात्वा जग्राह रावण । विद्यया मोहयित्वेभमिव माहिष्मतीपतिम् ॥ ३३७ ॥
त प्रशसन्महावीर्य जित्वापि जितमन्यम । अनुत्सिक्तो दशग्रीव स्कन्धावारेऽनयत्स्वयम् ॥ ३३८ ॥
सभायां यावदासीनस्तस्थौ हृष्टो दशानन । चारणश्रमणस्तावच्छतबाहु समाययौ ॥ ३३९ ॥
सिंहासनात्समुत्थाय त्यक्त्वा च मणिपादुके । अभ्युत्तस्थौ दशास्यस्त पयोदमिव बर्हिण ॥ ३४० ॥
पपात पादयोस्तस्य पञ्चाङ्गस्पृष्टभूतल । रावणो मन्यमानस्तमर्हद्गणधरोपमम् ॥ ३४१ ॥
आसने चासयामास त मुनि स्वयमर्पिते । प्रणम्य च दशग्रीव स्वयमुर्व्यामुपाविशत् ॥ ३४२ ॥

---

१ अष्टापदमृगान्। २ बाणान्। ३ विजेतुमशक्यम्। ४ आत्मान जितम्मन्येनेति यावत् मन्यत इति तथा। ५ गर्वरहितः। ६ मयूर।

विश्वास इव मूर्तिस्थो विश्वाश्वासनबान्धवः । धर्मलाभाशिषं तस्मै सोऽदात् कल्याणमातरम् ॥ ३४३ ॥
बद्ध्वाञ्जलिं रावणेन समागमनकारणम् । मुनिश्रेष्ठः परिपृष्टोऽभाषिष्टाद्भुतया गिरा ॥ ३४४ ॥
शतबाहुरहं नाम्ना माहिष्मत्यां नृपोऽभवम् । भववासादितो भीतः शार्दूलः पावकादिव ॥ ३४५ ॥
सहस्रकिरणे राज्यभारोप्य निजनन्दने । मोक्षाध्वस्यन्दनप्रायमहं व्रतमशिश्रियम् ॥ ३४६ ॥
इत्यर्धोक्ते दशग्रीवो नमद्ग्रीवोऽब्रवीदिति । किमसौ पूज्यपादानामङ्गजन्मा महाभुजः ॥ ३४७ ॥
ओमित्युक्ते मुनीन्द्रेण निजगाद दशाननः । दिग्जयाय क्रमेणाहमिहागच्छं नदीतटे ॥ ३४८ ॥
दत्तावासस्तटेऽपुष्पैर्जिनार्चां विकचाम्बुजैः । अर्चिरुं यावदेकाग्रमानसस्तन्मयोऽभवम् ॥ ३४९ ॥
अमुना तावदुन्मुक्तैर्निजस्नानमलीमसैः । वारिभिः प्लाविता पूजा तेनाकार्षमिदं क्रुधा ॥ ३५० ॥
अज्ञानादमुनाप्येतत् कृतं मन्ये महात्मना । त्वत्सुनुरेष किं कुर्यादर्हदाशातनां क्वचित् ॥ ३५१ ॥
एवमुक्त्वा सहस्रांशुं नत्वानैषीद्दशाननः । लज्जानम्राननः सोऽपि ननाम पितरं मुनिम् ॥ ३५२ ॥
रावणस्तं बभाणैवं भ्राता मे त्वमतः परम् । तवेवायं ममाप्येष शतबाहुमुनिः पिता ॥ ३५३ ॥
गच्छ शाधि निजं राज्यं गृहाणान्यामपि क्षितिम् । अस्माकं हि त्रयाणां त्वं चतुर्थोऽस्यंशभाक् श्रियः ॥३५४॥
एवमुक्तश्च मुक्तश्च सहस्रांशुरदोऽवदत् । न हि राज्येन मे कृत्यं वपुषा वाप्यतः परम् ॥ ३५५ ॥
पित्राश्रितं श्रयिष्यामि व्रतं संसारनाशनम् । अयं हि पन्थाः साधूनां निर्वाणमुपतिष्ठते ॥ ३५६ ॥
इत्युदीर्य दशास्याय समर्प्य तनयं निजम् । व्रतं चरमदेहः स पितृपादान्तिकेऽग्रहीत् ॥ ३५७ ॥

१ मुनीनां प्रष्ठ-श्रेष्ठ । २ मोक्षम् ।

अनरण्यनरेन्द्राय वाचिकेन तदैव स । स्वयमाचां परिव्रज्या कथयामास सौहृदात् ॥ ३५८ ॥
सोऽप्ययोध्याधिपो दध्यौ प्रियमित्रेण तेन मे । सङ्केत एवमभवदादेय युगपद्व्रतम् ॥ ३५९ ॥
स्वप्रतिज्ञामिति स्मृत्वा राज्यं दशरथाय स । दत्वा स्वसूनवे सत्यघनो व्रतमुपाददे ॥ ३६० ॥
शतबाहुसहस्रांशू वन्दित्वर्षी दशानन । सहस्राक्षो सुत राज्ये न्यस्य चाचलदम्बरे ॥ ३६१ ॥
तदा च नारदमुनिर्यष्टिघातादिजर्जर । अन्याय इति पूत्कुर्वन्नित्यभाषिष्ट रावणम् ॥ ३६२ ॥
राजन् राजपुरेऽमुष्मिन्मरुत्तो नाम भूपति । मिथ्यादृगस्ति कुर्वाणि क्रतु दुर्द्विजवासित ॥ ३६३ ॥
यज्ञे वधाय चानीतान् सौनिकैरिव तद्द्विजैः । पशूनारटतोऽपश्य पाशबद्धाननागस ॥ ३६४ ॥
ततो व्योम्नोऽवतीर्याहं मरुत्त ब्राह्मणावृतम् । अहो किमिदमारब्धमित्यपृच्छं कृपापर ॥ ३६५ ॥
अथोवाच मरुत्तोऽपि यज्ञोऽयं ब्राह्मणोदित । अन्तर्वेदीह होतव्या पशवो देवतृप्तये ॥ ३६६ ॥
अयं खलु महाधर्म कीर्तित स्वर्गहेतवे ।[1] यक्ष्यामि पशुभिर्यज्ञं तदेभिरद्य भो ॥ ३६७ ॥
ततस्तस्याहमित्याख्य यपुर्वेदिरुदीरिता । आत्मा यष्टा तपो वह्निर्ज्ञानं सर्पि प्रकीर्तितम् ॥ ३६८ ॥
कर्माणि समिध क्रोधादयस्तु पशवो मता । सत्य यूप सर्वप्राणिरक्षण दक्षिणा पुन ॥ ३६९ ॥
त्रिरत्नी तु त्रिवेदीयमिति वेदोदित क्रतु । कृतो योगविशेषेण मुक्तेर्भवति साधनम् ॥ ३७० ॥
क्रव्यादतुल्या ये कुर्युर्यज्ञं छागवधादिना । ते मृत्वा नरके घोरे तिष्ठेयुर्दु खिनश्चिरम् ॥ ३७१ ॥
उत्पन्नोऽस्युत्तमे वंशे बुद्धिमानृद्धिमानसि । राजन् व्याधोचितादस्मान्निवर्तस्व तदेनस ॥ ३७२ ॥

---

१ चाण्डालः । २ निरपराधिनः । ३ यज्ञकर्ता । ४ ज्ञानदर्शनचारित्राणि । ५ राक्षसतुल्या ।

यदि प्राणिवधेनापि स्वर्गो जायेत देहिनाम्। तच्छून्यो जीवलोकोऽयमल्पैरपि दिनैर्भवेत् ॥ ३७३ ॥
इदं मम वचः श्रुत्वा यज्ञाग्नय इव द्विजाः। क्रुधा ज्वलन्तः प्रोचस्थुर्दण्डपट्टकपाणयः ॥ ३७४ ॥
ततस्तैस्ताड्यमानेन मया शप्तोऽसि नश्यता। नदीपूराभिभूतेनान्तरीपमिव रावण ॥ ३७५ ॥
निरागसो वध्यमानांस्तच्चैर्नृपशुभिः पशून्। त्रायस्व त्रात एवाहं पुनस्त्वदवलोकनात् ॥ ३७६ ॥
ततो विमानादुत्तीर्य दशास्यस्तद्दिदृक्षया। आनर्चे भूभुजा तेन पाद्यसिंहासनादिना ॥ ३७७ ॥
क्रुद्धो मरुत्तभूपालं जगादैवं दशाननः। अरे किमेष क्रियते नरकाभिमुखैर्मखः ॥ ३७८ ॥
धर्मः प्रोक्तो ह्यहिंसातः सर्वज्ञैस्त्रिजगद्धितैः। पशुहिंसात्मकाद्यज्ञात् स कथं नाम जायताम् ॥ ३७९ ॥
लोकद्वयारिं तद्यज्ञ मा कार्षीश्चेत्करिष्यसि। मद्गुप्ताविह ते वासः परत्र नरके पुनः ॥ ३८० ॥
विससर्ज मखं सद्यो मरुत्तनृपतिस्ततः। अलङ्घ्या रावणाज्ञा हि विश्वस्यापि भयङ्करा ॥ ३८१ ॥
अमी पशुवधात्मानः कुतः सञ्जज्ञिरेऽध्वराः। इति पृष्टो दशास्येन निजगादेति नारदः ॥ ३८२ ॥
अस्ति च दिक्षु विख्याता नाम्ना शुक्तिमती पुरी। शुक्तिमत्याख्यया नद्या नर्मसख्येव शोभिता ॥ ३८३ ॥
गतेष्वनेकभूपेषु सुव्रतान्मुनिसुव्रतात्। अभिचन्द्रोऽभवत्तस्यां राजा राज्यभृतां वरः ॥ ३८४ ॥
अभिचन्द्रस्य तनयो वसुरित्यभिधानतः। अजायत महाबुद्धिः प्रसिद्धः सत्यवाक्तया ॥ ३८५ ॥
पाश्च क्षीरकदम्बस्य गुरोः पर्वतकः सुतः। राजपुत्रो वसुश्चाहं चापठामत्रयोऽपि हि ॥ ३८६ ॥
सुप्तेष्वस्मासु सदनोपरि पाठश्रमान्निशि। चारणश्रमणौ व्योम्नि यान्तावित्यूचतुर्मिथः ॥ ३८७ ॥

---

१ मम कारागृहे। २ यज्ञम्। ३ सत्यवादित्वेन। ४ गच्छन्तौ।

एषामेकतम स्वर्ग गमिष्यत्यपरो पुन । नरक यास्यतस्तत्वाश्रौषीत्क्षीरकदम्बक ॥ ३८८ ॥
तच्छ्रुत्वा चिन्तयामास खिन्न क्षीरकदम्बक । मय्यध्यापके शिष्यौ यास्यतो नरक हहा ॥ ३८९ ॥
एष्य को यास्यति स्वर्ग नरक कौ च यास्यत । जिज्ञासुरित्युपाध्यायोऽस्मास्तीन् युगपदाह्वयत् ॥३९० ॥
समर्प्य गुरुरस्माकमेकैक पिष्टकुक्कुटम् । उवाचामी तत्र वध्या यत्र कोऽपि न पश्यति ॥ ३९१ ॥
वसुपर्वतकौ तत्र गत्वा शून्यप्रदेशयो । आत्मनीनां गतिमिव जघ्नतु पिष्टकुक्कुटौ ॥ ३९२ ॥
दवीयसि प्रदेशे तु गत्वाह नगराद्बहि । स्थित्वा च विजने देशे दिश प्रेक्ष्येत्यतर्कयम् ॥ ३९३ ॥
गुरुपादैरयस्तावदादिष्ट वत्स यत्तया । वध्योऽय कुक्कुटस्तत्र यत्र कोऽपि न पश्यति ॥ ३९४ ॥
असौ पश्यत्यह पश्याम्यमी पश्यन्ति खेचरा । लोकपालाश्च पश्यन्ति पश्यन्ति ज्ञानिनोऽपि हि ॥ ३९५ ॥
नास्त्येव स्थानमपि तद्यत्र कोपि न पश्यति । तात्पर्यं तद्गुरुगिरा न वध्य खलु कुक्कुट ॥ ३९६ ॥
गुरुपादा दयावन्त सदा हिंसापराङ्मुखा । अस्मत्प्रज्ञा परिज्ञातुमेतन्निश्चयमादिशन् ॥ ३९७ ॥
विमृश्यैवमहत्वैव कुक्कुट चाहमागमम् । कुक्कुटाहनने हेतु गुरोर्व्यज्ञपय च तम् ॥ ३९८ ॥
स्वर्ग यास्यत्यय तावदिति निश्चित्य गौरवात् । आलिङ्गितोऽह गुरुभि साधु साध्विति भाषिभि ॥३९९॥
वसुपर्वतकौ पश्चादागत्यैव शशसतु । निहतौ कुक्कुटौ तत्र यत्र कोऽपि न पश्यति ॥ ४०० ॥
अपश्यत युवामादावपश्यन् खेचरादय । कथ हतौ कुक्कुटौ रे पापावित्यशपद्गुरु ॥ ४०१ ॥
तत खेदादुपाध्यायो दध्यौ विख्यातपाठधी । मुधा मेऽध्यापनक्लेशो वसुपर्वतयोरभूत् ॥ ४०२ ॥

१ आत्मने हिताम् । २ अतिदूरे । ३ असौ कुक्कुट । ४ निश्चितम् निश्चयेनेति यावत् ।

गुरूपदेशो हि यथापात्रं पारंणमोदेह । अश्रान्म्यः स्थानमेदेन मुक्तालवणतां व्रजेत् ॥ ४०३ ॥
प्रियः पर्वतकः पुत्रः पुत्राद्प्यधिको वसुः । नरकं यास्यतस्तस्माद्गृहवासेन किं मम ॥ ४०४ ॥
निर्वेदादित्युपाध्यायः प्रव्रज्यामग्रहीत्तदा । तत्पदं पर्वतोऽध्यास्त व्याख्याक्षणविचक्षणः ॥ ४०५ ॥
भूत्वा गुरोः प्रसादेन सर्वशास्त्रविशारदः । पुनरेव निजं स्थानमहं तु गतवांस्तदा ॥ ४०६ ॥
नृपचन्द्रोऽभिचन्द्रोऽपि जग्राह समये व्रतम् । ततश्चाभूद्वसू राजा वासुदेवसमः श्रिया ॥ ४०७ ॥
सत्यवादीति स प्राप प्रसिद्धिं पृथिवीतले । तां प्रसिद्धिमपि त्रातु सत्यमेव जगाद सः ॥ ४०८ ॥
अथैकदा मृगयुणा मृगाय मृगयाजुषा । चिक्षिपे विशिखो विन्ध्यनितम्बे सोऽन्तरास्खलत् ॥ ४०९ ॥
इषुस्खलनहेतुं स ज्ञातुं तत्र ययौ ततः । आकाशस्फटिकशिलामज्ञासीत् पाणिना स्पृशन् ॥ ४१० ॥
स दध्याविति मन्येऽस्यां संक्रान्तः परतश्चरन् । भूमिच्छायेव शीतांशावदर्शि हरिणो मया ॥ ४११ ॥
पाणिस्पर्शं विना नेयं सर्वथाप्युपलक्ष्यते । अवश्यं तदसौ योग्या वसोर्वसुमतीपतेः ॥ ४१२ ॥
रहो व्यज्ञपयद्राज्ञे गत्वा तां मृगयुः शिलाम् । हृष्टो जग्राह राजापि ददौ चास्मै महद्धनम् ॥ ४१३ ॥
स तया घटयामास च्छन्नं स्वासनवेदिकाम् । तच्छिल्पिनोऽघातयच्च नात्मीयाः कस्यचिन्नृपाः ॥ ४१४ ॥
तस्यां सिंहासनं वेदौ चेदीशस्य निवेशितम् । सत्यप्रभावादाकाशस्थितमित्यबुधज्जनः ॥ ४१५ ॥
सत्येन तुष्टाः सान्निध्यमस्य कुर्वन्ति देवताः । एवमूर्जस्विनी तस्य प्रसिद्धिर्व्यानशे दिशः ॥ ४१६ ॥
तया प्रसिद्ध्या राजानो भीतास्तस्य वशंययुः । सत्या वा यदि वा मिथ्या प्रसिद्धिर्जयिनी नृणाम् ॥४१७॥

१ व्याधेन । २ अन्यत- ।

तत्रान्यदाहमभ्यागामद्राक्षमथ पर्वतम् । व्याख्यानयन्तमृग्वेदं शिष्याणां शेमुषीजुषाम् ॥ ४१८ ॥
अजैर्यष्टव्यमित्यत्र मेषैरित्युपदेशकम् । तमवोचमहं भ्रातर्भ्रान्त्या किमिदमुच्यते ॥ ४१९ ॥
त्रिवार्षिकाणि धान्यानि न हि जायन्त इत्यजाः । व्याख्याता गुरुणास्माकं व्यस्मार्षीः केन हेतुना ॥४२०॥
ततः पर्वतकोऽवादीदिदं तातेन नोदितम् । उदिता किं त्वजा मेषास्तथैवोक्ता निघण्टुषु ॥ ४२१ ॥
अथोचमहमप्येवं शब्दानामर्थकल्पना । मुख्या गौणी च तत्रेह गौणीं गुरुरचीकथत् ॥ ४२२ ॥
गुरुर्धर्मोपदेष्टैव श्रुतिर्धर्मात्मिकैव च । द्वयमप्यन्यथा कुर्वन्मित्र मा पापमर्जय ॥ ४२३ ॥
साक्षेपं पर्वतोऽजल्पदजान्मेषान् गुरुर्जगौ । गुरूपदेशशब्दार्थोल्लङ्घनाद्धर्ममर्जसि ॥ ४२४ ॥
मिथ्याभिमानवाचो हि न स्युर्दण्डभयान्नृणाम् । स्वपक्षस्थापने तेन जिह्वाच्छेदपणोऽस्तु नः ॥ ४२५ ॥
प्रमाणमुभयोरत्र सहाध्यायी वसुर्नृपः । प्रत्यश्रौषमहं तच्च न क्षोभः सत्यभाषिणाम् ॥ ४२६ ॥
रहः पर्वतसूरूचेऽम्बा गृहकर्मरताप्यहम् । अजास्त्रिवार्षिकं धान्यमित्यश्रौषं भवत्पितुः ॥ ४२७ ॥
जिह्वाच्छेदपणोऽकार्यि यद्दर्पात्तदसाम्प्रतम् । अविमृश्य विधातारो भवन्ति विपदां पदम् ॥ ४२८ ॥
अवदत्पर्वतोऽम्बैवं कृतं तावदिदं मया । यथा तथा कृतस्यास्य करणं न हि विद्यते ॥ ४२९ ॥
साथ पर्वतकापायपीडया हृदि शल्यिता । वसुराजमुपयाय पुत्रार्थे क्रियते न किम् ॥ ४३० ॥
ऊचे क्षीरकदम्बोऽद्य यदम्ब त्वमसीक्षिता । किं करोमि प्रयच्छामि किं वेत्यभिदधे वसुः ॥ ४३१ ॥
सावादीद्दीयतां पुत्रभिक्षा मम महीपते । धनधान्यैः किमन्यैर्मे विना पुत्रेण पुत्रक ॥ ४३२ ॥

---

१ बुद्धियुजाम् । २ कोशेषु । ३ [illegible] ।

वसुरूचे ततो मेऽम्ब पाल्यः पूज्यश्च पर्वतः । गुरुवद्गुरुपुत्रेऽपि वर्तितव्यमिति श्रुतेः ॥ ४३३ ॥
कस्याद्य पत्रमुत्क्षिप्तं कालेनाकालरोषिणा । को जिघांसुर्भ्रातरं मे ब्रूहि मातः किमातुरा ॥ ४३४ ॥
अजव्याख्यानवृत्तान्तं स्वपुत्रस्य पणं च तम् । त्वं प्रमाणं कृतश्चासीत्याख्यायार्थयते स्म सा ॥ ४३५ ॥
कुर्वाणो रक्षणं भ्रातुरजान्मेषानुदीरय । प्राणैरप्युपकुर्वन्ति महान्तः किं पुनर्गिरा ॥ ४३६ ॥
अवोचत वसुर्मातर्मिथ्या वच्मि वचः कथम् । प्राणात्ययेऽपि शंसन्ति नासत्यं सत्यभाषिणः ॥ ४३७ ॥
अन्यदप्यभिधातव्यं नासत्यं पापभीरुणा । गुरुवागन्यथाकारे कूटसाक्ष्ये च का कथा ॥ ४३८ ॥
बहुकुरु गुरोः सूनुं यद्वा सत्यव्रताग्रहम् । तया सरोषमित्युक्तस्तद्वचोऽमंस्त पार्थिवः ॥ ४३९ ॥
ततः प्रमुदिता क्षीरकदम्बगृहिणी ययौ । अथाव पर्वतोऽहं च वसुराजस्य पर्षदि ॥ ४४० ॥
सभायाममिलन् सभ्या माध्यस्थ्यगुणशालिनः । वादिनां संदसद्वादक्षीरनीरसितच्छदाः ॥ ४४१ ॥
आकाशस्फटिकशिलावेदिसिंहासनं वसुः । समापतिरलञ्चक्रे नभस्तलमिवोडुपः ॥ ४४२ ॥
ततः पर्वतकोऽहं च व्याख्यायपक्षं निजं निजम् । अशंसाव नरेन्द्राय सत्यं ब्रूहीति भाषिणौ ॥ ४४३ ॥
विप्रवृद्धैरथोचे स विवादस्त्वयि तिष्ठते । प्रमाणमनयोः साक्षी त्वं रोदस्योरिवार्यमा ॥ ४४४ ॥
घटप्रभृतिदिव्यानि वर्तन्ते हन्त सत्यतः । सत्याद्वर्षति पर्जन्यः सत्यात् सिध्यन्ति देवताः ॥ ४४५ ॥
त्वयैव सत्ये लोकोऽयं स्थाप्यते पृथिवीपते । त्वामिहार्थे ब्रूमहे किं ब्रूहि सत्यव्रतोचितम् ॥ ४४६ ॥
वचः श्रुत्वेति तत्सत्यप्रसिद्धिं स्वां निरस्य च । अजान्मेषान् गुरुर्व्याख्यदिति साक्ष्यं वसुर्व्यधात् ॥ ४४७ ॥

१ सत्यासत्यौ च तौ वादौ च तावेव दुग्धजले तयो पृथक्करण इति शेष. सितच्छदा हंसाः ।

असत्यवचसा तस्य क्रुद्धास्तत्रैव देवता । दल्यामासुराकाशस्फटिकासनवेदिकाम् ॥ ४४८ ॥
वसुर्वसुमतीनाथस्ततो वसुमतीतले । पपात सद्यो नरकपात प्रस्तावयन्निव ॥ ४४९ ॥
देवताभिरसत्योक्तिकुपिताभिर्निपातित । जगाम नरक घोर नरनाथो वसुस्तत ॥ ४५० ॥
वसो सुता पृथुवसुश्चित्रवसुश्च वासव । शक्रो विभावसुर्विश्वावसु सूरश्च सप्तम ॥ ४५१ ॥
अष्टमश्च महाशूरो निषण्णा पैतृके पद । देवताभिरहन्यन्त तत्कालमपि कोपत ॥ ४५२ ॥
सुवसुर्नवम सूनुर्नष्ट्वा नागपुर ययौ । बृहद्ध्वजो वसो सूनुर्दशमो मथुरां पुन ॥ ४५३ ॥
वसित्वा बहुधा पौरैस्तस्या पुर्यांश्च पर्वत । निर्वासित सजगृहे महाकालासुरेण स ॥ ४५४ ॥
कोऽय महाकाल इति पृष्टो दशमुखेन तु । उवाच नारदोऽस्ति चारणयुगल पुरम् ॥ ४५५ ॥
राजा तत्रायोधनोऽभूद्दितिर्नाम्ना च तत्प्रिया । तयोश्च सुलसा नाम दुहिता रूपशालिनी ॥ ४५६ ॥
पिश स्वयवरे तस्या आहूता सपायपु । सर्वेऽपि पार्थिवास्तेषु पार्थिव सगरोऽधिक ॥ ४५७ ॥
सगरस्याज्ञया द्वा स्था मन्दोदर्यभिधानत । अयोधननृपावासे जगाम प्रतिवासरम् ॥ ४५८ ॥
एकदा च गृहोद्यानकदलीसदनेऽविशत् । दिति सम सुलसया मन्दोदर्यपि चाययौ ॥ ४५९ ॥
लतान्तरविलीनाथ श्रोतुकामा तयोर्वच । तस्थौ मन्दोदरी प्रोचे दितिश्च सुलसामिति ॥ ४६० ॥
वत्से मम मन शल्यमस्ति तेऽस्मिन् स्वयवरे । त्वदधीनस्तदुद्धारस्तत्सम्यक्शृणु मूलत ॥ ४६१ ॥
ऋषभस्वामिनोऽभूतामुभौ वशधरौ सुतौ । भरतो बाहुबलिश्च सूर्यसोमौ ययो सुतौ ॥ ४६२ ॥
सोमवशे मम भ्राता तृणबिन्दुरजायत । सूर्यवशे ते पितासावयोधनमहीपति ॥ ४६३ ॥

अयोधनस्वसा सत्ययशा नाम महीपतेः । तृणबिन्दोरभूद्भार्या मधुपिङ्गस्तयोः सुतः ॥ ४६४ ॥
तस्मै प्रदीयमानां त्वामहमिच्छामि सुन्दरि । प्रदित्सते त्वत्पिता त्वां स्वयंवरवराय तु ॥ ४६५ ॥
न जाने कं वृणोषि त्वं मनःशल्यमिदं मम । वरणीयस्त्वया राजमध्ये मद्भ्रातृजस्ततः ॥ ४६६ ॥
सुलसापि हि तच्छिक्षां तथैव प्रत्यपद्यत । मन्दोदर्यपि तच्छ्रुत्वाचख्यौ सगरभूपतेः ॥ ४६७ ॥
सगरोऽप्यादिशद्विश्वभूतिं निजपुरोधसम् । सद्यः कविः सोऽपि चक्रे नृपलक्षणसंहिताम् ॥ ४६८ ॥
तत्रोचे स तथा येन समस्तै राजलक्षणैः । सगरो जायते युक्तो हीनस्तु मधुपिङ्गलः ॥ ४६९ ॥
तत्पुस्तकं तु पेटायां स चिक्षेप पुराणवत् । राजाज्ञयान्यदाकृष्ट तेन तद्राजपर्षदि ॥ ४७० ॥
तत्रादौ सगरोऽवोचद्वाच्यमानेऽत्र पुस्तके । भवेल्लक्षणहीनो यो वध्यस्त्याज्यश्च सोऽखिलैः ॥ ४७१ ॥
यथा यथावाचयत्तत्पुस्तकं स पुरोहितः । तथा तथा स जिह्राय मधुपिङ्गोऽपलक्षणः ॥ ४७२ ॥
निर्ययौ मधुपिङ्गोऽथ सगरं सुलसावृणोत् । जज्ञे विवाहः सद्योऽपि सर्वे स्वं स्थानमभ्ययुः ॥ ४७३ ॥
मधुपिङ्गोऽप्यपमानात् कृत्वा बालतपो मृतः । महाकालाभिधः षष्टिसहस्रेशोऽसुरोऽभवत् ॥ ४७४ ॥
अज्ञासीदवधेः सोऽथ सगरस्य विजृम्भितम् । स्वयंवरे सुलसाया निजं न्यकारकारणम् ॥ ४७५ ॥
राजानं सगरं राज्ञोऽन्यांश्च हन्मीति सोऽसुरः । छिद्रान्वेषी शुक्तिमतीनद्यां पर्वतमैक्षत ॥ ४७६ ॥
विप्रवेषस्ततो भूत्वा गत्वा पर्वतमभ्यधात् । शाण्डिल्यो नाम मित्रं त्वत्पितुरस्मि महामते ॥ ४७७ ॥
धीमतो गौतमाख्यस्योपाध्यायस्य पुरः पुरा । अहं क्षीरकदम्बश्चापठाव सहितावुभौ ॥ ४७८ ॥

१ तत्र पुस्तके स विश्वभूतिस्तथोचे रचयामास । २ तिरस्कारकारणम् ।

नारदेन जनैश्च त्वा श्रुत्वा ५र्थितमागमम् । त्वत्पक्षं पूरयिष्यामि मन्त्रविंश्च विमोहयन् ॥ ४७९ ॥
इत्युक्त्वा प रयुत १धर्मेणारि ल --म् । असुरो मोहयामास दुर्गतौ पातनाय स ॥ ४८० ॥
व्याधिभूतादिदोषाश्च सर्वत्राजनदर्शने । प्रपञ्चपर्वतमत निर्दोष च चकार स ॥ ४८१ ॥
शाण्डिल्यस्याज्ञया सो पि स्वच्छान्ति पर्वतो व्यधात् । उपकृत्योपकृत्य स्वमते चारथापयज्जनम् ॥४८२ ॥
सगरस्यापि नगरेऽन्त पुरेऽथ परि हृदे । चिक्षेप सोऽसुरो रोगान् दारुणानभिभूतस ॥ ४८३ ॥
लोकप्रत्ययतो भेजे पर्वत सगरोऽपि हि । चकार शाण्डिल्ययुतो स्वच्छान्ति सोऽपि सर्वत ॥ ४८४ ॥
सौत्रामण्या विधानेन सुरापान न दुष्यति । अगम्यागमन कार्य यज्ञे गोसवनामनि ॥ ४८५ ॥
मातृमेधे वध मातु पितृमेधे वध पितु । अन्तर्वेदि विधातव्यो दोषस्तत्र न विद्यते ॥ ४८६ ॥
ओंशुशुक्षणिमाधाय पृष्ठे कूर्मस्य तर्पयेत् । हविषा जुहुवकाख्याय स्वाहेत्युक्त्वा प्रयत्नत ॥ ४८७ ॥
यदा न प्राप्नुयात् कूर्म तदा शुद्धद्विज मन । खलते पिङ्गलाभस्य विक्रियस्य शुचौ जले ॥ ४८८ ॥
आस्यदघ्नेऽवतीर्णस्य मस्तके कूर्मसन्निभे । प्रज्वाल्य ज्वलन दीप्तमाहुति प्रक्षिपेद्द्विज ॥ ४८९ ॥
॥ युग्मम् ॥

सर्व पुरुष एवेद यद्भूत यच्च भविष्यति । ईशानो योऽमृतत्वस्य यदन्नेनातिरोहति ॥ ४९० ॥
एवमेकत्र पुरुषे किं केनात्र विपद्यते । कुरुताततो यथाभीष्ट यज्ञ प्राणिनिपातनम् ॥ ४९१ ॥

---

१ प्रशीघ्रत पर्वतस्य मत येन त नरम् । २ यज्ञविशेषे । ३ अगम्यायाः स्त्रिया गमन सङ्ग । ४ अग्निम् ।
५ खलतिः खल्वाट “टालीयो” इति भाषायाम् । ६ मुखपर्यन्तप्रमाणे जले । ७ मोक्षस्येशान ईश्वरः ।

मांसस्य भक्षणं तेषां कर्तव्यं यज्ञकर्मणि । यायजूकेन पूतं हि देवोद्देशेन तत्कृतम् ॥ ४९२ ॥
इत्यादि सम्प्रपादिश्य सगरे स्वमतस्थिते । अन्तर्वेदि कुरुक्षेत्रादिषु सोऽकारयन्मखान् ॥ ४९३ ॥
स लब्धप्रसरोऽकार्षीद्राजसूयादिकानपि । असुरोऽप्यम्बरहतान् विमानस्थान्दर्शयत् ॥ ४९४ ॥
ततः सप्रत्ययो लोकः प्राणिहिंसात्मकान् मखान् । निःशङ्कमकरोत्तस्य पर्वतस्य मते स्थितः ॥ ४९५ ॥
तत्प्रेक्ष्याहं तदा विद्याधरं नाम्ना दिवाकरम् । अवोचं यत्त्वया यज्ञे हर्तव्याः पशवोऽखिलाः ॥ ४९६ ॥
प्रतिपद्य स मे वाचं जह्रे यावत्पशून् मखे । परमाधार्मिकस्तावत्तद्ज्ञासीत्सुराधमः ॥ ४९७ ॥
ऋषभप्रतिमां तत्र तद्विद्याघातनाय सः । आस्थापयन्महाकाल उपारंसीच्च खेचरः ॥ ४९८ ॥
ततोऽहमपि तूष्णीकः क्षीणोपायोऽन्यतोऽभ्यगाम् । यज्ञेषु भावयामास सगरं सोऽथ मायया ॥ ४९९ ॥
सगरं सुलसायुक्तं स जुहावाध्वरानले । कृतकृत्यो जगामाथ महाकालः स्वमाश्रयम् ॥ ५०० ॥
एवं च पर्वतात्पापपर्वतादध्वरा द्विजैः । हिंसात्मका अक्रियन्त ते निषेध्यास्त्वयैव हि ॥ ५०१ ॥
तद्वाचमुररीकृत्य प्रणिपत्य च नारदम् । मरुत्तात् क्षमयित्वा च विससर्ज दशाननः ॥ ५०२ ॥
मरुत्तो रावणं नत्वोवाच कोऽयं कृपानिधिः । पापादस्मादपायो ह्यस्मात्त्वया स्वामिन्न्यवारयत् ॥ ५०३ ॥
आचख्यौ रावणोऽप्यासीन्नाम्ना ब्रह्मरुचिर्द्विजः । तापसस्य सतस्तस्य भार्या कूर्मीति गुर्व्यभूत् ॥ ५०४ ॥
तत्रेयुः साधवोऽन्येद्युस्तेष्वेकः साधुरब्रवीत् । भवभीत्या गृहवासस्त्यक्तो यत्साधु साधु तत् ॥ ५०५ ॥
भूयः स्वदारसङ्गस्य विषयैर्लुप्तचेतसः । गृहवासाद्वने वासः कथं नाम विशिष्यते ॥ ५०६ ॥

---

१ पुनः पुनर्यजतीति यायजूकस्तेन । २ गर्भवती ।

श्रुत्वा ब्रह्मरुचिस्तत्तु प्रपन्नजिनशासन । तदैव श्रावकत्वं च कूर्म्यभूच्छ्राविका परा ॥ ५०७ ॥
मिथ्यात्ववर्जिता तत्र सा वसन्त्याश्रमे सुतम् । सुषुवे नारद नाम रोदनादिविवर्जितम् ॥ ५०८ ॥
गतायाश्चान्यतस्तस्यास्त जह्रुर्जृम्भकामरा । पुत्रशोकादिन्दुमालासचिवे श्रामण्यं च सा ॥ ५०९ ॥
तेऽमरा पालयामासु शास्त्राण्यध्यापयंश्च तम् । आकाशगामिनीं विद्या ददुस्तस्मै क्रमेण च ॥ ५१० ॥
अणुव्रतधर प्राप यौवन च मनोहरम् । स शिखाधारणान्नित्य न गृहस्थो न संयत ॥ ५११ ॥
कलहप्रेक्षणाकाङ्क्षी गीतनृत्यकुतूहली । सदा च दर्पकौकुच्यमौखर्यात्यन्तवत्सल ॥ ५१२ ॥
वीराणा कामुकाना च सन्धिविग्रहकारक । छत्रिकाक्षबृषीपाणिरारूढ पादुकासु च ॥ ५१३ ॥
देवै संवर्धितत्वाच्च देवर्षिं प्रथितो भुवि । प्रायेण ब्रह्मचारी च स्वेच्छाचारेण नारद ॥ ५१४ ॥
इत्युक्तवन्त लङ्केशमज्ञानकृतमात्मन । मरुत्व क्षमयामासापराध मखसम्भवम् ॥ ५१५ ॥
मरुत्वराज स्वा कन्या नाम्ना कनकप्रभाम् । तदा ददौ दशास्याय दशास्योऽप्युदुवाह ताम् ॥ ५१६ ॥
प्रभञ्जन इवौजस्वी मरुत्वमखभञ्जन । ततो जगाम मथुरा नगरीं गुरुविक्रम ॥ ५१७ ॥
उपतस्थे दशग्रीव तन्नृपो हरिवाहन । पुत्रेण मधुना सार्धमीशानेनेव शूलिना ॥ ५१८ ॥
त भक्त्योपस्थित प्रीतोऽवार्तयद्दशकन्धर । पप्रच्छैव भवत्सूनो कुतोऽद शूलमायुधम् ॥ ५१९ ॥
पित्रा भ्रूसंज्ञयादिष्टो मधुर मधुरभ्यधात् । [illegible] मे चमरेन्द्रेण प्राग्जन्मसुहृदार्पितम् ॥ ५२० ॥

---

१ कामचेष्टितवाचालयोरपि वत्सलः । २ दर्भासनविशेषो बृषी । ३ ईशानेन्द्रेण ।

अथोचन्नमरश्चैवं धातकीखण्डनामनि । द्वीपे ऐरावतक्षेत्रे शतद्वारे महापुरे ॥ ५२१ ॥
सुमित्रो राजपुत्रोऽभूत्प्रभवः कुलपुत्रकः । उभावभूतां ते मित्रे वसन्तमदनाविव ॥ ५२२ ॥ युग्मम् ॥
गुरोरेकस्य पार्श्वे तौ बाल्ये जगृहतुः कलाः । सह चिक्रीडतुश्चावियुक्तावश्विनाविव ॥ ५२३ ॥
उद्यौवनः सुमित्रोऽथ तत्राभून्नगरे नृपः । महर्द्धिर्विदधे तेन प्रभवोऽप्यात्मसन्निभः ॥ ५२४ ॥
राजैकदा तुरङ्गे हृतः प्राप महाटवीम् । पल्लीपतिसुतां तत्र वनमालामुपायत ॥ ५२५ ॥
तामादाय समायात स राजा स्वपुरे पुनः । प्रभवेण च सा प्रैक्षि रूपयौवनशालिनी ॥ ५२६ ॥
तद्दर्शनात्प्रभृत्येव स मनोभवपीडितः । दिने दिने कृशो जज्ञे कृष्णपक्ष इवोडुपः ॥ ५२७ ॥
असाध्यं मन्त्रतन्त्राणां तं ज्ञात्वातिकृशं नृपः । इत्यूचे बाधते किं ते सम्यगाख्याहि बान्धव ॥ ५२८ ॥
अभ्यधात्प्रभवोऽप्येवं वक्तुमेतन्न शक्यते । अलं कुलकलङ्काय यन्मनःस्थमपि प्रभो ॥ ५२९ ॥
निर्बन्धाद्भूभुजा पृष्टः स आख्यत् कुलपुत्रकः । वनमालानुरागो मे देहदौर्बल्यकारणम् ॥ ५३० ॥
राजाप्यूचे राज्यमपि त्वदर्थे सन्त्यजाम्यहम् । किं पुनर्महिलामात्रमियमद्यैव गृह्यताम् ॥ ५३१ ॥
इत्युक्त्वा तं विसृज्याथ तस्यानुपदमेव ताम् । स्वयं दूतीमिव प्रैषीत्तदोकसि निशामुखे ॥ ५३२ ॥
इत्यूचे सापि राज्ञाहं तुभ्यं दत्तास्मि सीदते । जीवातुरिव तच्छाधि पत्याज्ञा मे बलीयसी ॥ ५३३ ॥
मम भर्ता त्वदर्थे हि प्राणानपि विमुञ्चति । किं पुनर्मादृशीं दासीमुदासीनः किमीक्षसे ॥ ५३४ ॥
बभाषे प्रभवोऽप्येवं धिग्धिङ्मां निरपत्रपम् । अहो स तु महासत्त्वो यस्येदृक् सौहृदं मयि ॥ ५३५ ॥

---

१ अवियोगिनौ । २ दुःखिने ।

प्राणा अपि हि दीयन्ते परस्मै न पुन प्रिया । इति दुष्करमेतद्धि कृत तेनाद्य मत्कृते ॥ ५३६ ॥
पिशुनानामिवावाच्य नायाच्य वत मादृशाम् । कल्पद्रुमाणामिवादेय नास्ति किञ्चित्तु तादृशाम् ॥ ५३७ ॥
स प्रेथा गच्छ मातासि जात परमिम जनम् । पश्य मापस्व सा पापराशिं पत्याज्ञयापि हि ॥ ५३८ ॥
तत्र च च्छन्नमागत्य राजा शुश्राव तद्वच । सुहृद सत्त्वमालोक्य प्रकर्षेण जहर्ष च ॥ ५३९ ॥
वनमाला नमस्कृत्य विसृज्य प्रभवोऽपि हि । स्वशिरश्छेत्तुमारेभे खड्गमाकृष्य दारुणम् ॥ ५४० ॥
आविर्भूय सुमित्रोऽपि मित्र मा साहस कृथा । इति जल्पन्नपाहार्षीत् कृपाण तस्य पाणित ॥ ५४१ ॥
विविक्षन्निव वसुधां प्रभवोऽधोमुखो ह्रिया । कथञ्चन सुमित्रेण स्वस्थावस्थामनायि स ॥ ५४२ ॥
चक्रतुस्तौ चिर राज्य प्राज्य मैत्रीपरायणौ । सुमित्रस्तु परिव्रज्य मृत्वेशानसुरोऽभवत् ॥ ५४३ ॥
ततश्च्युत्वा मथुरेशहरिवाहणनन्दन । त्व सुबाहुमधुनामा माधवीकुक्षिभूरभू ॥ ५४४ ॥
प्रभवोऽपि भव भ्रान्त्वा चिर विश्वावसोरभूत् । ज्योतिर्मत्यां श्रीकुमार इति नाम्ना तनूरुह ॥ ५४५ ॥
सनिदान तप कृत्वा कालयोगाद्विपद्य च । अभव चमरेन्द्रोऽह पूर्वजन्मसुहृत्तव ॥ ५४६ ॥
इत्याख्याय स मेऽदत्त शूलमेतदुपेत्य यत् । आयोजनद्विसहस्र्या कृत्वा कार्यं निवर्तते ॥ ५४७ ॥
इति श्रुत्वा दशग्रीवो भक्तिशक्तिविराजिने । ददौ मधुकुमाराय कन्या नाम्ना मनोरमाम् ॥ ५४८ ॥
अथ लङ्काप्रयाणाद्वर्षेष्वष्टादशस्वगात् । स्वर्णाद्रौ पाण्डुके चैत्यान्यर्चितु दशकन्धर ॥ ५४९ ॥
सोत्कण्ठस्तत्र चैत्यानि दशकण्ठोऽभ्यवन्दत । ऋद्ध्या महत्या सङ्गीतपूजोत्सवपुर सरम् ॥ ५५० ॥
दुर्लङ्घनगरेऽथेन्द्रदिक्पाल नलकूबरम् । ग्रहीतु कुम्भकर्णाद्या दशग्रीवाज्ञया ययु ॥ ५५१ ॥

आशालीविद्यया वह्निमयं वप्रमय व्यधात् । स्वपुरे योजनशतप्रमाणं नलकूवरः ॥ ५५२ ॥
हुताशनमयान्येव चक्रे यन्त्राणि तत्र च । प्रदीपनमिव व्योम्नि कुर्वाणानि शिखोत्करैः ॥ ५५३ ॥
तं च वप्रमवष्टभ्यावतस्थे नलकूवरः । भटैः परिवृतः कोपाज्ज्वलन् वह्निकुमारवत् ॥ ५५४ ॥
तेऽप्येत्य कुम्भकर्णाद्यास्तं द्रष्टुमपि नाशकन् । ग्रीष्ममध्याह्नमार्तण्डमिव सुप्तोत्थिता नराः ॥ ५५५ ॥
दुर्लङ्घ्यमेतद्दुर्लङ्घपुरमित्यपसृत्य ते । भग्नोत्साहाः कथमपि दशास्याय व्यजिज्ञपन् ॥ ५५६ ॥
स्वयं दशास्यस्तत्रागात्तं वप्रं प्रेक्ष्य तादृशम् । अपश्यंस्तद्ग्रहोपायं चिरं दध्यौ सबान्धवः ॥ ५५७ ॥
अनुरक्ता दशास्यस्य नलकूवरपत्न्यथ । प्रैषीद्दूतीमुपरम्भा सा तमेत्यैवमब्रवीत् ॥ ५५८ ॥
जयश्रीरिव मूर्तोपरम्भा त्वयि रिरंसते । सा त्वद्गुणैर्हृतमनास्तत्र मूर्त्यैव तिष्ठति[1] ॥ ५५९ ॥
इमां च विद्यामाशालीमस्य वप्रस्य रक्षिकाम् । करिष्यति तवायत्तामात्मानमिव मानद ॥ ५६० ॥
ग्रहीष्यसि तया चेदं पुरं सनलकूवरम् । सेत्स्यत्यत्र च ते चक्रं दैवं नाम्ना सुदर्शनम् ॥ ५६१ ॥
सप्रहासं दशास्येन वीक्षितोऽथ विभीषण । एवमस्त्विति भाषित्वा दूतिकां विससर्ज ताम् ॥ ५६२ ॥
अथ क्रुद्धो दशग्रीव आबभाषे विभीषणम् । अरे कुलविरुद्धं किं प्रतिपन्नमिदं त्वया ॥ ५६३ ॥
हृदयं जातुचिद्दत्तं परस्त्रीणां न कैरपि । अस्मत्कुलनरैर्मूढ रणे पृष्ठं द्विषामिव ॥ ५६४ ॥
नवः कुलकलङ्कोऽयं वचसापि कृतस्त्वया । रे विभीषण केयं ते मतिर्येनेदमब्रवी ॥ ५६५ ॥
विभीषणोऽप्युवाचेवं प्रसीदार्य महाभुज । न वाग्मात्रं कलङ्काय विशुद्धमनसां नृणाम् ॥ ५६६ ॥

१ स्वगृहे मूर्त्या केवलशरीरेणैव तिष्ठति, मनस्तु त्वयि वर्तत इति भावः ।

सा समायातु विद्या ते प्रयच्छतु स च द्विषन् । यशोऽस्तु मा मजेयास्तां वाचोयुक्त्या परित्यजे ॥५६७ ॥
यावद्विभीषणवचोऽनुमेने तद्दशाननः । तावदागादुपरम्भा तत्परीरम्भलम्पटा ॥ ५६८ ॥
ददौ चाशालिकां विद्यां पत्या वशीकृता पुरे । मोक्तराणि यन्त्राणि व्यन्तराधिष्ठितानि च ॥ ५६९ ॥
दशास्य सज्जहाराग्निप्राकारं विद्यया तया । प्रविवेश च दुर्लङ्घपुरं सबलवाहनः ॥ ५७० ॥
उत्तस्थे चाथ सन्नाह रणाय नलकूबरः । विभीषणेन चाग्राहि वर्मभृज्ज्वरः दन्तिना ॥ ५७१ ॥
देवासुरैरप्यजय्यं शक्रसबन्धि दुर्धरम् । चक्रं सुदर्शनं नाम तत्र प्राप च रावणः ॥ ५७२ ॥
प्रणताय ततस्तस्मै दशास्यस्तत्पुरं ददौ । अर्थिनोऽर्थेषु न तथा दोष्मन्तो विजये यथा ॥ ५७३ ॥
उपरम्भामप्युवाच दशास्यः स्वकुलोचितम् । भद्रे भजात्मभर्तारं कर्तारं विनयं मयि ॥ ५७४ ॥
विद्यादानाद्गुरुस्थाने मम त्वमसि सम्प्रति । स्वसृमातृपदं परस्यामन्या अपि परस्त्रियः ॥ ५७५ ॥
पुत्री कामध्वजस्यासि सुन्दर्युदरसम्भवा । कुलद्वयविरुद्धाया कलङ्को मा स्म भूत्तव ॥ ५७६ ॥
तामित्युक्त्वार्पयामास नलकूबरसूनवे । अदुष्टितां पितुर्गेहे कपित्त्वेव समागताम् ॥ ५७७ ॥
नलकूबरानेन कुम्भकर्णाग्रजोऽर्चितः । चचाल सह सेनानी रथनूपुरपत्तनम् ॥ ५७८ ॥
आयान्तं रावणं श्रुत्वा सहस्रारो महामतिः । सुतमिन्द्र सुतस्नेहात् सेहपूर्वमभाषत ॥ ५७९ ॥
भवता वत्स जातेन वंशोऽस्माकं महौजसा । अत्यन्तमोन्नतिं कृत्वा प्रापितः प्रोन्नतिं पराम् ॥ ५८० ॥
एकेन विक्रमेणैव त्वया हीदमनुष्ठितम् । नीतीनामप्यनवकाशो दातव्यः सम्प्रति त्वया ॥ ५८१ ॥

१ सफलानि । २ दोषं कृत्वा ।

एकान्तविक्रमः क्वापि विपदेऽपि प्रजायते । एकान्तविक्रमान्नाशं शेरभाद्याः प्रयान्ति हि ॥ ५८२ ॥
बलीयसो बलिभ्योऽपि प्रसूते हि वसुन्धरा । सर्वेभ्योऽप्यहमोजस्वीत्यहङ्कारं स्म मा कृथा ॥ ५८३
उत्थितोऽस्त्यधुना वीरः सर्ववीरस्वतस्कर । प्रतापेन सहस्रांशुः सहस्रांशुनियन्त्रकः ॥ ५८४ ॥
हेलोत्पाटितकैलासो मरुत्तमखभञ्जनः । जम्बूद्वीपेश्वयक्षेन्द्रेणाप्यक्षोभितमानसः ॥ ५८५ ॥
उपार्हन्निजदोर्वीणागीततोषितचेतसः । धरणेन्द्रादमोघाप्तशक्तिः शक्तित्रयोर्जितः ॥ ५८६ ॥
भ्रातृभ्यां स्वानुरूपाभ्यां स्वभुजाभ्यामिवोत्कट । रावणो नाम लङ्केशः सुकेशकुलभास्कर ॥ ५८७ ॥
स यमं हेलयाभाङ्क्षीत् पतिं वैश्रवणं च ते । पत्तीचक्रे वानरेन्द्रं सुग्रीवं वालिसोदरम् ॥ ५८८ ॥
दुर्लङ्घ्यवह्निप्राकारं दुर्लङ्घपुरमस्य च । प्रविष्टस्यानुजो बद्ध्वा जग्राह नलकूबरम् ॥ ५८९ ॥
स त्वां प्रत्यापतन्नस्ति युगान्ताम्बिरिवोद्धत । प्रणिपातसुधावृष्ट्या शमनीयोऽन्यथा न तु ॥ ५९० ॥
रूपिणीं च सुतामस्मै यच्छ रूपवतीमिमाम् । एवं ह्युत्तमसन्धानं सम्बन्धाचे भविष्यति ॥ ५९१ ॥
एव पितृवचः श्रुत्वा कुप्यन्नेवमुवाच सः । कन्यका स्वा कथङ्कारमस्मै वध्याय दीयते ॥ ५९२ ॥
किं च नाधुनिकं वैरममुना किं तु वंशजम् । तातं विजयसिंहं प्रागेतंद्वृग्धहेतं स्मर ॥ ५९३ ॥
एतत्पितामहस्यापि मालिनो यन्मया कृतम् । तदस्यापि करिष्यामि समायात्वेषको ह्ययम् ॥ ५९४ ॥
स्नेहतः कातरो मा भूः सहजं धैर्यमाश्रय । स्वसूनोः सर्वदा दृष्टं किं न वेत्सि पराक्रमम् ॥ ५९५ ॥

---

१ अष्टापदाद्या । २ सहस्रांशु सूर्यः । ३ सहस्रांशुर्नाम राजा तन्नियन्त्रिकः । ४ कैलासोऽष्टापदगिरि । ५ अर्हत्समीपे निजदोर्वीणाया गीतेन प्रसन्नं चित्तं यस्य तस्मात् । ६ प्रभुमन्त्रोत्साहरूपास्तिस्रः शक्तयः । ७ अस्य रावणस्य । ८ अभ्यागच्छन् । ९ पतत्पक्षैः ।

तस्यैव वदतोऽभ्येत्य नगरं रथनूपुरम् । चमूभिर्वेष्टयामास दुर्धरो दशकन्धरः ॥ ५९६ ॥
पूर्वमेव दशास्येन प्रहितो महितौजसा । अथ दूतोऽभ्युपेत्येन्द्रमित्युवाच ससौष्ठवः ॥ ५९७ ॥
ये केचिदिह राजानो विद्यादोर्वीर्यदर्पिताः । तैरुपेत्योपायनाद्यैः पूजितो दशकन्धरः ॥ ५९८ ॥
दशकण्ठस्य विस्मृत्या भवतश्चार्ध्यवादयम् । इयान् कालो ययौ तस्मिन् भक्तिकालस्तवाधुना ॥ ५९९ ॥
भक्तिं दर्शय तत्तस्मिन् शक्तिं वा दर्शयाधुना । भक्तिशक्तिविहीनश्चेदेवमेव विनङ्क्ष्यसि ॥ ६०० ॥
इन्द्रोऽपि निजगादैव वराके पूजितो नृपैः । रावणस्तदयं भयं पूजां मत्ताऽपि वाञ्छति ॥ ६०१ ॥
यथा तथा गतः कालो रावणस्य सुखाय सः । कालरूपस्त्वयं कालस्तस्येदानीमुपस्थितः ॥ ६०२ ॥
गत्वा स्वस्वामिनो भक्तिं शक्तिं वा मयि दर्शय । स भक्तिशक्तिहीनश्चेदेवमेव विनङ्क्ष्यति ॥ ६०३ ॥
दूतेनागत्य विज्ञप्तो रावणः कोपदारुणः । समनह्यन्महोत्साहः समं सकलसैनिकैः ॥ ६०४ ॥
द्रुतमिन्द्रोऽपि सन्नह्य निर्ययौ रथनूपुरात् । वीरा हि न सहन्तेऽन्यवीराहङ्कारडम्बरम् ॥ ६०५ ॥
सामन्ताः सह सामन्तैः सैनिकाः सैनिकैः पुनः । सेनानीभिश्च सेनान्यो द्वयोर्युयुधिरे तयोः ॥ ६०६ ॥
तयोर्बलानामन्योऽन्यं सम्फेटः शस्त्रवर्षिणाम् । संवर्तपुष्करावर्तवारिदानामिवाभवत् ॥ ६०७ ॥
वराकैः सैनिकैरेभिः किं हतैर्मशकैरिव । इति ब्रुवाणो भुवनालङ्कारकरिपुङ्गवम् ॥ ६०८ ॥
स्वयमारुह्य युद्धायाधिज्यीकृतशरासनः । अभ्यैकतैरावणस्थेन्द्रेण सह रावणः ॥ ६०९ ॥
॥ युग्मम् ॥
नागपाशमिवान्योऽन्यं शुण्डयोः करवेष्टनैः । वितन्वानौ मिमिलतुः करिणौ रावणेन्द्रयोः ॥ ६१० ॥

द्वावपीभौ महाप्राणौ दन्तैर्दन्तान् प्रजघ्नतुः । उत्थापयन्तौ स्फुलिङ्गानरण्युन्मथनादिव ॥ ६११ ॥
मिथोघातेर्विषाणेभ्यः सौवर्णवलयावलिः । पपातोर्व्यां विरहिणीबाहुभ्य इव तत्क्षणम् ॥ ६१२ ॥
तद्दन्तघातक्षुण्णेभ्यः शरीरिभ्यो निरन्तरम् । गण्डेभ्यो मदधारावद्रक्तधाराः प्रसुस्रुवुः ॥ ६१३ ॥
क्षणाच्छल्यैः क्षणाद्बाणैः क्षणादपि च मुद्गरैः । गजाविवाद्वितीयौ तौ रावणेन्द्रौ प्रजघ्नतुः ॥ ६१४ ॥
महाबलौ पिपिषतुरस्त्रैरस्त्राणि तौ मिथः । नैकोऽप्यहीयतैकस्मादब्धी पूर्वापराविव ॥ ६१५ ॥
बाध्यबाधकताभाग्भिर्द्रागुत्सर्गापवादवत् । मन्त्रास्त्रैरप्ययुध्येतां तौ रणक्रतुदीक्षितौ ॥ ६१६ ॥
गाढं मिलितयोरेकवृन्तस्थफलयोरिव । ऐरावणभुवनालङ्कारयोः करिणोरथ ॥ ६१७ ॥
छलज्ञो रावणः स्वेभादुत्पत्यैरावणं ययौ । हत्वा च तन्महामात्रं बबन्धेन्द्रं करीन्द्रवत् ॥ ६१८ ॥ युग्मम् ॥
स हस्ती परितोऽधस्ताद्रक्षोवीरैरवेष्ट्यत । हर्षादुत्तालतुमुलैर्मधुमण्ड इवालिभिः ॥ ६१९ ॥
रावणेन धृते शक्रे तत्सैन्यमपि सर्वतः । विदुद्राव जिते नाथे जिता एव पदातयः ॥ ६२० ॥
संहृत्य रावणेनेन्द्रं रावणः शिविरे निजे । निनाय नायकप्रभवत्स्वयं श्रेणिद्वयेऽप्यथ ॥ ६२१ ॥
ततो निवृत्य लङ्कायां जगाम दशकन्धरः । कारायां चाक्षिपच्छक्रं कीरवत्काष्ठपञ्जरे ॥ ६२२ ॥
सहस्रारः सदिक्पालो लङ्कायामेत्य रावणम् । नमस्कृत्येत्यभाषिष्ट पत्तिवद्रचिताञ्जलिः ॥ ६२३ ॥
कैलासमुद्धार्षीर्यो लीलया ग्रावखण्डवत् । दोष्मता तेन भवता विजिता न त्रपामहे ॥ ६२४ ॥
तादृशे त्वयि याञ्चापि न त्रपायै मनागपि । तद्याचेऽहं मुञ्च शक्रं पुत्रभिक्षां प्रयच्छ मे ॥ ६२५ ॥

१ अरणि॰ काष्ठविशेष । २ विरहवत्याः स्त्रियाः बाहुभ्य । ३ पाषाणखण्डवत् ।

उवाच रावणोऽप्येवं शक्र मुञ्चामि यद्यसौ । सदिक्पालपरीवारः कर्म कुर्यात् सदेदृशम् ॥ ६२६ ॥
परितो पि पुरीं लङ्कां करोत्वेष क्षणे क्षणे । तृणकाष्ठादिरहितां वासागारमहीमिव ॥ ६२७ ॥
प्रातः प्रातर्दिव्यगन्धैरम्बुवाह इवाम्बुभिः । चेलोत्क्षेप पुरीमेतामभितोऽप्यभिषिञ्चतु ॥ ६२८ ॥
मालाकार इवोचित्य ग्रंथित्वा च सदा स्वयम् । पुष्पाणि पूरयत्वेष देवतावसरादिषु ॥ ६२९ ॥
एवं विधानि कर्माणि कुर्वन्नेष सुतस्तव । पुनर्गृह्णातु राज्यं स्वं मत्प्रसादाच्च नन्दतु ॥ ६३० ॥
एवं करिष्यतीत्युक्तः सहस्रारेण रावणः । मुमोच शक्रं कारायाः सत्कृत्य निजबन्धुवत् ॥ ६३१ ॥
रथनूपुरमेत्येन्द्रस्तस्थावुद्विग्नमानसः । तेजस्विनां हि निस्तेजो मृत्युतोऽप्यतिदुःसहम् ॥ ६३२ ॥
निर्वाणसङ्गमो नाम ज्ञानी तत्रान्यदा मुनिः । समवासरदिन्द्रोऽपि तं वन्दितुमुपाययौ ॥ ६३३ ॥
भगवन् कर्मणा केन रावणादिममासदम् । न्यक्कारमिति शक्रेण पृष्टः स मुनिरब्रवीत् ॥ ६३४ ॥
श्रीमत्यरिञ्जयपुरे पुरा विद्याधराग्रणीः । नाम्ना ज्वलनसिंहोऽभूद्वेगवत्यस्य तु प्रिया ॥ ६३५ ॥
अहिल्या नाम दुहिता रूपवत्यभवत्तयोः । तस्याः स्वयंवरेऽभ्येयुः सर्वे विद्याधरेश्वराः ॥ ६३६ ॥
आनन्दमाली तत्रागाच्चन्द्रावर्तपुरेश्वरः । सूर्यावर्तपुरेशस्त्वमागान्नाम्ना तडित्प्रभः ॥ ६३७ ॥
सहायातमपि त्यक्त्वा त्वामहिल्या निजेच्छया । आनन्दमालिनं वव्रे तवापूच्च पराभवः ॥ ६३८ ॥
आनन्दमालिनीर्ष्यालुस्त्वमभूस्तत्प्रभृत्यपि । मयि सत्यप्यसावेतामहिल्यामूढवानिति ॥ ६३९ ॥
आनन्दमाली निर्वेदादन्यदा व्रतमग्रहीत् । तप्यमानस्तपस्तीव्रं व्यहार्षीच्च सहर्षिभिः ॥ ६४० ॥
विहरन् स रथावर्तं जगाम गिरिमेकदा । त्वया च दृष्टोऽस्मारि चाहिल्यायाः स्वयंवरः ॥ ६४१ ॥

ध्यानारूढस्त्वया बद्धस्ताडितोऽनेकशश्च सः । मनागपि न च ध्यानाद्चालीदचलाचल ॥ ६४२ ॥
कल्याणगुणधरस्तु तद्भ्राता श्रमणाग्रणीः । प्रेक्ष्य त्वय्यमुचत्तेजोलेश्यां शम्पामिव द्रुमे ॥ ६४३ ॥
सत्यश्रिया च त्वत्पत्न्या शमितो भक्तिजल्पितैः । तेजोलेश्यां स संजह्रे न दग्धोऽसि तदैव तद् ॥ ६४४॥
मुनिन्यक्कारजात् पापाच्चं भ्रान्त्वा कतिचिद्भवान् । शुभं कर्म विधायेन्द्र सहस्रारसुतोऽभव ॥ ६४५ ॥
महामुनितिरस्कारप्रहारोद्भवकर्मणः । उपस्थितं फलमिदं रावणाद्यः पराभव ॥ ६४६ ॥
कर्माण्यवश्यं सर्वस्य फलन्त्येव चिरादपि । आपुरन्दरमाकीट संसारस्थितिरीदृशी ॥ ६४७ ॥
तच्छ्रुत्वा दत्तवीर्यस्य राज्यं दत्त्वाङ्गजन्मनः । इन्द्रः पर्यव्रजत्तप्तोग्रतपाश्च ययौ शिवम् ॥ ६४८ ॥
रावणोऽपि ययौ स्वर्णतुङ्गशैलेऽपरेऽहनि । अनन्तवीर्यं नामर्षिं वन्दितुं जातकेवलम् ॥ ६४९ ॥
तं वन्दित्वा यथास्थानं निषण्णो दशकन्धरः । शुश्राव च श्रोत्रसुधासारणिं धर्मदेशनाम् ॥ ६५० ॥
देशनान्ते दशास्येन कुत स्यान्मरणं मम । इति पृष्टो महर्षिः स भगवानेवमभ्यधात् ॥ ६५१ ॥
पारदारकदोषेण वासुदेवाद्भविष्यति । भविष्यति विपत्तिस्ते प्रतिविष्णोर्दशानन ॥ ६५२ ॥
परस्त्रियमनिच्छन्तीं रमयिष्यामि न ह्यहम् । जग्राहाभिग्रहमिमं स तस्यैव मुनेः पुरः ॥ ६५३ ॥

मुनिवरमथ नत्वा ज्ञानरत्नाम्बुधिं तं दशवदन इयाय स्वां पुरीं पुष्पकस्थः ।
निखिलनगरनारीनेत्रनीलोत्पलानां प्रमदविभवदानाद्यामिनीजानिकल्प ॥ ६५४ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि रावणदिग्विजयो नाम द्वितीयः सर्गः ।

१ शम्पा विद्युत् । २ भक्तिवचनैः । ३ अगमिति काले । ४ यामिनीजानिश्चन्द्रः तत्तुल्यः ।

## । अथ तृतीयः सर्गः ॥

इहैव वैताढ्यगिरावादित्यपुरपत्तने । प्रह्लादो नाम राजाभूत्केतुमत्यस्य तु प्रिया ॥ १ ॥
तयोर्बभूव तनयो नामतः पवनंजयः । ऊर्जी पवनवत्स्थाम्ना गगने गमनेन च ॥ २ ॥
इतश्च भरतेऽत्रैवोपान्त्ये दन्तिमहीभृतः । विद्याधरेन्द्रो महेन्द्रो महेन्द्रनगरेऽभवत् ॥ ३ ॥
पत्न्यां हृदयसुन्दर्यां तस्य चाञ्जनसुन्दरी । अरिंदमादिपुत्राणां शतस्योपर्यभूत्सुता ॥ ४ ॥
उद्यौवनायास्तस्याश्च वरं चिन्तयतः पितुः । अकरसुमन्त्रिणो विद्याधरयूनः सहस्रशः ॥ ५ ॥
महेन्द्रस्याज्ञयामात्यास्तद्रूपाणि पृथक् पृथक् । पटेष्वालेख्य पट्टेष्वानाय्य समदर्शयन् ॥ ६ ॥
तत्र विद्याधराधीशहिरण्याभाङ्गजन्मनः । रूपं विद्युत्प्रभाख्यस्य सुमनःकुक्षिजन्मनः ॥ ७ ॥
प्रह्लादसूनोः पवनंजयस्य च मनोरमम् । चित्रस्थं सचिवोऽन्येद्युर्महेन्द्रस्याभ्यढौकयत् ॥ ८ ॥

॥ युग्मम् ॥

रूपवन्तौ कुलीनौ च द्वावप्येतौ यदेतयोः । कन्याया को वर इति राज्ञोक्तः सचिवोऽभ्यधात् ॥ ९ ॥
एषोऽष्टादशवर्षायुर्मोक्षं विद्युत्प्रभो गमी । इति नैमित्तिकाः स्वामिन् व्यक्तमाख्यातपूर्विणः ॥ १० ॥
प्रह्लादतनयस्त्वेष चिरायुः पवनंजयः । योग्यो वरस्तदेतस्मै यच्छाञ्जनसुन्दरीम् ॥ ११ ॥
अत्रान्तरे तु यात्रार्थं द्वीपं नन्दीश्वरं ययुः । विद्याधरेन्द्राः सर्वेऽपि सर्वर्द्ध्या सपरिच्छदाः ॥ १२ ॥

---

१ बलेन । २ गमिष्यति । ३ पूर्वं आख्यातवन्तः ।

प्रह्लादस्तनयां प्रेक्ष्य महेन्द्रमिदमभ्यधात् । दीयतां मत्सुतायैषा स्वसुताञ्जनसुन्दरी ॥ १३ ॥
महेन्द्र प्रतिपेदे तदग्रेऽपि हृदयस्थितम् । निमित्तमात्रमेवासीत् प्रह्लादप्रार्थना तु सा ॥ १४ ॥
इतस्तृतीये दिवसे मानसाख्ये सरोवरे । कार्यो विवाह इत्युक्त्वा तौ यथास्थानमीयतुः ॥ १५ ॥
ततो महेन्द्रप्रह्लादौ साह्लादौ स्वजनैः समम् । जग्मतुर्मानससरस्यावासं चक्रतुश्च तौ ॥ १६ ॥
मित्रं प्रहसितं नामोवाचेति पवनञ्जयः । दृष्टास्ति किं त्वया ब्रूहि कीदृश्यञ्जनसुन्दरी ॥ १७ ॥
हसित्वेपत्प्रहसितोऽप्येवमूचे मयेक्षिता । सा हि रम्भादिकाभ्योऽपि सुन्दर्यञ्जनसुन्दरी । १८ ॥
तस्या निरुपमं रूप यादृशं दृश्यते दृशा । तादृशं वचसा वक्तुं वाग्मिनापि न शक्यते ॥ १९ ॥
पवनञ्जय इत्यूचे दूरे सुद्वाहवासरः । सा दृग्गोचरमद्यैव कथ नेया मया सखे ॥ २० ॥
वल्लभोत्कण्ठितानां द्वि घटिकापि दिनायते । मासायते दिनमपि किं पुनस्तद्दिनत्रयम् ॥ २१ ॥
तत प्रहसितोऽप्येवं व्याजहार स्थिरीभव । निशि तत्रैत्य तां कान्तां द्रक्ष्यस्यनुपलक्षित· ॥ २२ ॥
उत्पत्य सप्रहसितो निरगात् पवनञ्जयः । आस्थितेऽञ्जनसुन्दर्या प्रासादे सप्तभूमिके ॥ २३ ॥
राजस्पंश इव च्छन्नीभूय सोऽञ्जनसुन्दरीम् । सम्यगीक्षितुमारेभे समित्रः पवनञ्जयः ॥ २४ ॥
धन्यासि या हि प्रापस्त्व तं पतिं पवनञ्जयम् । सखी वसन्ततिलकेत्युवाचाञ्जनसुन्दरीम् ॥ २५ ॥
हले मुक्त्वा वरं विद्युत्प्रभ चरमविग्रहम् । को वरः श्लाघ्यत इति मिश्रकेत्यवदत् सखी ॥ २६ ॥
प्रथमा मत्सुवाचैव मुग्धे वेत्सि न किञ्चन । विद्युत्प्रभो हि स्वल्पायु स्वामिन्या युज्यते कथम् ॥ २७ ॥
द्वितीयापीत्यभाषिष्ट वयस्ये मन्दधीरसि । स्तोकमप्यमृत श्रेयो भारोऽपि न विषस्य तु । २८ ॥

---

१ प्रशस्ता वागस्येति वाग्मी तेन । २ अज्ञातोऽन्येनेत्यध्याहारः । ३ अधिष्ठिते । ४ स्पशो गूढचर । ५ चरमशरीरिणम् । ६ भारसमूह· ।

इत्यालाप तयो श्रुत्वाचिन्तयत् पवनञ्जय । अस्या प्रियमिद नून तेन नैषा निषेधति ॥ २९ ॥
इति क्रुद्धोऽसिमाकृष्याविरासीत्पवनञ्जय । निशाचर इवाकस्मादन्धकारात् समुत्थित ॥ ३० ॥
विद्युत्प्रभो हृदि ययोर्द्वयोरपि तयो शिर । छिनद्मीति वदन्नोपाचचाल पवनञ्जय ॥ ३१ ॥
बाहुदण्डे धारयस्तमिति प्रहसितोऽवदन् । सापराधाप्यवध्यैव स्त्री गौरिव न वेत्सि किम् ॥ ३२ ॥
किं पुनर्निरपराधैवेयमञ्जनसुन्दरी । तथापवादिनीं नैषा निषेधति पुनर्ह्रिया ॥ ३३ ॥
इति प्रहसितेनोच्चैर्निषिद्ध पवनञ्जय । उत्पत्यागात् स्वमावास जाग्रदस्थौ च दु खित ॥ ३४ ॥
प्रातश्चोचे प्रहसित सखे किमनयोढया । भृत्योऽपि हि विरक्त स्यादापदे किं पुन प्रिया ॥ ३५ ॥
तदेहि याव स्वपुरीमुरीकृत्य पर रयम् । किं स्वादुनापि भोज्येन रोचते न यदात्मने ॥ ३६ ॥
इत्युदीर्योच्चकैर्यावच्चचाल पवनञ्जय । धृत्वा तावत्प्रहसितस्त साम्नैवमबोधयत् ॥ ३७ ॥
न युक्त महता यत्स्वप्रतिपन्नस्य लङ्घनम् । अनुल्लङ्घ्यैस्तु गुरुभि प्रतिपन्नस्य का कथा ॥ ३८ ॥
विक्रीणते वा भू येन ददते वा प्रसादत । गुरवो हीत्यपि सतां प्रमाण नापरा गति ॥ ३९ ॥
किं चेहाञ्जनसुन्दर्यामस्ति दोषलवोऽपि न । दूष्यते दैवदोषेण सुहृदो हृदय पुन ॥ ४० ॥
महात्मानौ च पितरौ स्वस्य तस्याश्च विश्रुतौ । किं न लज्जयसि भ्रातर्गच्छन् स्वच्छन्दवृत्तित ॥ ४१ ॥
उक्त प्रहसितेनैव विमृश्य पवनञ्जय । तथैव कथमप्यस्थात् सशल्य इव चेतसि ॥ ४२ ॥
पवनञ्जनसुन्दर्योर्निर्णीते च दिनेऽभवत् । पितृनेत्रोत्पलश्री पाणिग्रहमहोत्सव ॥ ४३ ॥

---

१ कुत्सितवादिनीम् । २ वेगम् । ३ विधिदायेनेत्यर्थ । ४ निश्चिते ।

तद्वधूवरमादाय सेदायादः प्रमोदभाक् । महेन्द्रेणार्चितः स्नेहात् प्रह्लादः स्वां पुरीं ययौ ॥ ४४ ॥
प्रह्लादोऽञ्जनसुन्दर्याः प्रासादं सप्तभूमिकम् । अर्पयामास वासाय विमानमिव भूस्थितम् ॥ ४५ ॥
तां न सम्भावयामास वाचापि पवनञ्जयः । मानिनो ह्यवलेपं न विस्मरन्ति यतस्ततः ॥ ४६ ॥
विना शशाङ्कं श्यामेव सा विना पवनञ्जयम् । बाष्पान्धकारवदना तस्थावस्वास्थ्यभाजनम् ॥ ४७ ॥
पार्श्वद्वितयमाघ्नन्त्याः पर्यङ्कस्य मुहुर्मुहुः । तस्याश्च संवत्सरवद्राधीयस्योऽभवन्निशाः ॥ ४८ ॥
अनन्यमानसा जालुमध्यन्यस्तमुखाम्बुजा । भर्तुरालेख्यनैरेव व्यतीयाय दिनानि सा ॥ ४९ ॥
मुहुरालप्यमानापि सखीभिश्चाटुपूर्वकम् । परपुष्टेव हेमन्ते न सा तूष्णीकतां जहौ ॥ ५० ॥
एवं च काले व्रजति प्रह्लादनृपमन्यदा । दूतो राक्षसराजस्य समुपेत्यैवमब्रवीत् ॥ ५१ ॥
समं राक्षसनाथेन यादोनाथः स दुर्मतिः । वैरायतेऽद्य नितरां प्रणिपातममानयन् ॥ ५२ ॥
याचितः स नमस्कारमहङ्कारमहागिरिः । दोर्दण्डौ चक्षुषा पश्यन्निदं वदति कद्वदः ॥ ५३ ॥
अरे को रावणो नाम तेन किं ननु सिध्यति । नाहमिन्द्रः कुबेरो वा न चास्मि नलकूबरः ॥ ५४ ॥
सहस्ररश्मिर्नाप्यस्मि न मरुत्तो न वा यमः । न च कैलासशैलोऽस्मि किं त्वस्मि वरुणो ननु ॥ ५५ ॥
देवताधिष्ठितै रत्नैर्यदि दर्पोऽस्य दुर्मतेः । तदायातु हरिष्यामि तदर्पं चिरसञ्चितम् ॥ ५६ ॥
इत्युक्त्या रावणः क्रुद्धः समरायाभ्यषेणयत् । अरौत्सीच्चत्पुरं चाब्धिवेलेव तटपर्वतम् ॥ ५७ ॥
पुरान्निःसृत्य वरुणो रणायारुणलोचनः । राजीवपुण्डरीकाद्यैर्वृतः पुत्रैरयुध्यत ॥ ५८ ॥

१ सकुटुम्बः । २ रजनी । ३ कोकिला ४ । मौनम् । ५ कुत्सितं वदतीति कद्वदः ।

तस्मिन्महति सङ्ग्रामे वीरैर्वरुणसूनुभिः । योधयित्वा च बद्ध्वा च निन्याते खरदूषणौ ॥ ५९ ॥
अभज्यत ततः सैन्यं राक्षसानामशेषतः । कृतार्थमानी वरुणोऽप्याविशन्नगरीं निजाम् ॥ ६० ॥
विद्याधरेन्द्रानाह्वातुं प्राहिणोद्रावणोऽपि हि । दूतान् प्रत्येकमप्यथ भवते प्रेषितस्त्वहम् ॥ ६१ ॥
प्रह्लादोऽथ दशास्याय साहायककृते स्वयम् । यावच्चचाल तावत्तमुवाच पवनञ्जयः ॥ ६२ ॥
इहैव तिष्ठ तात त्वं दशग्रीवमनोरथम् । पूरयिष्याम्यहमपि तवास्मि तनयो ननु ॥ ६३ ॥
इत्युदीर्य सनिर्बन्धं पितरं चानुमान्य सः । लोकं चाशेषमामाप्य चचाल पवनञ्जयः ॥ ६४ ॥
श्रुत्वाञ्जना जनमुखात्पत्युर्यात्रामथोत्सुका । देवीव व्योमशिखरात् प्रासादादवरुह्य च ॥ ६५ ॥
तमीक्षितुमवष्टभ्य स्तम्भं पाञ्चालिकेव सा । निर्निमेषेक्षणा तस्थावस्वास्थ्यमथिताशया ॥ ६६ ॥ युग्मम् ॥
द्वारस्तम्भनिषण्णाङ्गीं प्रतिपच्चन्द्रकृशाम् । लुलितालकसञ्छन्नललाटां निर्विलेपनाम् ॥ ६७ ॥
नितम्बन्यस्तविस्रस्तश्लथलम्बिभुजालताम् । ताम्बूलरागरहितधूसराधरपल्लवाम् ॥ ६८ ॥
बाष्पाम्बुक्षालितमुखीमुन्मुखां पुरतः स्थिताम् । अञ्जना व्यञ्जनाङ्गं ददर्श पवनो व्रजन् ॥ ६९ ॥

॥ त्रिभिर्विशेषकम् ॥

स निर्ध्यायन्निदं दध्यौ सद्यः प्रह्लादनन्दनः । अहो निर्ह्रीत्वमेतस्या निर्भीत्वमपि दुर्धियः ॥ ७० ॥
अथवा ज्ञातमेतस्या दौर्मनस्यं पुरापि हि । ऊढा तु मया पित्रोराज्ञालङ्घनभीरुणा ॥ ७१ ॥

---

१ अस्वास्थ्येन मथितं चित्तं यस्याः सा । २ नितम्बे न्यस्ता धारिता विस्रस्ता श्लथा लम्बिनी भुजलता यया सा । ३ अञ्जनरहितनेत्राम् । ४ पश्यन् ।

पतित्वा पादयोस्तस्य साप्यूचे रचिताञ्जलिः । त्वया सम्भाषितः सर्वोऽप्यहं तु न मनागपि ॥ ७२ ॥
विज्ञप्यसे तथापि त्वं विस्मार्या न ह्यहं त्वया । पुनरागमनेनाशु पन्थानः सन्तु ते शिवाः ॥ ७३ ॥
इति ब्रुवाणां तां दीनामहीनचरितामपि । ययाववगणय्यैव जयाय पवनञ्जयः ॥ ७४ ॥
पत्यवज्ञावियोगार्ता गत्वान्तर्वेश्म भूतले । वारिमिश्रतला सिन्धुतटीव निपपात सा ॥ ७५ ॥
पवमानवदुत्पत्य तदा प्रह्लादनन्दनः । जगाम मानससरस्युवास च निशामुखे ॥ ७६ ॥
विकृत्य तत्र प्रासादमध्यास्त पवनञ्जयः । विद्याधराणां विद्यैव सर्वसिद्धिषु कामधुक् ॥ ७७ ॥
तत्र पर्यङ्कमारूढः सरःपरिसरावनौ । आर्तां प्रियवियोगेन चक्रवाकीं ददर्श सः ॥ ७८ ॥
पूर्वोपात्तामभुञ्जानां मृणाललतिकामपि । तप्यमानां हिमेनापि क्वथितेनेव वारिणा ॥ ७९ ॥
दूयमानां ज्योत्स्नयापि वह्न्यर्चिश्छटयेव ताम् । क्रन्दन्तीं करुणं प्रेक्ष्य स एवं पर्यचिन्तयत् ॥ ८० ॥ युग्मम् ॥
सकलं वासरं पत्या रमन्ते चक्रवाकिकाः । न सोढुमीशते नक्तमपि तद्विरहं पुनः ॥ ८१ ॥
उद्वाहतोऽपि या त्यक्ता भाषिता या न जातुचित् । आगच्छताप्यवज्ञाता परनारीव या मया ॥ ८२ ॥
आक्रान्ता दुःखभारेण पर्वतेनेव मूलतः । अदृष्टमत्सङ्गसुखा सा कथं हा भविष्यति ॥ ८३ ॥
धिग्धिङ्ममाविवेकेन म्रियते सा तपस्विनी । तद्धत्यापातकेनाहं क्व गमिष्यामि दुर्मुखः ॥ ८४ ॥
इति चिन्तितमात्मीयमाख्यत्प्रहसिताय सः । स्वदुःखाख्यानपात्रं हि नापरः सुहृदं विना ॥ ८५ ॥
प्रोचे प्रहसितोऽप्येवं साध्वज्ञासीश्चिरादपि । नूनं विपद्यते साद्य सारसीव वियोगतः ॥ ८६ ॥

१ पत्युरवज्ञया वियोगेन च पीडिता । २ विवाहात् ।

आश्वासयितुमद्यापि सखे सा तव युज्यते । प्रियोक्त्या तामनुज्ञाप्य स्वार्थाय पुनरापते ॥ ८७ ॥
हृदेव सुहृदा तेन भावसंवादिनेरित । ययावञ्जनसुन्दर्या वेश्मन्युत्पत्य मारुत ॥ ८८ ॥
किञ्चित्तिरोहितस्तस्थौ द्वार्येव पवनञ्जय । अग्रे भूत्वा प्रहसित प्राविशच्च तदोकसि ॥ ८९ ॥
वेल्लन्तीमधिपर्यङ्क तोयेऽल्पे शफरीमिव । पीड्यमाना ज्योत्स्नयापि हिमेनेव सरोजिनीम् ॥ ९० ॥
भ्रन्तर्हृदयसन्तापप्रस्फुटद्धारमौक्तिकाम् । उन्मुक्तदीर्घनिश्वासतरलालकमालिकाम् ॥ ९१ ॥
अधिनिषण्णानि स्रस्तदोर्लम्बमणिकङ्कणाम् । वसन्ततिलकासख्याश्वास्यमाना मुहुर्मुहु ॥ ९२ ॥
शून्यदृक्तद्वत् शून्यचित्तां काष्ठमयीमिव । इत्याभ्यके प्रहसितस्तत्र चाञ्जनसुन्दरीम् ॥ ९३ ॥

॥ चतुर्भि कलापकम् ॥

अकस्मादप्यन्तर इव को नामेह समाययौ । इति भीतापि सा धैर्यमवलम्ब्येदमब्रवीत् ॥ ९४ ॥
अहो कस्त्वमिहायासी परपुंसाथवा त्वया । अल ज्ञातेन मेह स्था परनारीनिकेतने ॥ ९५ ॥
वसन्ततिलके दोष्णा विधृत्यैन बहि क्षिप । क्षपाकरविशुद्धास्मि नैन द्रष्टुमपि क्षमा ॥ ९६ ॥
पवनञ्जयमुज्झित्वामुष्मिन्मम निकेतने । न प्रवेशाधिकारोऽस्ति कस्यापि किमुदीक्षसे ॥ ९७ ॥
नत्वा प्रहसितोऽवादीद्दिष्ट्या स्वामिनि वर्धसे । चिरादायातसोत्कण्ठपवनञ्जयसङ्गमात् ॥ ९८ ॥
तस्य मित्र प्रहसितो मन्मथस्येव माधव । अग्रेसरोऽहमायातोऽन्वायात विद्धि च प्रियम् ॥ ९९ ॥

---

१ चाटुवचनेन । २ भावो मनोऽभिप्रायस्तं संवदति तेन । ३ लुठन्तीम् । ४ हृदय संतापेन प्रस्फुटन्ति हारस्य मौक्तिकानि यस्मास्ताम् । ५ अलकाः केशाः ।

अञ्जनापि जगादैवं हसितां विधिनैव माम् । मा हसीस्त्वं प्रहसित क्षणोऽयं न हि नर्मणः ॥ १०० ॥
अथवा नैष दोषस्ते दोषो मत्पूर्वकर्मणाम् । कुलीनस्तादृशो भर्ता त्यजेन्मां कथमन्यथा ॥ १०१ ॥
पाणिग्रहात्प्रभृत्येव मुक्तायाः स्वामिना मम । द्वाविंशतिःसमा जग्मुर्जीवाम्यद्यापि पापिनी ॥ १०२ ॥
अथ सङ्क्रान्ततद्दुःखप्राग्भारपवनञ्जयः । अन्तः प्रविश्य व्याहार्षीद्बाष्पगद्गदवागिदम् ॥ १०३ ॥
निर्दोषा दोषमारोप्य त्वमुद्वाहात्प्रभृत्यपि । अवज्ञातास्यविज्ञेन मयका विज्ञमानिना ॥ १०४ ॥
मद्दोषादीदृशीमाणा दुःसहां दुर्दशां प्रिये । मृत्युं प्राप्तापि मद्भाग्यैः स्तोकान्मुक्तासि मृत्युना ॥ १०५ ॥
इत्युक्तवन्तं सा नाथमुपलक्ष्य त्रपावती । पर्यङ्केषामवष्टभ्याभ्युत्तस्थौ विनमन्मुखा ॥ १०६ ॥
लतां हस्तीव हस्तेन दोष्णा वलयितेन ताम् । आददानोऽधिपर्यङ्कं न्यषदत्पवनञ्जयः ॥ १०७ ॥
भूयस्तां पवनोऽवोचन्मयातिक्षुद्रबुद्धिना । निरागाः खेदितासि त्वं तत्सहस्व प्रिये मम ॥ १०८ ॥
अवोचदञ्जनाप्येवं नाथ मा स्म ब्रवीरिदम् । सदैव तव दास्यस्मि क्षामणानुचिता मयि ॥ १०९ ॥
निर्जगाम प्रहसितो वसन्ततिलकाप्यथ । रहःस्थयोर्हि दम्पत्योर्न च्छेकाः पार्श्ववर्तिनः ॥ ११० ॥
रेमाते तत्र च स्वैरमञ्जनापवनञ्जयौ । विरराम रसावेशाच्चैकयामेव यामिनी ॥ १११ ॥
प्रभातां रात्रिमालोक्य तामूचे पवनञ्जयः । जयाय कान्ते यास्यामि ज्ञास्यन्ति गुरवोऽन्यथा ॥ ११२ ॥
खेदं मातः परं कार्षीः सुखं तिष्ठ सखीवृता । दशास्यकृत्य सम्पाद्य यावदायामि सुन्दरि ॥ ११३ ॥
साप्युवाचेति तत्कृत्यं दोष्मतः सिद्धमेव ते । कृतार्थः शीघ्रमागच्छेर्जीवन्तीं मां यदीच्छसि ॥ ११४ ॥

१ ईषा पर्यङ्कस्यावयवविशेषः । २ वलयमिवाचरितेन । ३ निरपराधा । ४ चतुराः । ५ पार्श्वस्था ।

अपरं च ऋतुस्नातास्म्यधव यदि मे भवेत् । गर्भस्तत्त्वत्परोक्षेऽपवदेयुः पिशुना मयि ॥ ११५ ॥
पवनोऽप्याललापैवं शीघ्रमेष्यामि मानिनि । मय्यायाते कथं क्षुद्रावकाशो भविता त्वयि ॥ ११६ ॥
अथवा गृह्यतामेतन्मदागमनसूचकम् । मन्नामाङ्कमङ्गुलीयं समये तत्प्रकाशये ॥ ११७ ॥
अर्पयित्वाङ्गुलीयं स्वमुत्पत्य पवनञ्जयः । जगाम मानससरस्तीरस्थे शिबिरे निजे ॥ ११८ ॥
ततोऽपि सह सैन्येन नाकीव व्योमवर्त्मना । जगाम लङ्कानगरीं रावणं प्रणनाम च ॥ ११९ ॥
रावणोऽपि प्रविश्याथ पातालं पृतनान्वितः । प्रययौ प्रति वरुणं तरुणार्क इव त्विषा ॥ १२० ॥
इतश्च तद्दिने गर्भं बभाराञ्जनसुन्दरी । विशेषसुन्दरीभूतसर्वावयवशालिनी ॥ १२१ ॥
मुखमापाण्डुगण्डश्रि श्यामवक्त्रौ पयोधरौ । गतिर्नितान्तमलसा नेत्रे च प्रसृतोज्ज्वले ॥ १२२ ॥
गर्भलक्ष्माणि चान्यानि तस्या व्यक्तानि वर्ष्मणि । दृष्ट्वा केतुमती श्वश्रूः साधिक्षेपमदोऽवदत् ॥ १२३ ॥
॥ युग्मम् ॥
हले किमिदमाचारि कुलद्वयकलङ्ककृत् । देशान्तरगते पत्यौ पापे यदुदरिण्यभूः ॥ १२४ ॥
स्वपुत्रे त्वदवज्ञायामज्ञाप्यज्ञानदोषिता । इयच्चिरं त्वमस्माभिर्न हि ज्ञातासि पांसुला ॥ १२५ ॥
एवं निर्भर्त्सिता श्वश्र्वा साश्रुरञ्जनसुन्दरी । पत्युरागमचिह्नं तदङ्गुलीयमदर्शयत् ॥ १२६ ॥

---

१ विशेषेण सुन्दरीभूताः सर्वावयवास्तैः शालिनी । २ प्रसृते च ते उज्ज्वले चेति समासः । ३ शरीरे । ४ गर्भिणी । ५ तव तिरस्कारविषये मया स्वपुत्रेऽज्ञानदोषित्वमज्ञायि ज्ञातम्, मम पुत्रस्तव तिरस्कारं करोति तत्र पुत्रस्यैव दोषो मया पुरा ज्ञात आसीदिति तात्पर्यम् ।

सा लज्जानम्रमुख्येवं श्वश्र्वा भूयोऽप्यभर्त्स्यत । यस्तेऽहीन्न नामापि कथं ते तेन सङ्गमः ॥ १२७ ॥
अङ्गुलीयकमात्रेण प्रतारयसि नः कथम् । प्रतारणाप्रकारान् हि बहूञ्जानन्ति पांसुलाः ॥ १२८ ॥
मद्गृहादद्य निर्गच्छ गच्छ स्वच्छन्दचारिणि । पितुर्वेश्मनि मात्र स्थाः स्थानमेतन्न हीदृशाम् ॥ १२९ ॥
तर्जयित्वाञ्जनामेवं नेतुं पितृनिकेतने । आदिक्षद्दारक्षनरान्निःकृपा राक्षसीव सा ॥ १३० ॥
तां च ते यानमारोप्य वसन्ततिलकान्विताम् । महेन्द्रनगरोपान्ते नीत्वामुञ्चन्नुदश्रवः ॥ १३१ ॥
तां मातृवन्नमस्कृत्य क्षमयित्वा च ते ययुः । स्वामिवत्स्वाम्यपत्येऽपि सेवकाः समवृत्तयः १३२ ॥
तद्दुःखदुःखित इव तदा चास्तमगाद्रविः । सन्तः सतां न विपदं विलोकयितुमीश्वराः ॥ १३३ ॥
घूकानां घोरघूत्कारैः फेत्कारैः फेरुयोषिताम् । क्रन्दितैर्वृकवृन्दानां श्वाविधां विविधैः स्वनैः ॥ १३४ ॥
तुमुलैः पिङ्गलानां च सङ्गीतैरिव रक्षसाम् । स्फुटत्कर्णेव सा कष्टं तां जाग्रत्यनयन्निशाम् ॥ १३५ ॥
॥ युग्मम् ॥

प्रातरुत्थाय सा दीना शालीनेव ह्रिया शनैः । ययौ पितृगृहद्वारे भिक्षुकीवापरिच्छदा ॥ १३६ ॥
दृष्ट्वा ससम्भ्रमस्तां च प्रतीहारोऽनुयुज्य च । अवस्थां तादृशीं सख्याख्यातां राज्ञे व्यजिज्ञपत् ॥ १३७ ॥
लज्जानतश्यामसुखो राजाप्येवमचिन्तयत् । अचिन्त्यं चरितं स्त्रीणां हि विपाको विधेरिव ॥ १३८ ॥
इयं कुलकलङ्काय कुलटा गृहमागता । अञ्जनाञ्जनलेशोऽपि दूषयत्यंशुकं शुचि ॥ १३९ ॥
इति चिन्ताप्रपन्नं तमप्रसन्नीभवन्मुखः । प्रसन्नकीर्तिस्तनयो नयनिष्ठोऽब्रवीदिति ॥ १४० ॥

१ श्वावित् भाषायां 'शाहुडी' इति । २ नकुलानाम् । ३ निर्लज्जा । ४ पुत्रः ।

द्रुत निर्वास्यतामेषा दूषित ह्यनया कुलम् । अहिदष्टाङ्गुलि किं न छिद्यते बुद्धिशालिना ॥ १४१ ॥
अथावोच महोत्साहो नाम म त्रीति भूपतिम् । श्वशुर खे दुहितॄणा शरण शरणं पितु ॥ १४२ ॥
किञ्च केतुमती श्वश्रूर्निर्दोषामप्यमू प्रभो । निर्वासयेदपि क्रूरा दोषमुत्पाद्य कञ्चन ॥ १४३ ॥
व्यक्तिर्यावन्नवेद्दोषादोषयोस्तावदत्र हि । प्रच्छन्न पाल्यतामेषा स्वपुत्रीति कृपां कुरु ॥ १४४ ॥
राजापीत्यवदच्छ्वश्रू सर्वत्र भवतीदृशी । ईदृक् चरित्र तु स्याद्वधूना न हि कुत्रचित् ॥ १४५ ॥
कि च हर्म्यगृहेऽप्येऽपि दुष्पय पवनस्य यत् । गर्भ सम्भाव्यतेऽमुष्या पवनादप तत्कथम् ॥ १४६ ॥
सर्वथा दोषवत्येषा साधु निर्वासिता त्वया । निर्वास्यतामितोऽपि द्राक् पश्चामस्त सुरत न हि ॥ १४७ ॥
इत्थ राजाज्ञया द्वा स्थो निरवासयदङ्गनाम् । जनैरपि कृताक्रन्दैर्दीनास्यं कष्टमीक्षिताम् ॥१४८ ॥
क्षुधिता तृषिता श्रान्ता नि श्वसन्त्यश्रुवर्षिणी । दर्भविद्धपदासृग्भी रञ्जयन्ती महीतलम् ॥ १४९ ॥
पदे पदे प्रस्खलन्ती विश्राम्यन्ती तरौ तरौ । सह सख्याञ्जनामालीप्रोदयन्ती दिशोऽपि हि ॥ १५० ॥
यत्र यत्र पुरे ग्रामे सागच्छत्तत्र तत्र च । पूर्वायातनृपपुम्भिर्निषेधान्नासदत् स्थितिम् ॥ १५१ ॥
पर्यटन्ती तु सा प्राप कामप्येका महाटवीम् । गिरिकुञ्जे तरोर्मूले निषद्य विललाप च ॥ १५२ ॥
अहो मे मन्दभाग्याया गुरूणामविचारत । अग्रे दण्डोऽभवत्पश्चादपराधविवेचनम् ॥ १५३ ॥
साधु कतुमति कुलकलङ्को रक्षितस्त्वया । त्वयापि सम्ब धिभयात्तात साधु विचारितम् ॥ १५४ ॥
दु खिताना हि नारीणां माताश्वासनकारणम् । पतिच्छन्दजुषा मातस्त्वयाप्यहमुपेक्षिता ॥ १५५ ॥

---

१ शायिते । २ पतीच्छानुवर्तिनी ।

भ्रातर्दोषोऽपि नास्त्येव ताते जीवति ते ननु । नाथ त्वयि च दूरस्थे जज्ञे सर्वोऽप्यरिर्मम ॥ १५६ ॥
सर्वथा स्त्री विना नाथं नैकाहमपि जीवतु । यथाहमेका जीवामि मन्दभाग्यशिरोमणिः ॥ १५७ ॥
विलपन्त्यञ्जना सख्या निन्ये सम्बोध्य चाग्रतः । ददर्शान्तर्गुहं ध्यानस्थं चामितगतिं मुनिम् ॥ १५८ ॥
चारणश्रमणं तं च प्रणम्य विनयेन ते । निषेदतुः पुरो भूमौ सोऽपि ध्यानमपारयत् ॥१५९ ॥
मनश्चिन्तितकल्याणमहारामैकसारणिम् । धर्मलाभाशिषं सोऽदात्करमुन्नम्य दक्षिणम् ॥ १६० ॥
नमस्कृत्य पुनर्भक्त्या वसन्ततिलका तु सा । सर्वमप्यञ्जनादुःखमाचख्यौ मूलतोऽपि हि ॥ १६१ ॥
कोऽस्या गर्भेऽभवत्केन कर्मणा चेदृशीं दशाम् । सम्प्राप्तैषेति तत्सख्या पृष्टः स मुनिरब्रवीत् ॥ १६२ ॥
अस्यैव जम्बूद्वीपस्य क्षेत्रे भरतनामनि । मन्दरे नगरे नाम्ना प्रियनन्दीत्यभूद्वणिक् ॥ १६३ ॥
जयानाम्न्यां च जायायां तस्याजायत नन्दन । दमयन्तः प्रियदमः कलानां निधिरिन्दुवत् ॥ १६४ ॥
क्रीडन् सोऽन्येद्युरुद्याने स्वाध्यायध्यानतत्परान् । ददर्श साधूंस्तेभ्यश्च धर्मं शुश्राव शुद्धधीः ॥ १६५ ॥
सम्यक्त्वं नियमांश्चाथ जग्राह विविधानसौ । यथोचितं च साधुभ्यो ददौ दानमनिन्दितम् ॥ १६६ ॥
तपःसंयमनिष्ठोऽसौ विपद्य क्रमयोगतः । अभूत्कल्पे द्वितीयस्मिन्नमरः परमर्द्धिकः ॥ १६७ ॥
च्युत्वा ततो जम्बूद्वीपे मृगाङ्कनगरेशितुः । प्रियङ्गुलक्ष्म्यां पुत्रोऽभूद्धरिचन्द्रमहीपतेः ॥ १६८ ॥
सिंहचन्द्र इति ख्यातो जैनं धर्मं प्रपद्य स । विपद्य क्रमयोगाच्च देवेभुवमुपेयिवान् ॥ १६९ ॥
च्युत्वा चात्रैव वैताढ्ये नगरे वारुणेऽभवत् । सुकण्ठराजकनकोदर्योस्तुक् सिंहवाहनः ॥ १७० ॥

१ स्वर्गम् । २ पुत्रः ।

भुक्त्वा स सुचिरं राज्यं तीर्थे श्रीविमलप्रभो । लक्ष्मीधरमुने पादमूले व्रतमुपाददे ॥ १७१ ॥
दुस्तपं स तपस्तप्त्वा मृत्वाभूल्लान्तके सुरः । च्युत्वा ततोऽस्यास्त्वत्पत्न्या उदरे समवातरत् ॥ १७२ ॥
गुणानामालयश्चायं दोष्मान् विद्याधरेश्वरः । चरमदेहोऽस्या अनघो भविष्यति ॥ १७३ ॥
अत्रैव कनकपुरे नगरेऽभून्नरेश्वरः । नाम्ना कनकरथो महारथशिरोमणिः ॥ १७४ ॥
पत्न्यौ तस्य च कनकोदरी लक्ष्मीवतीति च । अत्यन्तश्राविका तत्र लक्ष्मीवत्यभवत्सदा ॥ १७५ ॥
गृहचैत्ये रत्नमयं जिनबिम्बं विधाय सा । अपूजयदवन्दिष्ट प्रत्यहं कालयोर्द्वयोः ॥ १७६ ॥
मात्सर्यात्कनकोदर्या हृत्वार्हत्प्रतिमा तु सा । चिक्षिपेऽवकरस्यान्तरपवित्रे हताशया ॥ १७७ ॥
अथ श्रीर्नाम गणिनी विहरन्त्यागता तदा । तद्दृष्ट्वा साध्व्युवाचैवमकार्षीः किमिदं शुभे ॥ १७८ ॥
भगवत्प्रतिमामत्र प्रक्षिपन्त्या त्वया कृतः । अनेकभवदुःखानामात्मायं कृत भाजनम् ॥ १७९ ॥
इत्युक्ता सानुतापा सा गृहीत्वा प्रतिमां ततः । प्रमृज्य क्षमयित्वा च यथास्थानं न्यवेशयत् ॥ १८० ॥
तदादि सम्यक्त्वधरा जैनं धर्मं प्रपाल्य च । काले विपद्य सौधर्मे कल्पे सा देव्यजायत ॥ १८१ ॥
च्युत्वा ततो महेन्द्रस्याभूत्सुतेयं सखी तव । अस्यास्तदर्हदर्चाया दुःस्थानक्षेपजं फलम् ॥ १८२ ॥
अस्यास्तस्मिन् भवे जामिस्त्वमभूस्तस्य कर्मणः । अनुमन्त्री च तत्पाकमनुभुङ्क्षेऽनया सह ॥ १८३ ॥
भुक्तप्रायमिदं चास्यास्तस्य तु कर्मणः फलम् । गृह्णीतं जिनधर्मं तच्छुभोदर्कौ भवे भवे ॥ १८४ ॥

१ अवकरः सङ्करः प्रमार्जन्यैकीकृत तृणादि । २ हतचित्ता । ३ अर्चा प्रतिमा । ४ भगिनी । ५ शुभ उदर्क उत्तरकालो यस्य सः ।

आयातो मातुलोऽकस्मादेतां नेता स्ववेश्मनि । मेलकश्चाचिरात्पत्या सहैतस्या भविष्यति ॥ १८५ ॥
एवमुक्त्वार्हते धर्मे स्थापयित्वा च ते उभे । समुत्पपात नभसा स मुनीन्द्रः खगेन्द्रवत् ॥ १८६ ॥
अथ पुच्छच्छटाच्छोटैः स्फोटयन्तमिवावनिम् । बूत्कारपूर्णदिक्कुञ्जं कुंजरासृक्करालितम् ॥ १८७ ॥
दीपायमाननयनं वज्रकन्दाभदंष्ट्रिकम् । क्रकचक्रूरदशनं ज्वालासोदरकेसरम् ॥ १८८ ॥
लोहाङ्कुशोपमनखं शिलासदृगुरःस्थलम् । पञ्चाननयुवानं ते समायान्तमपश्यताम् ॥ १८९ ॥ त्रिभिर्विशेषकम् ॥
ततो वेपथुमत्यौ ते विविक्षू इव भूतलम् । कान्दिशीके हारिणिके इव यावदतिष्ठताम् ॥ १९० ॥
मणिचूलाभिधस्तावद्गन्धर्वस्तद्गुहाधिपः । विकृत्य शारभं रूपं तं पञ्चास्यमनाशयत् ॥ १९१ ॥
संहृत्य शारभं रूपं स्वं रूपं प्रतिपद्य च । तयोः प्रमोदाय जगौ संप्रियोऽर्हद्गुणस्तुतिम् ॥ १९२ ॥
तेन चासुक्तसान्निध्ये गुहायां तत्र सुस्थिते । मुनिसुव्रतदेवार्चा स्थापयित्वार्चतः स्म ते ॥ १९३ ॥
अन्येद्युः सुषुवे तत्र सिंही सिंहमिवोत्कटम् । कुलिशाङ्कुशचक्राङ्कपादं तनयमञ्जना ॥ १९४ ॥
तस्याश्च सूतिकर्माणि वसन्ततिलकाकरोत् । स्वयं समाहृतैर्हर्षवशादेधोजलादिभिः ॥ १९५ ॥
आरोप्य सुतमुत्सङ्गे दुःखिताञ्जनसुन्दरी । उदश्रुवदनारोदीद्रोदयन्तीव तां गुहाम् ॥ १९६ ॥
महात्मन्नत्र विपिने तव जातस्य कीदृशम् । जन्मोत्सवं करोम्येषा वराकी पुण्यवर्जिता ॥ १९७ ॥
एवं तां रुदतीं प्रेक्ष्य समुपेत्य च खेचरः । प्रतिसूर्यो मधुरगीरपृच्छद्दुःखकारणम् ॥ १९८ ॥

---

१ गजशोणितेन भयङ्करम् । २ अष्टापदरूपम् । ३ भार्यासहितः ।

अथाविवाहादापुत्रजन्माचख्यावशेषत । अञ्जनाया दु खहेतु बाष्पायितमुखी सखी ॥ १९९ ॥
सद्यो रुदन् सोऽप्यवादीदह हनुपुरेश्वर । एषोऽस्मि सुन्दरीमालाकुक्षिभूश्चित्रभानुज ॥ २०० ॥
भ्राता मानसवेगाख्यस्त्वजनन्याश्च बालिके । दिष्ट्या त्वां दृष्टवानस्मि जीवन्तीमाश्वसिहि त ॥ २०१ ॥
॥ युग्मम् ॥

त मातुल विदित्वा साप्यरोदीदधिकाधिकम् । पुनर्नवीभवेत्प्रायो दु खमिष्टावलोकनात् ॥ २०२ ॥
रुदन्तीं वारयित्वा तां प्रतिसूर्य सहागतम् । सूनोर्जन्मादि पप्रच्छ दैवज्ञमथ सोऽवदत् ॥ २०३ ॥
भाव्यवश्य महाराजो भवे चात्रैव सेत्स्यति । शुभग्रहबले लग्न जातोऽय पुण्यभाक् शिशु ॥ २०४ ॥
तथाहि तिथिरिय चैत्रस्य बहुलाष्टमी । नक्षत्र श्रवण स्वामी वासरस्य विभावसु ॥ २०५ ॥
आदित्यो वर्तते मेषे भवन तुङ्गमाश्रित । चन्द्रमा मकरे मध्ये भवने समवस्थित ॥ २०६ ॥
लोहिताङ्गो वृषे मध्ये मध्ये मीने विधो सुत । कुलीरे धिषणोऽत्युच्चैरध्यास्य भवन स्थित ॥ २०७ ॥
मीने दैत्यगुरुस्तुङ्गस्तस्मिन्नेव शनैश्चर । मीनलग्नोदये ब्रह्मयोगे सर्वमिद शुभम् ॥ २०८ ॥
॥ चतुर्भि कलापकम् ॥

प्रतिसूर्योऽथ यामेयीं ससखीं सात्मजां च ताम् । विमानवरमारोप्य प्रतस्थे स्वपुर प्रति ॥ २०९ ॥
विमाने लम्बमानोच्चरत्नप्रालम्बकिङ्किणी । जिघृक्षुर्मातुरुत्सङ्गादुत्पपाताथ बालक ॥ २१० ॥

---

१ विवाहादारभ्य पुत्रजन्मपर्यन्तम् । २ सिद्धिमेष्यति । ३ कृष्णाष्टमी । ४ मङ्गलः । ५ कर्कराशौ धिषणो बृहस्पति । ६ भगिनीपुत्रीम् । ७ ग्रहीतुमिच्छुः ।

पपात च गिरेर्मूर्ध्नि व्योम्नः पविरिव च्युतः । तत्पातनिर्घातवशात् स गिरिः कणशोऽभवत् ॥ २११ ॥
आजघ्ने हृदयं सद्यः पाणिनाञ्जनसुन्दरी । देवीरपि प्रतिसूर्ये रोदयन्ती रुरोद च ॥ २१२ ॥
प्रतिसूर्योऽनुपत्याशु भागिनेय्यास्तमर्भकम् । अक्षताङ्गमुपादायार्पयन्नष्टनिधानवत् ॥ २१३ ॥
प्रतिसूर्यो विमानेन मनोवेगेन तद्युतः । ययौ पुरे हनुरुहे सद्यः कृतमहोत्सवे ॥ २१४ ॥
नीत्वा चोत्तारयामास स्ववेश्मन्यञ्जनां मुदा । कुलदेवीमिवायातां तच्छुद्धान्तोऽप्यपूजयत् ॥ २१५ ॥
पुरे हनुरुहे यस्माज्जातमात्रोऽयमाययौ । तत् सूनोर्मातुलश्चक्रेऽभिधानं हनुमानिति ॥ २१६ ॥
यच्छैलचूर्णितोऽनेन पतितेन विमानतः । ततः श्रीशैल इत्याख्यां तस्यान्यामपि सोऽकरोत् ॥ २१७ ॥
हनुमानप्यवर्धिष्ट तत्र क्रीडन् यथासुखम् । राजहंसार्भक इव मानसाम्भोजिनीवने ॥ २१८ ॥
दोषोऽध्यारोपितः श्वश्र्वा कथं नामोत्तरिष्यति । सदैव चिन्तयाताम्यदन्तःशल्येव चाञ्जना ॥ २१९ ॥
इतश्च पवनः सन्धिं विधाय खरदूषणौ । वरुणान्मोचयामास तोषयामास रावणम् ॥ २२० ॥
ततश्च रावणो लङ्कां जगाम सपरिग्रहः । पवनोऽपि तमापृच्छ्य स्वमेव पुरमाययौ ॥ २२१ ॥
प्रणम्य पितरौ तत्राञ्जनावासगृहं ययौ । तत्राञ्जनमद्राक्षीद्गतज्योत्स्नमिवोडुपम् ॥ २२२ ॥
क्वाञ्जना सा नयनयोरमृताञ्जनदर्शना । मत्प्रेयसीति तत्रस्थामेकां पप्रच्छ च स्त्रियम् ॥ २२३ ॥
साप्याख्यत्त्वयि यात्रायां गतेऽह्नस्तु कियत्स्वपि । निर्वासिता केतुमत्या गर्भसम्भवदोषतः ॥ २२४ ॥
महेन्द्रनगरासन्ने सा नीत्वारक्षपूरुषैः । अरण्ये मुमुचे पापैर्हरिणीव भयाकुला ॥ २२५ ॥

१ गुहाः । २ तस्यान्तःपुरम् । ३ अञ्जनारहितम् ।

इति श्रुत्वाथ पवनो ययौ पवनरंहसा । पारापत इव प्रयस्युत्कः श्वशुरपत्तनम् ॥ २२६ ॥
प्रियामपश्यस्तत्रापि पप्रच्छैकां स योषितम् । इहाञ्जना प्रेयसी मे किमायाताथवा न हि ॥ २२७ ॥
साचख्याविह सायासीद्वसन्ततिलकान्विता । परं निर्वासिता पित्रोत्पन्नदौःशील्यदोषतः ॥ २२८ ॥
पविनेवाहतस्तेन वचसा पवनञ्जयः । प्रियामन्वेष्टुमभ्राम्यद् भृशं शैलवनादिषु ॥ २२९ ॥
तत्प्रवृत्तिं न च प्राप शापभ्रष्ट इवामरः । विषण्णः स जगादैवं मित्रं प्रहसितं निजम् ॥ २३० ॥
सखे गत्वा वस पित्रोर्भ्रान्त्वतापि महीमिमाम् । मयाद्य यावदालोकि न काप्यञ्जनसुन्दरी ॥ २३१ ॥
पुनर्गवेषयिष्यामि तामरण्ये तपस्विनीम् । द्रक्ष्यामि चेत्साधु तर्हि नो चेद्वेक्ष्यामि पावकम् ॥ २३२ ॥
एवमुक्तः प्रहसितो गत्वादित्यपुरे द्रुतम् । प्रह्लादकेतुमत्योस्तत् कथयामास वाचिकम् ॥ २३३ ॥
श्रुत्वा केतुमती तच्च ग्राव्णेव हृदये हता । मूर्छिता न्यपतद् भूमौ सञ्ज्ञां लब्ध्वेत्युवाच च ॥ २३४ ॥
रे किं त्वया प्रहसित व्यापत्तौ कृतनिश्चयः । प्रियमित्रं वने मुक्त एकाकी कठिनाशय ॥ २३५ ॥
अथवा किं मया सापि निर्दोषा परमार्थतः । अविमृश्य विधायिन्या पापिन्या निरवास्यत ॥ २३६ ॥
लब्धं मयात्रैव साध्व्या दोषारोपणजं फलम् । अत्युग्रपुण्यपापानामिहैव ह्याप्यते फलम् ॥ २३७ ॥
एवं रुदन्तीं प्रह्लादस्तां निवार्य कथञ्चन । चचाल सबलः सूनुमन्वेष्टुं स इवाञ्जनाम् ॥ ३३८ ॥
सर्वविद्याधरेन्द्राणामाप्तानां चान्तिके नरान् । अञ्जनापवनान्वेषहेतवे प्रजिघाय स ॥ २३९ ॥
सह विद्याधरैः स्नुषां सुनुं चालोकयन् स्वयम् । प्रादुर्भूतत्वरो भ्राम्यन् सोऽगाद् भूतवनं वनम् ॥ २४० ॥

१ प्रियायामुत्सुकः । २ प्रवेशं करिष्यामि । ३ त्वरया । ४ प्रादुर्भूता त्वरा यस्य सः ।

पवनोऽत्रान्तरे तत्र विरचय्य चितां वने । ज्वलनं ज्वालयामास प्रह्लादस्तं ददर्श च ॥ २४१ ॥
स्थित्वोपचितं पवनः प्रोचे हे वनदेवताः । विद्याधरेन्द्रप्रह्लादकेतुमत्योः सुतोऽस्म्यहम् ॥ २४२ ॥
महासत्यञ्जना नाम पत्नी मे सा च दुर्धिया । निर्दोषापि मयोद्वाहात्प्रभृत्यपि हि खेदिता ॥ २४३ ॥
तां परित्यज्य यात्रायां चलित स्वामिकार्यतः । दैवाज्ज्ञात्वा तामदोषामुत्पत्य पुनरागमम् ॥ २४४ ॥
रमयित्वा च तां स्वैरमभिज्ञानं समर्प्य च । पितृभ्यामपरिज्ञातः पुनः कटकमापतम् ॥ २४५ ॥
जातगर्भा च सा कान्ता महादोषदोषशङ्किभिः । निर्वासिता मे गुरुभि क्वाप्यस्तीति न बुध्यते ॥ २४६ ॥
साग्रऽधुना च निर्दोषा सम्प्राप्ता दारुणां दशाम् । ममैवाज्ञानदोषेण धिग्धिक् पतिमपण्डितम् ॥ २४७ ॥
मया भ्रान्त्वाखिलां पृथ्वीं सम्यङ्मार्गयतापि हि । न साप्ता मन्दभाग्येन रत्नं रत्नाकरे यथा ॥ २४८ ॥
तदद्य स्वां तनुमिमां जुहोम्यत्र हुताशने । जीवतो मे यावज्जीवं दुःसहो विरहानलः ॥ २४९ ॥
यदि पश्यथ मे कान्तां ज्ञापयध्वं तदा ध्रुवं । त्वद्वियोगाच्च पति अविवेश हुताशने ॥ २५० ॥
इत्युक्त्वा तत्र चित्यायां दीप्यमाने हविर्भुजि । झम्पा प्रदातुं पवन प्रोत्पपात नभस्तले ॥ २५१ ॥
श्रुततद्वचनो वेगात् प्रह्लादोऽप्यतिसम्भ्रमी । वक्षःस्थलोपपीडं तं स्वबाहुभ्यामधारयत् ॥ २५२ ॥
मृत्योः प्रियवियोगार्तिप्रतीकारस्य सम्प्रति । को विघ्नोऽयं ममेत्युच्चैरूचाच पवनञ्जयः ॥ २५३ ॥
प्रह्लादोऽप्यब्रवीत्साश्रुरेष पापोऽस्मि ते पिता । निर्दोषाया यः स्नुषाया निर्वासनमुपैक्षत ॥ २५४ ॥
अविमृश्य कृतं तावच्चन्मात्रैवैकमादित । द्वितीयं मा कृथास्त्व तु स्थिरीभव सुधीरसि ॥ २५५ ॥

१ चितासमीपम् ।

स्नुषान्वेषणहेतोश्चादिष्टा सन्ति सहस्रश । विद्याधरा मया वत्सागमयस्व तदागमम् ॥ २५६ ॥
अत्रान्तरे तत्प्रहिता केऽपि विद्याधरोत्तमा । गवेषयन्त पवनाञ्जने हनुपुर ययु ॥ २५७ ॥
प्रतिसूर्याञ्जनयोस्तेऽञ्जनाविरहदु खत । पवनस्याग्निप्रवेशप्रतिज्ञामाचचक्षिरे ॥ २५८ ॥
दु श्रव तद्वच श्रुत्वा पीत्वा विषमिवाञ्जना । हा हतास्मीति जल्पन्ती पपात भुवि मूर्छिता ॥ २५९ ॥
आसिक्ता चन्दनाम्भोभिस्तालवृन्तैश्च वीजिता । लब्धसञ्ज्ञा समुत्थाय सा रुरोदेति दीनगी ॥ २६० ॥
पतिव्रता पतिशोकात् प्रविशन्ति हुताशने । तासां विना हि भर्तारं दु खाय खलु जीवितम् ॥ २६१ ॥
नारीसहस्रभोक्तृणां भर्तृणां श्रीमतां पुन । क्षणिक प्रेयसीशोकस्तत्कुतोऽग्नि प्रवेशनम् ॥ २६२ ॥
विपरीतमिद जज्ञे त्वयि वह्निप्रवेशिनि । विरहेऽपि मयि पुनर्हा जीवन्त्यामियच्चिरम् ॥ २६३ ॥
महासत्त्वस्य तस्याल्पसत्त्वायाश्च ममान्तरम् । उपलब्धमिद नीलकाचयोरिव सम्प्रति ॥ २६४ ॥
न मे श्वशुरयोर्दोषो दोष पित्रोर्न चाप्ययम् । ममैव मन्दभाग्याया कर्मदोषोऽयमीदृश ॥ २६५ ॥
रुदन्तीं बोधयित्वा तां प्रतिसूर्य सनन्दनाम् । विमानवरमारोप्य पवनान्वेषणे ययौ ॥ २६६ ॥
स भ्राम्यन् प्राप तत्रैव वने भूतवनाभिधे । दूरादपि प्रहसितेनेक्षाञ्चक्रे च साश्रुणा ॥ २६७ ॥
साञ्जन स समायान्तमारात् प्रहसित स तु । आख्यत्प्रह्लादपवनञ्जययोर्नयपूर्वकम् ॥ २६८ ॥
ततो विमानादुत्तीर्य प्रतिसूर्योऽञ्जनापि च । प्रह्लाद नेमतुर्दूराद्भक्त्या भून्यस्तमस्तकौ ॥ २६९ ॥
प्रतिसूर्यं परिष्वज्य पौत्रमङ्के निवेश्य च । प्रह्लादो जातसह्लादो जगादेव ससम्भ्रम ॥ २७० ॥

---

१ नीलमणेः काचस्य च ।

मज्जन्तं व्यसनाम्भोधौ मामद्य सकुटुम्बकम् । समुद्धरंस्त्वमेवासि बन्धुः सम्बन्धिनां धुरि ॥ २७१ ॥
मद्वंशपर्वभूतेयं शाखासन्तानकारणम् । स्नुषा त्यक्ता विना दोषं साध्वियं रक्षिता त्वया ॥ २७२ ॥
सद्यो व्यसनवेलाया न्यवर्तत पयोधिवत् । प्रशान्तशोकज्वलनो मुदितः पवनोऽपि हि ॥ २७३ ॥
विद्यासामर्थ्यतस्तत्र सर्वविद्याधरेश्वराः । महान्तमुत्सवं चक्रुरानन्दाब्धिनिशाकरम् ॥ २७४ ॥
पुरं हनुरुहं जग्मुस्ततः सर्वेऽपि ते मुदा । विमानैर्विद्धानाः स्वैर्दिवं ज्योतिष्मतीमिव ॥ २७५ ॥
महेन्द्रोऽप्याययौ तत्र समं मानसवेगया । सा च केतुमती देवी सर्वेऽप्यन्ये च बान्धवाः ॥ २७६ ॥
विद्याधरेन्द्रैर्विदधे मिथः सम्बन्धिबन्धुभिः । पूर्वोत्सवादप्यधिकस्तत्रापि हि महोत्सवः ॥ २७७ ॥
ततश्चान्योन्यमापृच्छ्य सर्वे स्वं स्वं पुरं ययुः । तत्रैव पवनस्तस्थावञ्जनाहनुमद्युतः ॥ २७८ ॥
हनुमान् ववृधे तत्र पितुः सह मनोरथै[1] । कलाश्च जगृहे सर्वा विद्याश्च समसाधयत् ॥ २७९ ॥
नागराजायतभुजः शस्त्रशास्त्रविचक्षणः । क्रमाच्च यौवनं प्राप हनुमान् भानुमास्त्विषा ॥ २८० ॥
इतश्चामर्षणप्रष्ठो[1] रावणः सन्धिदूषणम् । उत्पाद्य वरुणं जेतुं प्रतस्थे स्थेमपर्वतः[2] ॥ २८१ ॥
दूताहूतास्ततश्चेयुः सर्वे विद्याधरेश्वरा । कटकं[3] तस्य कुर्वन्तो वैताढ्यकटकोपमम्[4] ॥ २८२ ॥
पवनप्रतिसूर्यौ तौ तत्र यावत्प्रचेलतुः । इत्यूचे हनुमांस्तावद्वष्टम्भैकसानुमान् ॥ २८३ ॥
इहैव तिष्ठतं तातौ जेष्याम्यहमपि द्विषः । प्रहरेद्धाहुना को हि तीक्ष्णे प्रहरणे सति ॥ २८४ ॥
बालत्वान्नानुकम्प्योऽस्मि यद्युष्मत्कुलजन्मनाम् । पौरुषावसरे प्राप्ते न प्रमाणं वयः खलु ॥ २८५ ॥

---

१ क्रोधवत्सु श्रेष्ठः । २ स्थैर्यपर्वतः । ३ सैन्यम् । ४ गिरिमध्यभागः कटकम् ।

एवं तावतिनिर्बन्धात् प्रतीष्याप्टच्छय चोच्चकैः । ताभ्यां च चुम्बितो मूर्ध्नि कृतप्रस्थानमङ्गलः ॥ २८६ ॥
महासामन्तसेनानीसेनाशतसमावृत्व । प्रययौ रावणस्कन्धावारे दुर्धरविक्रमः ॥ २८७ ॥ युग्मम् ॥
हनुमन्तं समायातं दृष्ट्वा जयमिव स्वयम् । प्रणमन्तं मुदा स्वाङ्के निदधे दशकंधरः ॥ २८८ ॥
अभ्यर्णे वरुणपुर्यास्तस्थौ युद्धाय रावणः । वरुणो वारुणेयाश्च दोष्मन्तो निर्ययुः शतम् ॥ २८९ ॥
अभ्येत्य योधयामास रावणं वरुणात्मजाः । सुग्रीवाद्यैः समं वीरैर्युयुधे वरुणोऽपि हि ॥ २९० ॥
महौजसो वारुणयोऽरुणाक्षा दशकन्धरम् । आलय्यानं इव क्रोडं खेदयामासुराहवे ॥ २९१ ॥
अत्रान्तरे च हनुमान् दारुणो वरुणात्मजान् । कुञ्जरान् केसरीवैत्यायोधयत् क्रोधदुर्धरः ॥ २९२ ॥
विद्यासामर्थ्यतोऽस्तभ्नाद्वारुणींस्तान् बबन्ध च । पशूनिव क्रुधा रक्तहनुको हनुमानथ ॥ २९३ ॥
तान् दृष्ट्वा वरुणः क्रुद्धोऽभ्यधाविष्ट हनुमते । सुग्रीवप्रमुखान् धुन्वन्दन्ती मार्गतरूनिव ॥ २९४ ॥
रावणोऽभ्यायतन्तं तं नदीरयमिवाचलः । अन्तरा स्खलयामास वर्षन् विशिखैर्घोरणीम् ॥ २९५ ॥
वृषभो वृषभेणेव कुञ्जरेणेव कुञ्जरः । वरुणो रावणेनोच्चैः क्रोधान्धो युयुधे चिरम् ॥ २९६ ॥
सर्वौजसाकुलीकृत्य वरुणं रावणश्छली । उत्पत्येन्द्रमिवाबध्नात् सर्वत्र बलवच्छलम् ॥ २९७ ॥
ततो जयजयारावैर्मुखरीकृतदिङ्मुखः । स्कन्धावारं पृथुस्कन्धो जगाम दशकंधरः ॥ २९८ ॥
रावणो वरुणं तत्र सह पुत्रैरबन्धयत् । मुमोच प्रणिपातान्तः प्रकोपो हि महात्मनाम् ॥ २९९ ॥

१ वरुणपुत्राः । २ किरिम् । ३ बाणश्रेणिम् ।

पुत्रीं सत्यवतीं नाम वरुणोऽदाद्धनूमते । दृष्टसारः स्वयं ह्रीदृग्जामाता दुर्लभः खलु ॥ ३०० ॥
लङ्कायां रावणोऽथागाददत्त च हनूमते । हृष्टश्चन्द्रणखापुत्रीमनङ्गकुसुमाभिधाम् ॥ ३०१ ॥
सुग्रीवेण पद्मरागा नलेन हरिमालिनी । अन्यैः सहस्रसङ्ख्याश्च तस्मै दत्ताः स्वकाः सुताः ॥ ३०२ ॥
श्लिष्ट्वा दृढं दशमुखेन मुदा विसृष्टो दोष्मानथो हनुपुरे हनुमाञ्जगाम
अन्येऽपि वानरपतिप्रमुखाः मजग्मुर्विद्याधरा निजनिजं नगरं प्रहृष्टाः ॥ ३०३ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि
हनुमदुत्पत्तिवरुणसाधनो नाम तृतीयः सर्गः ।

## ॥ अथ चतुर्थ सर्ग ॥

इतश्च मिथिलापुर्यां हरिवंशे महीपति । आसीद्वासवकेत्वाख्यो विपुला तस्य च प्रिया ॥ १ ॥
तयो सूनुरनूनश्रीर्बभूव भुवि विश्रुत । प्रजानां जनक इव जनको नाम पार्थिव ॥ २ ॥
इतश्च पुर्ययोध्यायामृषभस्वामिराज्यत । इक्ष्वाकुवंशान्तर्भूतादित्यवंशेषु राजसु ॥ ३ ॥
यातेषु केषुचिन्मोक्ष स्वर्ग यातेषु केषुचित् । सङ्ख्यातीतेषु विंशस्यार्हतस्तीर्थे प्रसर्पति ॥ ४ ॥
बभूव विजयो राजा हिमचूला च तत्प्रिया । तयोरभूतां द्वौ पुत्रौ वज्रबाहुपुरन्दरौ ॥ ५ ॥
इतश्चाभून्नागपुरे पुरे राजेभवाहन । चूडामणिश्च तत्पत्नी तत्पुत्री च मनोरमा ॥ ६ ॥
गतोद्यद्यौवना वज्रबाहु परिणिनाय ताम् । मंहेन महता श्वेतमरीचिरिव रोहिणीम् ॥ ७ ॥
श्वस्त्या च श्यालेनोदयसुन्दरेणानुगामिना । मनोरमामथादाय प्रतस्थे स्वपुराय स ॥ ८ ॥
स गच्छन्नन्तरापश्यत्तपस्तेजोभिरीश्वरम् । वसन्ताद्रिस्थमुदयाचलस्थमिव भास्करम् ॥ ९ ॥
मोक्षाध्वमीक्षकमिवोत्पक्ष्मयमातापनापरम् । गुणसागरनामानं तपस्यन्त महामुनिम् ॥ १० ॥

॥ युग्मम् ॥

मयूर इव जीमूत त दृष्ट्वा जातसम्मद । कुमार इदमाह स्म धृत्वा सपदि वाहनम् ॥ ११ ॥
अहो महात्मा कोऽप्येष वन्द्य एव महामुनि । चिन्तामणिरिव मया दृष्ट पुण्येन भूयसा ॥ १२ ॥

---

१ महोत्सवेन । २ चन्द्र । ३ ऊर्ध्वं द्रष्टारम् । ४ जातहर्ष ।

उवाच चैवमुदयसुन्दरोऽथ कुमार किम् । आदित्ससे परिव्रज्यां सोऽवदच्चित्तमस्ति मे ॥ १३ ॥
उदयो नर्मणा भूयः प्रोचे यद्यस्ति ते मनः । तदद्य मा विलम्बस्व सहायोऽहमपीह ते ॥ १४ ॥
कुमारो व्याजहारैवं मर्यादामिव वारिधिः । मा त्याक्षीः स्वामिमां सन्धां सोऽप्योमेवेत्यभाषत ॥ १५ ॥
कुमारो वाहनान्मोहादिवोच्चैर्यारुरोह तम् । वसन्तशैलमुदयसुन्दरादिभिरावृतः ॥ १६ ॥
वज्रबाहुमथावादीदिभवाहननन्दनः । स्वामिन्मा प्राव्राजीरद्य धिग्मे नर्माभिभाषणम् ॥ १७ ॥
नर्मोक्तिरावयोरासीत् को दोषस्तद्व्यतिक्रमे । नर्मोक्तिर्न हि सत्यैव प्रायो धवलगीतवत् ॥ १८ ॥
भविष्यसि सहायस्त्वं व्यसनेष्वखिलेष्वपि । इत्यकाण्डेऽपि मा भाङ्क्षीरस्मत्कुलमनोरथान् ॥ १९ ॥
इदमद्यापि माङ्गल्यं तव हस्तेऽस्ति कङ्कणम् । तद्विवाहफलं भोगान् सहसा कथमुज्झसि ॥ २० ॥
सांसारिकसुखास्वादवञ्चितेयं मनोरमा । जीविष्यति कथं नाथ त्वया तृणवदुज्झिता ॥ २१ ॥
वज्रबाहुकुमारोऽथ जगादोदयसुन्दरम् । सुन्दरं मर्त्यजन्मद्रोः फलं चारित्रलक्षणम् ॥ २२ ॥
नर्मोक्तिरपि तेऽस्माकु बभूव परमार्थसात्[1] । शुक्तिषु स्वातिजीमूतवारि मौक्तिकसादिव ॥ २३ ॥
त्वत्स्वसा च कुलीना चेत्तत्प्रव्रज्यां ग्रहीष्यति । नो चेदस्याः शिवः पन्था भोगैः पुनरलं मम ॥ २४ ॥
तद्व्रतायानुमन्यस्व मां त्वमप्यनुयाहि नः । कुलधर्मः क्षत्रियाणां स्वसन्धापालनं खलु ॥ २५ ॥
उदयं प्रतिबोध्यैवं वज्रबाहुरुपाययौ । सागरं गुणरत्नानां महर्षिं गुणसागरम् ॥ २६ ॥
तत्पादान्ते वज्रबाहुः परिव्रज्यामुपाददे । उदयो मनोरमाथ कुमाराः पञ्चविंशतिः ॥ २७ ॥

१ सर्वपरमार्थरूपा ।

वज्रबाहु प्रव्रजित श्रुत्वा विजयभूपति । घर बालोऽप्यसौ नाहमिति वैराग्यमासदत् ॥ २८ ॥
ततश्च विनय पुत्र राज्य न्यस्य पुरन्दरम् । निर्वाणमोहस्य मुने पार्श्वे व्रतमुपाददे ॥ २९ ॥
पुरन्दरोऽपि स्वे राज्ये पृथिवीकुक्षिज सुतम् । न्यस्य कीर्तिधर क्षेमङ्करपर्यन्तेऽभवद्यति ॥ ३० ॥
अथ कीर्तिधरो राजाभुङ्क्त वैषयिक सुखम् । सहदेव्या सम पत्न्या पौलोम्येव पुरन्दर ॥ ३१ ॥
प्रविव्रजिषुरन्येद्यु स मन्त्रिभिरभण्यत । तवानुत्पन्नपुत्रस्य न व्रतादानमर्हति ॥ ३२ ॥
त्वय्यपुत्रे व्रतभाजि निनाथेयं वसुंधरा । तत्प्रतीक्षस्व यावत्ते स्वामिन्नुत्पद्यते सुत ॥ ३३ ॥
तत कीर्तिधरस्यापि तथैव गृहवासिन । काले गच्छत्यभूत्पुत्र सहदेव्या सुकोशल ॥ ३४ ॥
ज्ञात्वा जातमिम बाल पतिर्मे प्रव्रजिष्यति । सहदेवीति बुद्ध्या त जातमात्रमगोपयत् ॥ ३५ ॥
विवेद मेदिनीनाथस्त गुप्तमपि बालकम् । भासोदय हि तेरणि तिरोधातु क ईश्वर ॥ ३६ ॥
राजाथ स्वार्थकुशलो राज्ये न्यस्य सुकोशलम् । सूरेर्विजयसेनस्य पादान्ते व्रतमाददे ॥ ३७ ॥
तप्यमानस्तपस्तीव्र सहमान परीषहान् । स्वगुर्वनुज्ञयैकाकिविहारेणान्यतो ययौ ॥ ३८ ॥
साकेतमन्यदा मासोपवासी पारणेच्छया । स आजगाम भिक्षार्थं मध्याह्ने तत्र चाभ्रमत् ॥ ३९ ॥
सौधाग्रस्था सहदेवी त च दृष्ट्वेत्यचिन्तयत् । पत्य प्रव्रजितेऽमुष्मिन् पतिहीना पुराभवम् ॥ ४० ॥
वत्स सुकोशलोऽप्यद्य दृष्ट्वैन प्रव्रजेद्यदि । तदा पुत्रोऽपि मे न स्यान्निर्वीरा स्यां तत परम् ॥ ४१ ॥
तस्मान्निरपराधोऽपि भर्तापि व्रतधार्यपि । निर्वास्यो नगरादस्मा राज्यस्थेमचिकीर्षया ॥ ४२ ॥

---

१ स्थैर्यम् ।

इत्यन्यलिङ्गिभिः सार्धं तं राज्ञी निरवासयत् । लोभाभिभूतमनसां विवेकः स्यात्कियच्चिरम् ॥ ४३ ॥
धात्री सुकोशलस्याथ स्वामिनं व्रतधारिणम् । पुरान्निर्वासितं ज्ञात्वा रोदिति स्म निरर्गलम् ॥ ४४ ॥
किं रोदिषीति पप्रच्छ सुकोशलनृपोऽपि ताम् । कथयामास साप्येवमक्षरैः शोकगद्गदैः ॥ ४५ ॥
राज्ये त्वां बालकं न्यस्य तव कीर्तिधरः पिता । प्राव्राजीत् सोऽद्य भिक्षार्थं प्राविक्षदिह पत्तने ॥ ४६ ॥
तद्दर्शनात्त्वमाप्येद्य व्रतग्रहणशङ्कया । निर्वासितः स ते मात्रा दुःखेनानेन रोदिमि ॥ ४७ ॥
सुकोशलोऽपि तच्छ्रुत्वा गत्वा च पितुरन्तिके । बद्धाञ्जलिर्विरक्तात्मा तस्माद्व्रतमयाचत ॥ ४८ ॥
चित्रमाला च तत्पत्नी गुर्व्यत्य सह मन्त्रिभिः । उवाचास्वामिकं स्वामिन्न राज्यं त्यक्तुमर्हसि ॥ ४९ ॥
राजाप्यवोचद्गर्भस्थोऽपि हि सूनुर्मया तव । राज्येऽभिषिक्तो भाविन्यप्युपचारो हि भूतवत् ॥ ५० ॥
इत्युक्त्वा सकलं लोकं सम्भाष्य पितुरन्तिके । सुकोशलः प्रवव्राज तपस्तेपे च दुस्तपम् ॥ ५१ ॥
निर्ममौ निःकषायौ तौ पितापुत्रौ महामुनी । विजह्रतुर्युतावेव पावयन्तौ महीतलम् ॥ ५२ ॥
तनयस्य वियोगेन खेदभाक् सहदेव्यपि । आर्तध्यानपरा मृत्वा व्याघ्रयभूद्गिरिगह्वरे ॥ ५३ ॥
इतश्च तौ कीर्तिधरसुकोशलमहामुनी । प्रावृट्कालचतुर्मासीमत्येतुं दान्तमानसौ ॥ ५४ ॥
निःस्पृहौ स्वशरीरेऽपि स्वाध्यायध्यानतत्परौ । गिरेर्गुहायामेकस्य तस्थतुः सुस्थिताकृती ॥ ५५ ॥
सम्प्राप्ते कार्तिके मासि प्रयान्तौ पारणाय तौ । दृष्टौ मार्गे तया व्याघ्रया यमदूत्येव दुष्टया ॥ ५६ ॥
सा व्याघ्री शीघ्रमभितो दधावे स्फारितानना । दूरादभ्यागमस्तुल्यो दुहृदां सुहृदामपि ॥ ५७ ॥

१ व्यात्तमुखा ।

आपतन्त्यामपि व्याघ्रयां तौ क्षमाश्रमणोत्तमौ । धर्मध्यान प्रपेदानौ कायोत्सर्गेण तस्थतु ॥ ५८ ॥
सा तु व्याघ्री निशुदिव पपातादौ सुकोशले । दूरापातप्रहारेण पृथ्व्या च तमपातयत् ॥ ५९ ॥
चम्चटिति तच्चर्म दार दार नखाङ्कुशे । पाथा सापादलृसाश्र वारीव मरुपान्थिका ॥ ६० ॥
श्रोटयित्वा त्रोटयित्वा त्रटत्त्रटिति सा रदै । जग्रसे मांसमपि हि वालुङ्कमिन रङ्किका ॥ ६१ ॥
दन्तयन्त्रातिथीचक्रे कक्शा कीकसान्यपि । कटत्कटिति कुर्वन्ती सेक्षूनिव मतङ्गनी ॥ ६२ ॥
कर्मक्षयसहायेयमिति मन्लौ मुनिर्न स । विशेषतस्त्वभूदुच्चावचरोमाञ्चकञ्चुक ॥ ६३ ॥
व्याघ्रयैव खाद्यमानोऽपि शुक्लध्यानमुपेयिवान् । तत्कालोत्केवलो मोक्ष सुकोशलमुनिर्ययौ ॥ ६४ ॥
मुनि कीर्तिधर सोऽपि समुत्पादितकेवल । क्रमादासादयामास सुखाद्वैतास्पद पदम् ॥ ६५ ॥
इतश्च चित्रमालापि सुकोशलनृपप्रिया । हिरण्यगर्भ सुषुवे नन्दन कुलनन्दनम् ॥ ६६ ॥
आगर्भवासनृपतेस्तस्य प्राप्तस्य यौवनम् । सधर्मचारिण्यभवन्मृगनेत्रा मृगावती ॥ ६७ ॥
राज्ञो हिरण्यगर्भस्य मृगावत्यामजायत । तनयो नघुषो नाम वपुषा स इवापर ॥ ६८ ॥
हिरण्यगर्भ स्वेऽपश्यन्मौलौ पलितमन्यदा । तृतीयवयस सत्यङ्कारामुपसर्पत ॥ ६९ ॥
तदैव जातवैराग्य स राजा नघुष सुतम् । स्वे राज्ये न्यस्य विमलमुन्यन्ते व्रतमग्रहीत् ॥ ७० ॥
नघुषस्य नृसिंहस्य सिंहिका नाम पत्न्यभूत् । तया च रममाण स पैतृक राज्यमन्वशात् ॥ ७१ ॥
उत्तरापथभूपालान्नघुषो जेतुमन्यदा । जगाम सिंहिकां देवीं निजराज्ये मुमोच च ॥ ७२ ॥

---

१ दारयित्वा दारयित्वा । २ अतसा साऽश्र शोषितमपादपिबदित्यन्वय । ३ दन्तैः । ४ कठोरा । ५ तत्कालम् उत्पन्न केवलज्ञान यस्य सः ।

नास्तीह नघुष इति दक्षिणापथभूभुजः। तदायोध्यां रुरुधिरे छलनिघ्ना हि वैरिणः ॥ ७३ ॥
तदा च सिंहिका देवी पुंवत्तानभ्यषेणयत्। जिगायानाशयच्चाशु किं सिंही हन्ति न द्विपान् ॥ ७४ ॥
जित्वोत्तरापथं राजा नघुषश्चागतोऽन्यदा। शुश्राव च जयोदन्तं पत्न्या दध्याविदं च सः ॥ ७५ ॥
स्पष्टधार्ष्ट्यमिदं कर्म दुष्करं मादृशामपि। महाकुलप्रसूतानां महिलानां न युज्यते ॥ ७६ ॥
तन्नूनमसती सेयं सत्यो हि पतिदेवताः। पतिसेवां विना नान्यज्जानते क्वेदृशं पुनः ॥ ७७ ॥
इति चेतसि निश्चित्य सिंहिकां प्रेयसीमपि। राजा परिजहाराशु न्यगितं[१]प्रतिमामिव ॥ ७८ ॥
नघुषस्यान्यदा दाहज्वरः समुदपद्यत। दुष्टारिवन्न चाशाम्यदुपचारशतैरपि ॥ ७९ ॥
स्वसतीत्वं ज्ञापनाय भर्तुरर्तिच्छिदेऽपि च। तत्समीपं तदेयाय तोयमादाय सिंहिका ॥ ८० ॥
सा सत्यश्रावणं[२] चक्रे त्वां विना नाथ चेन्मया। पुमान्नैक्षि कदाप्यन्यो ज्वरस्तदपयातु ते ॥ ८१ ॥
ततश्च साम्भसा तेनाभिषिषेच निजं पतिम्। तदैव स ज्वरोन्मुक्तः सुधाधौत इवाभवत् ॥ ८२ ॥
सिंहिकाया उपरिष्टात् पुष्पवृष्टिं सुरा व्यधुः। राजापि बहु मेने तां ततः प्रभृति पूर्ववत् ॥ ८३ ॥
काले गच्छति जज्ञे च नघुषस्य महीपतेः। सिंहिकायां महादेव्यां सोदासो नाम नन्दनः ॥ ८४ ॥
सोदासे राज्यमारोप्यापरेद्युर्नघुषो नृपः। एकमौपयिकं सिद्धेः परिव्रज्यामुपाददे ॥ ८५ ॥
सोदासनृपते राज्येऽर्हतामष्टाहिकोत्सवे। मन्त्रिणो घोषयामासुरमारिं पूर्वराज्यवत् ॥ ८६ ॥
सोदासमपि ते प्रोचुरर्हदष्टाह्निकोत्सवे। नाखादि मांसं त्वत्पूर्वैः खादीस्त्वमपि मा स्म तत् ॥ ८७ ॥

---

१ खण्डिता प्रतिमामिव। २ सत्यस्य श्रावण।

सोदासोऽप्यवदत्सूद सदा मासादनप्रिय । अच्छन्न मासमादेय त्वयाचन्यमत परम् ॥ ८८ ॥
सूदोऽप्यमाया दुष्टाया मास न प्राप कुत्रचित् । न ह्यसत्प्राप्यते क्वापि केनाप्याकाशपुष्पवत् ॥ ८९ ॥
मासाप्राप्तिरित इतो राजाज्ञा बाधते च माम् । किं करोमीति विमृशन् सूदोऽपश्यन्मृतार्भकम् ॥ ९० ॥
मृतार्भकस्य तस्यवादाय मास स बहुव । सस्कृत्य तैस्तैर्विज्ञानै सोदासाय ददौ तदा ॥ ९१ ॥
सोदासोऽपि हि त मासमश्न नेवमवर्णयत् । अहो अमुष्य मासस्य कोऽप्यतिप्रीणको रस ॥ ९२ ॥
सूपकार च पप्रच्छ जन्मापूर्वमिद मम । कस्य जीवविशेषस्य मासमाख्याहि सत्यथा ॥ ९३ ॥
नृमासमिति सोऽप्याख्यद्राजाबोचदत परम् । अथव दधा सस्कृत्य प्रत्यह नृपल मम ॥ ९४ ॥
डिम्भान् सूदोऽप्यथाहार्षीत्तदर्थं प्रत्यह पुरे । न हि भीराज्ञया राज्ञामन्यायकरणेऽपि हि ॥ ९५ ॥
इति दारुणकर्माण नृप विज्ञाय मन्त्रिण । धृत्वात्यजन्नरण्यान्तगृहीत्वन्नमिवोरगम् ॥ ९६ ॥
तैश्च सोदासद्य सिंहरथो राज्येऽभ्यषिच्यत । सोदासोऽप्याट वसुधा मास खादन्निरर्गल ॥ ९७ ॥
सोदासेनापि चान्येद्युर्भ्रमता दक्षिणापथे । महर्षि कोऽपि ददृशे सोऽथ धर्ममपृच्छ्यत ॥ ९८ ॥
बोधार्ह इति त ज्ञात्वा जगौ तस्मै महामुनि । मधमासपरीहारप्रधान धर्ममार्हतम् ॥ ९९ ॥
सोदासोऽपि हि त धर्ममाकर्ण्य चकितोऽभवत् । प्रसन्नहृदयो भूत्वा श्रावक परमोऽभवत् ॥ १०० ॥
इतो महापुरपुरे कोऽप्यपुत्रो नृपो मृत । पञ्चदिव्याभिषिक्तोऽथ सोदासस्तत्र राडभूत् ॥ १०१ ॥
सोदास प्राहिणोद्दूतमथ सिंहरथ प्रति । सोदासस्य कुरुष्वाज्ञामिति दूतोऽप्युवाच तम् ॥ १०२ ॥

१ सूद । २ मनुष्यमांसम् ।

दूतः सिंहरथेनोच्चैस्तिरस्कृत्य विसृज्यत । आगत्याख्यच्च सोदासभूभुजे स यथातथम् ॥ १०३ ॥
सोदासोऽथ सिंहरथं सोऽपि सोदासपार्थिवम् । अभ्यषेणयतां योद्धुं युयुधाते च तौ मिथः ॥ १०४ ॥
सोदासोऽपि सिंहरथं जित्वा जग्राह पाणिना । तस्मै राज्यद्वयं चादात्प्रवव्राज स्वयं पुनः ॥ १०५ ॥
सूनुः सिंहरथस्याभूद्राजा ब्रह्मरथस्ततः । चतुर्मुखस्ततो हेमरथः शतरथस्ततः ॥ १०६ ॥
अथोदयपृथुर्वारिरथ इन्दुरथस्ततः । आदित्यरथमान्धातृवीरसेनास्ततः क्रमात् । १०७ ॥
प्रतिमन्युनृपस्तस्मात्प्रतिबन्धुनृपस्ततः । रविमन्युनृपस्तस्माद्वसन्ततिलकस्ततः ॥ १०८ ॥
कुबेरदत्तोऽथ कुन्थुशरभद्विरदाः क्रमात् । ततश्च सिंहदशनो हिरण्यकशिपुस्ततः ॥ १०९ ॥
पुञ्जस्थलः ककुत्स्थोऽथ रघुरेवं नृपेषु तु । केषुचिन्मोक्षमाप्तेषु स्वर्गमाप्तेषु केषुचित् ॥ ११० ॥
अनरण्यो नाम राजा शरण्यः शरणार्थिनाम् । आनृण्यकृत्प्रणयिनामभूत्साकेतपत्तने ॥ १११ ॥
तस्याभूतामुभौ पुत्रौ पृथ्वीदेव्याश्च कुक्षिजौ । एकोऽनन्तरथो नाम्ना तथा दशरथोऽपरः ॥ ११२ ॥
इतोऽनरण्यस्य सुहृत्सहस्रकिरणो नृपः । रावणेन जितो युद्धे वैराग्याद्व्रतमाददे ॥ ११३ ॥
तत्सख्यादनरण्योऽपि श्रियं न्यस्य लघौ सुते । मासजातेऽनन्तरथसहितो व्रतमाददे ॥ ११४ ॥
अनरण्योऽगमन्मोक्षमथानन्तरथो मुनिः । तप्यमानस्तपस्तीव्रं विजहार वसुन्धराम् ॥ ११५ ॥
राज्यभृत्क्षीरकण्ठोऽपि राजा दशरथः पुनः । वयसा विक्रमेणैव वृद्धिमासादयत् क्रमात् ॥ ११६ ॥
राजा राजसु सोऽराजद्द्विजराज इवोडुषु । ग्रहेष्विव ग्रहराजः सुमेरुः पर्वतेष्विव ॥ ११७ ॥

---

१ चन्द्रः । २ सूर्यः ।

तत्र स्वामिनि लोकस्य परचक्रादिसम्भवः । अदृष्टपूर्व एवासीत् खपुष्पवदुपद्रवः ॥ ११८ ॥
स चिन्ताभरणादीनि यथेच्छं दददर्थिनाम् । कल्पद्रुमाणां मद्याङ्गादीनामेकादशोऽभवत् ॥ ११९ ॥
निर्व्यशङ्कमापालं तत्साम्राज्यमिवानघम् । स दधावार्हतं धर्मं सम्पदाप्यप्रमद्वरः ॥ १२० ॥
दर्भस्थलपुरेशस्य सुकोशलमहीपतेः । कन्यां पवित्राममृतप्रभाकुक्षिसमुद्भवाम् ॥ १२१ ॥
नाम्नापराजितां चारुरूपलावण्यशालिनीम् । उदुवाह स भूपालो जयश्रियमिवाहवे ॥ १२२ ॥
॥ युग्मम् ॥
सुबन्धुतिलकस्याथ पुरे कमलसङ्कुले । मित्रादेवीकुक्षिजातां कैकेयीमादिनामतः ॥ १२३ ॥
मित्राभं सुशीला चेति सुमित्रेत्यपराभिधाम् । पर्यणैषीद्दशरथः शशाङ्क इव रोहिणीम् ॥ १२४ ॥
॥ युग्मम् ॥
पुण्यलावण्यसौन्दर्यवर्याङ्गीं सुप्रभाभिधाम् । अन्यामप्युपयेमे स राजपुत्रीमनिन्दिताम् ॥ १२५ ॥
सुखं वैषयिकं ताभिर्बुभुजे भूभुजां वरः । अबाधमानो धर्मार्थौ स विवेकशिरोमणिः ॥ १२६ ॥
इतश्च भरतस्यार्धं भुञ्जानो दशकन्धरः । सभायामास्थितोऽपृच्छदिति नैमित्तिकोत्तमम् ॥ १२७ ॥
अमरा अपि नाम्नैवामरा न परमार्थतः । भाव्यवश्यं तु सर्वस्य मृत्युः संसारवर्तिनः ॥ १२८ ॥
तत्किं मे स्वपरीणामाद्विपत्तिः परतोऽथवा । तन्ममाचक्ष्व निःशङ्कमाप्ता हि स्फुटभाषिणः ॥ १२९ ॥
सोऽप्याचख्यौ भविष्यन्त्या जानक्याः कारणेन तु । भविष्यतो दशरथपुत्रान्मृत्युर्भविष्यति ॥ १३० ॥

१ मद्याङ्गादीनि दश नामानि कल्पवृक्षाणाम् ।

विभीषणो बभाषेऽथ यदप्यस्य सदा ऋतम् । वचस्तथापि ह्यनृतीकरिष्यामि सदाश्यहम् ॥ १३१ ॥
जनकं दशरथं च कन्यातनययोस्तयोः । अनर्थयोर्वीजभूतं हनिष्याम्यस्तु नः शिवम् ॥ १३२ ॥
उत्पत्तिरेव हि तयोर्निषिद्धा बीजनाशतः । वचो नैमित्तिकस्यातो मिथ्यैव हि भविष्यति ॥ १३३ ॥
आमेत्युक्तो रावणेन स्ववेश्मागाद्विभीषणः । तत्रस्थो नारदस्तच्च श्रुत्वा दशरथं ययौ ॥ १३४ ॥
तं देवर्षि दशरथोऽभ्युत्तस्थौ दूरतोऽपि हि । नमस्कृत्यासयामास गुरुवद्गौरवेण च ॥ १३५ ॥
त्वमायासीः कुतः स्थानात्पृष्टस्तेनेति नारदः । आख्यत्पूर्वविदेहेषु गतोऽहं पुण्डरीकिणीम् ॥ १३६ ॥
श्रीसीमन्धरनाथस्य द्रष्टुं निष्क्रमणोत्सवम् । सुरासुरकृतं तं च दृष्ट्वा मेरुमगामहम् ॥ १३७ ॥
तत्राभिवन्द्य तीर्थेशान् लङ्कायां गतवानहम् । तस्यां शान्तिगृहे शान्तिं नत्वागां रावणालयम् ॥ १३८ ॥
रावणस्य वधस्तत्र जानक्यर्थे त्वदात्मजात् । नैमित्तिकेन केनापि कथ्यमानः श्रुतो मया ॥ १३९ ॥
श्रुत्वा विभीषणस्तच्च हन्तुं त्वां जनकं तथा । कृतप्रतिज्ञो न चिरादिहैष्यति महाभुजः ॥ १४० ॥
एतत्सर्वं परिज्ञाय लङ्कापुर्याः ससम्भ्रमः । साधर्मिक इति प्रीत्या तव शंसितुमागमम् ॥ १४१ ॥
तच्छ्रुत्वा भूभुजाभ्यर्च्य विसृष्टो नारदो द्रुतम् । तथैव कथयामास जनकायापि भूभुजे ॥ १४२ ॥
मन्त्रिणा तत्समाख्याय राजा राज्यं समर्प्य च । निर्ययौ योगविदिव चिकीर्षुः कालवञ्चनाम् ॥ १४३ ॥
मूर्तिं दाशरथीं लेप्यमयीमन्तर्नृपालयम् । न्यधुश्च मन्त्रिणो ध्वान्ते विद्विषन्मोहहेतवे ॥ १४४ ॥
जनकोऽपि तथा चक्रे तथा तन्मन्त्रिणोऽपि हि । तौ त्वलक्षौ दशरथजनकौ भ्रेमतुर्महीम् ॥ १४५ ॥

---

१ सत्यम् ।

विभीषणश्च सरम्भादत्य सन्तमसेऽसिना । लेपमय्या दशरथमूर्तेश्चिच्छेद मस्तकम् ॥ १४६ ॥
जज्ञे कलकलस्तत्र नगरे सकलेऽपि हि । आक्रन्दध्वनिरुच्चस्थाव तरत पुर महान् ॥ १४७ ॥
सभय समधावन्त सामन्ता साङ्गरक्षका । विदधुर्मृतकार्याणि गूढमन्त्रा-स मन्त्रिण ॥ १४८ ॥
मृत दशरथ ज्ञात्वा ययौ लङ्का विभीषण । अकिञ्चित्करमेक तु नावधीन्मिथिलेश्वरम् ॥ १४९ ॥
मिथश्च मैथिलस्थाकौ भ्राम्यन्तौ मिलिताबुभौ । एकावस्थौ सुहृदौ तावुत्तरापथमीयतु ॥ १५० ॥
तत्र शुभमतेस्तत्र पुरे कौतुकमङ्गल । दुहितु कैकेयीनाम्ना पृथ्वीश्रीकुक्षिजन्मन ॥ १५१ ॥
द्रोणमेघसोदराया द्वासप्ततिकलानिधे । तौ स्वयवरमाकर्ण्य तन्मण्डपमुपेयतु ॥ १५२ ॥ युग्मम् ॥
हरिवाहणमुख्याना तौ मध्ये पृथिवीभुजाम् । हसाविवाधिपाथोजमधिमञ्च निषेदतु ॥ १५३ ॥
कैकयी कन्यकारत्न रत्नालङ्कारभूषिता । साक्षाल्लक्ष्मीरिवाभ्यागात् स्वयवरमण्डपम् ॥ १५४ ॥
दत्तहस्ता प्रतीहार्या पश्यती सा नृपान् क्रमात् । नक्षत्राणी दुलेखेव व्यतिचक्राम भूयस ॥ १५५ ॥
क्रमेण सा दशरथ प्राप गङ्गेव सागरम् । तस्थौ तत्रैव निर्मुक्तनाङ्करा नौरिवाम्भसि ॥ १५६ ॥
सद्यो रोमाञ्चिततनु कैकेय्यतनुसम्मुदा । तत्राक्षिपद्वरमालां भिना भुजलतामिव ॥ १५७ ॥
हरिवाहणमुख्याश्च नृपा न्यक्कृतमानिन । मानिनो जज्वलु क्रोधाज्ज्वलज्ज्वलनसन्निभा ॥ १५८ ॥
अथ वराक एकाकी वने कर्पटिकोऽनया । आच्छिद्यमानामस्माभिरिभिका त्रास्यते कथम् ॥ १५९ ॥
साटोपमिति जल्पन्तोऽनल्प स्वशिबिरेषु ते । गत्वा सवर्मयामासु सर्वे सर्वात्मनापि हि ॥ १६० ॥

---

१ गाढतमसि । २ पङ्के । ३ अतिदर्पेण । ४ तिरस्कृत आत्मान मन्यते इति । ५ इमामेवेभिकाम् ।

महीपतिः शुभमतिः पक्षे दशरथस्य सः । सन्ननाह महोत्साहः सेनया चतुरङ्गया ॥ १६१ ॥
कुरु प्रिये सारथित्वं यथा घ्नाम्यमून् द्विषः । इत्यवोचत कैकेयी तदैकाकी हि राघवः ॥ १६२ ॥
कैकेयी रश्मिमादायाध्यारुरोह महारथम् । द्वासप्ततावपि कलास्वभिज्ञा सा हि धीमती ॥ १६३ ॥
धन्वी निषङ्गी सन्नाही राजा दशरथोऽपि तम् । अध्यास्त रथमेकोऽपि तृणवद्गणयन् परान् ॥ १६४ ॥
हरिवाहणमुख्यानां रथैर्निजरथं रथात् । प्रत्येकं युगपदिव त्वेका कैकेय्ययोजयत् ॥ १६५ ॥
शीघ्रवेधी दशरथोऽप्येकैकमभि तान् रथान् । अखण्डयदखण्डौजा आखण्डल इवापरः ॥ १६६ ॥
इत्थं विद्रावयामास सर्वानपि स भूपतीन् । उपयेमे च कैकेयीं जगतीमिव जङ्गमाम् ॥ १६७ ॥
उवाच च नवोढां तां राजा दशरथो रथी । वरं याचस्व देवि त्वत्सारथ्येनास्मि रक्षितः ॥ १६८ ॥
याचिष्ये समये स्वामिन्न्यासीभूतोऽस्तु मे वरः । इत्यभाषत कैकेयी राजापि प्रत्यपादि तत् ॥ १६९ ॥
समं श्रियेव कैकेय्या परसैन्यैर्हठाहृतैः[1] । असङ्ख्यातपरीवारो राजा राजगृहं ययौ ॥ १७० ॥
जगाम राजा जनकोऽप्यात्मीयां नगरीमथ । समयज्ञा हि धीमन्तो न तिष्ठन्ति यथा तथा ॥ १७१ ॥
राजा दशरथस्तत्र विजित्य मगधेश्वरम् । तत्रवास्थान्न तु ययावयोध्यां शङ्कया तया ॥ १७२ ॥
तत्रापराजितामुख्यमन्तःपुरमिलापतिः[2] । निजमानाययामास राज्यं सर्वत्र दोष्मताम् ॥ १७३ ॥
राज्ञीभी रममाणोऽस्थात्पुरे तत्र चिरं नृपः । विशेषतः प्रीतये हि राज्ञां भूः स्वयमर्जिता ॥ १७४ ॥
अथापराजितान्येद्युर्गजसिंहेन्दुभास्करान् । स्वप्नेऽपश्यन्निशाशेषे बलजन्माभिसूचकान् ॥ १७५ ॥

---

१ बलादानीत । २ पृथ्वीपति ।

ब्रह्मलोकात्परिच्युत्य तथा देवो महर्द्धिक । कुक्षावक्ातरत्तस्याः पुष्करिण्यां मरालवत् ॥ १७६ ॥
नृपुण्डरीक वर्णेन पुण्डरीकविडम्बिनम् । संपूर्णलक्षणं सूनुं सुषुवेऽथापराजिता ॥ १७७ ॥
प्रथमापत्यरत्नस्य तस्यास्यकमलेक्षणात् । राकेन्दुदर्शनादब्धिरिवाभिमुमुद नृप ॥ १७८ ॥
नृपश्चिन्तामणिरिव ददौ दान तदार्थिनाम् । लोकस्थितिरियं जाते नन्दने दानमक्षयम् ॥ १७९ ॥
महान्तमुत्सवं चक्रुस्तदा लोकास्तथा स्वयम् । यथाभूवन्नतिमुदो राज्ञो दशरथादपि ॥ १८० ॥
नृपौकसि सनाथानि दूर्वापुष्पफलादिभि । निन्युः कल्याणपात्राणि पूर्णपात्राणि नागरा ॥ १८१ ॥
सर्वत्र कलगीतानि सर्वत्र घुसृणच्छटा । सर्वत्र तोरणश्रेण्यो व्यधीयन्त तदा पुरि ॥ १८२ ॥
अचिन्तितोपनीतानि प्राभृतानि महीभृताम् । तदा राज्ञे समाजग्मुस्तस्य धनो प्रभावत ॥ १८३ ॥
पद्मानिवासपद्मस्य पद्म इत्यभिधां नृप । चक्रेऽस्याकरोत् सोऽभूत्प्रथितो राम इत्यपि ॥ १८४ ॥
गजसिंहार्कचन्द्राग्निश्रीसमुद्राभिशात्यये । स्वप्नेऽपश्यत् सुमित्रापि विष्णुजन्माभिसूचकान् ॥ १८५ ॥
देवलोकात् परिच्युत्य त्रिदश परमर्द्धिक । तदा देव्या सुमित्राया उदरे समवातरत् ॥ १८६ ॥
समये भावुकाम्भोदवर्ण सम्पूर्णलक्षणम् । सुमित्रापि जगन्मित्र पुत्ररत्नमजीजनत् ॥ १८७ ॥
पुरचैत्येषु सर्वेषु श्रीमतामर्हतां तदा । विशेषेणाष्टधा पूजां स्नात्रपूर्व व्यधात्नृप ॥ १८८ ॥
नृपतिर्मोचयामास धृतान् वन्दिरिपूनपि । को वा न जीवति सुखं पुरुषोत्तमजन्मनि ॥ १८९ ॥
सोच्छ्वास सप्रजो राजा न केवलमभूत्तदा । वसुमत्यपि दध्नी प्रागुच्छ्वास प्रत्यपद्यत ॥ १९० ॥

१ जनेषु पुण्डरीकसमानम् । २ अतिहर्षवत । ३ सहितानि । ४ कुङ्कुमच्छटा । ५ लक्ष्म्या निवासे कमलसदृशस्य । ६ मही ।

रामजन्मनि भूपालो यथाकृत महोत्सवम् । तथा तमधिकं चक्रे हर्षे को नाम तृप्यति ॥ १९१ ॥
नाम नारायण इति विदधे तस्य पार्थिवः । स लक्ष्मण इति ख्यातोऽपरनाम्ना च मुख्यभूत् ॥ १९२ ॥
तौ द्वावपि पितुः कूर्चकचाकर्षणशिक्षकम् । विशिष्टं प्रापतुर्बाल्यं क्रमेण क्षीरपायिणौ ॥ १९३ ॥
धात्रीभिर्लाल्यमानौ तावपश्यत्परया मुदा । मुहुर्मुहुर्महीपालः स्वदोर्दण्डाविवापरौ ॥ १९४ ॥
सभेरतुः सैदस्यानामङ्कादङ्कं महीभुजाम् । तेषामङ्गेषु वर्षन्तौ तौ स्पर्शेन सुधामिव ॥ १९५ ॥
क्रमेण तौ वर्धमानौ नीलपीताम्बरौ सदा । विजहतुः पादपातैः कम्पयन्तौ महीतलम् ॥ १९६ ॥
कलयामासतुस्तौ तु क्रमेण सकलाः कलाः । साक्षीकृतकलाचार्यौ पुण्यराशी इवाङ्गिनौ ॥ १९७ ॥
लीलामुष्टिप्रहारेण हिमर्कर्परलीलया । दलयामासतुस्तौ च गिरीनपि महौजसौ ॥ १९८ ॥
श्रमस्थानेऽपि हि तयोरधिज्यीकृतचापयोः । चकम्पे तपनोऽप्युच्चैस्तस्थौ वेधाभिशङ्कया ॥ १९९ ॥
तृणाय मन्यमानौ तौ दोःस्थाम्नापि द्विषां बलम् । कौतुकायेव मेनाते शस्त्रकौशलमात्मनः ॥ २०० ॥
शस्त्रास्त्रकौशलेनोच्चैर्दोःस्थाम्ना च तयोर्नृपः । अपि देवासुरादीनां स्वमजय्यममन्यत ॥ २०१ ॥
अन्यदा धैर्यमालम्ब्य विक्रमेण कुमारयोः । इक्ष्वाकूणां राजधानीमयोध्यां नृपतिर्ययौ ॥ २०२ ॥
अभ्रांत्यय इवादित्यो दुर्दशातिक्रमे भृशम् । द्योतमानः प्रतापेन भहीं दशरथोऽन्वशात् ॥ २०३ ॥
तत्रापरेद्युः कैकेयी शुभस्वप्नाभिसूचितम् । असूत भरतं नाम सुतं भरतभूषणम् ॥ २०४ ॥
शत्रुघ्नमभिधानेन शत्रुघ्नभुजविक्रमम् । अजीजनत्सुप्रभापि नन्दनं कुलनन्दनम् ॥ २०५ ॥

१ श्मश्रुकेशाकर्षणे शिक्षकम् । २ सभ्यानाम् । ३ चरणघातैः । ४ हिमपात्रस्य लीलया । ५ सूर्ये । ६ मेघनिरासे ।

स्नेहाद्वरतश्चानुभावयियुक्तौ दिवानिशम् । बलदेववासुदेवावभातामपराविव ॥ २०६ ॥
रन्ते राजा दशरथश्चतुर्भिरपि तैः सुतैः । गजदन्ताकृतिनगैरिव मेरुमहीधरः ॥ २०७ ॥
इतश्च जम्बूद्वीपेऽस्मिन् क्षेत्र चात्रैव भारते । दारुग्रामे वसुभूतिरिति नाम्नाभवद्विजः ॥ २०८ ॥
पत्न्यां तस्यानुकोशायामतिभूतिरभूत्सुतः । अतिभूतेरपि पत्नी बभूव सरसाभिधा ॥ २०९ ॥
कयाननाम्ना विप्रेण जातरागेण सैकदा । अपजह्रे च्छलेनाशु किं न कुर्यात्स्मरातुरः ॥ २१० ॥
तामन्वेष्टुं महीमाटातिभूतिर्भूतवद्भ्रमम् । सुतस्नुषार्थेऽनुकोशावसुभूती च चेरतुः ॥ २११ ॥
सुतस्नुषे अपश्यन्तौ पर्यटन्तावथान्यदा । एकं दद्दशतु साधु ववन्दाते च भक्तितः ॥ २१२ ॥
श्रुतधर्मौ च तत्पार्श्वे तौ द्वौ जगृहतुर्व्रतम् । गुर्वादिष्टानुकोशागादार्यिकां कमलश्रियम् ॥ २१३ ॥
तौ विपद्य च सौधर्मे कल्पे देवौ बभूवतुः । व्रते ह्येकाहमात्रेऽपि न स्वर्गादन्यतो गतिः ॥ २१४ ॥
वसुभूतिस्ततश्च्युत्वात्रैव वैताढ्यपर्वते । रथनूपुरनाथोऽभून्नाम्ना चन्द्रगतिर्नृपः ॥ २१५ ॥
ततश्च्युत्वानुकोशापि तस्य विद्याधरप्रभो । अभूत्पुष्पवती नाम भार्यार्यचरिता सती ॥ २१६ ॥
तदा च सापि सरसा कामपि प्रेक्ष्य संयताम् । प्रव्रज्य मृत्वा चेशाने देवी समुदपद्यत ॥ २१७ ॥
सरसाविरहादार्तोऽतिभूतिश्च विपद्य सः । चिरं भ्रान्त्वा च संसारं हंसपोतः कदाप्यभूत् ॥ २१८ ॥
भक्ष्यमाणोऽन्यदा श्येनेनोपसाधु पपात सः । कण्ठप्राणस्य नमस्कारं तस्य साधुर्ददौ च सः ॥ २१९ ॥
विपन्नः स नमस्कारप्रभावेणातिभूयसा । दशवर्षसहस्रायुः किन्नरेषु सुरोऽभवत् ॥ १२० ॥

---

१ गजदन्ताकारपर्वतैः । २ साध्वीम् । ३ कण्ठस्थप्राणस्य ।

च्युत्वा पुरे विदग्धे स प्रकाशसिंहभूपतेः । सुतोऽभूत्प्रवरावल्यां पत्न्यां कुण्डलमण्डितः ॥ २२१ ॥
भोगासक्तः कयानोऽपि चिरं भ्रान्त्वा भवाटवीम् । पुरे चक्रपुरे चक्रध्वजराजपुरोधसः ॥ २२२ ॥
धूमकेशाभिधानस्य स्वाहानाम्न्यामजायत । सूनुः सधर्मचारिण्यां नामधेयेन पिङ्गलः ॥ २२३ ॥
॥ युग्मम् ॥
राज्ञश्चक्रध्वजस्यातिसुन्दरीनामया सह । पुत्र्या पपाठैकगुरोरन्तिके स तु पिङ्गलः ॥ २२४ ॥
कालेन गच्छता जाते त्वनुरागे परस्परम् । तां छलात् पिङ्गलो हृत्वा विदग्धनगरे ययौ ॥ २२५ ॥
विज्ञानरहितस्तत्र तृणकाष्ठादिविक्रयात् । आत्मानमेजिजीवत्स निर्गुणस्योचितं ह्यदः ॥ २२६ ॥
तां चातिसुन्दरीं तत्राद्राक्षीत् कुण्डलमण्डितः । अन्योऽन्यमनुरागश्च तत्कालमभवत्तयोः ॥ २२७ ॥
अपजह्रे च तां राजपुत्रः कुण्डलमण्डितः । पितुर्भिया दुर्गदेशे पल्लीं कृत्वा च संस्थितः ॥ २२८ ॥
विरहाच्चातिसुन्दर्या उन्मत्त इव पिङ्गलः । क्ष्मां भ्रमन्नेकदाचार्यगुप्ताख्यमैक्षत ॥ २२९ ॥
श्रुत्वा धर्मं च तत्पार्श्वे व्रतं जग्राह पिङ्गलः । परं प्रेमातिसुन्दर्यां न मुमोच कदाचन ॥ २३० ॥
पल्लीस्थितो दशरथभुवं कुण्डलमण्डितः । सर्वदा लुण्टयामास सारमेय इव च्छलात् ॥ २३१ ॥
सामन्तो बालचन्द्राख्यस्ततो दशरथाज्ञया । प्रदाय सौप्तिकं बध्वा तमानैषीत्तदन्तिके ॥ २३२ ॥
कालेन तं दशरथोऽमुचत्कुण्डलमण्डितम् । कोपः शाम्यति महतां दीने क्षीणे हरावपि ॥ २३३ ॥
पितृराज्याय स भ्राम्यन्मही कुण्डलमण्डितः । मुनिचन्द्रान्मुनेर्धर्ममाकर्ण्य श्रावकोऽभवत् ॥ २३४ ॥

१ आजीविकामकरोत् ।

राज्येच्छुरेव मृत्वा स मिथिलाया महापुरि । गर्भे जनकभार्याया विदेहाया सुतोऽभवत् ॥ २३५ ॥
सरसापि भव भ्रान्त्वा पुरोहितसुताभवत् । नाम्ना वेगवती दत्र प्रव्रज्य च विपद्य च ॥ २३६ ॥
ब्रह्मलोकऽगमच्च्युत्वा विदेहायास्तदोदरे । कुण्डलमण्डितनीयुग्मत्वेन सुताभवत् ॥ २३७ ॥ युग्मम् ॥
विदेहा समवेऽसूत युगपत्पुत्रकन्यक । मृत्वा तदा पिङ्गलर्षि सौधर्मे त्रिदशोऽभवत् ॥ २३८ ॥
प्राग्जन्मायधिनापश्यद् द्विष कुण्डलमण्डितम् । तदा जनकपुत्रत्वेनोत्पन्न स उदैक्षत ॥ २३९ ॥
स प्राग्वैराज्ञातरोषो जातमात्र जहार तम् । दध्यौ च किं निहन्म्येनमास्फाल्याशु शिलातले ॥ २४० ॥
अथवा यन्मया पूर्वे दुष्कर्माचरित मया । फल तस्यापि भूयस्तु भवेऽभ्रान्त्वमभव चिरम् ॥ ४१ ॥
दैवाच्छ्रामण्यमासाद्य प्राप्तोऽहमियतीं भुवम् । हत्वा भ्रूणमद्य भूय स्यामनन्तभव कथम् ॥ २४२ ॥
इत्थ विमृश्य स सुरो भूषणे कुण्डलादिभि । भूषयित्वा च त बाल पतज्ज्योतिर्भ्रमप्रदम् ॥ २४३ ॥
वैताढ्यदक्षिणश्रेणौ रथनूपुरपत्तने । शनकैर्नन्दनोद्याने तूलिकायामिवामुचत् ॥ २४४ ॥ युग्मम् ॥
किमेतदिति सम्भ्रान्तो दृष्ट्वा चन्द्रगतिश्च तम् । तन्निपातानुसारेण नन्दनोपवन ययौ ॥ ४५ ॥
ददर्श तत्र त बाल दिव्यालङ्कारभूषितम् । विद्याधरेन्द्र सोऽपुत्र पुत्रीयन्नाददे स्वयम् ॥ २४६ ॥
प्रेयस्या पुष्पवत्याश्चार्पयामास तमर्भकम् । देव्यद्य सुपुवे पुत्रमिति चाघोषयत्पुरि ॥ २४७ ॥
उच्चै मोत्सव तस्य राजा पौराश्च चक्रिरे । स भामण्डलसम्बन्धाच्चाम्ना भामण्डलोऽभवत् ॥ २४८ ॥
पुष्पवतीचन्द्रगत्योर्नेत्रकैरवचन्द्रमा । स वर्धिनु प्रवृत्ते खेचरीकरलालित ॥ २४९ ॥

१ बालम् । २ शय्यायाम् । ३ पुत्र कुर्वन् ।

इतश्चापहृते पुत्रे विदेहा करुणस्वरा । रुदती पातयामास बन्धून् शोकमहार्णवे ॥ २५० ॥
जनकोऽन्वेषयामास प्रेष्य प्रतिदिशं नरान् । तत्प्रवृत्तिं पुनः क्वापि न प्राप सुचिरादपि ॥ २५१ ॥
अनेकगुणसस्यानां प्ररोहोऽत्रेति मैथिल । दुहितुर्युग्मजातायाः सीतेति विदधेऽभिधाम् ॥ २५२ ॥
कालेन गच्छता शोकस्तयोर्मन्दीबभूव च । शोको हर्षश्च संसारे नरमायाति याति च ॥ २५३ ॥
सीता च ववृधे सार्धं रूपलावण्यसम्पदा । इन्दुलेखेव शनकैः कलापूर्णा बभूव च ॥ २५४ ॥
क्रमादुद्यौवना पुण्यलावण्यलहरी सरित् । सरित्पतितनूजेव सालक्षि कमलेक्षणा ॥ २५५ ॥
अनुरूपो वरः कोऽस्या भवितेति दिवानिशम् । अचिन्तयत्तज्जनको जनकः पृथिवीपतिः ॥ २५६ ॥
राज्ञां कुमारान् प्रत्येकं स वीक्ष्य चरचक्षुषा । व्यचारयन्महामात्यैर्न कोऽपि रुरुचे पुनः ॥ २५७ ॥
तदार्धबर्बरैरातरङ्गतमादिपार्थिवैः । दैत्यकल्पैरनल्पैर्भूर्जनकस्योपदुद्रुवे ॥ २५८ ॥
तेषां रोधाय कल्पान्तवार्धिवारामिवाक्षमः । दूतं दशरथाहूत्यै प्राहिणोन्मिथिलेश्वरः ॥ २५९ ॥
ऐक्ष्वाको दूतमायातं तमाहूय ससम्भ्रमम् । सप्रसादं निषाद्याग्रे जगादेवं महामनाः ॥ २६० ॥
तस्यास्मत्सुहृदो दूरस्थितस्यापि त्वदागमात् । मन्ये सौहार्दमद्वैतं मयीन्दाविव वारिधेः ॥ २६१ ॥
कच्चिद्राष्ट्रे पुरे गोत्रे सन्ये स्वाङ्गेऽन्यतोऽपि च । कुशलं मिथिलाभर्तुर्ब्रूह्यागमनकारणम् ॥ २६२ ॥
दूतोऽप्यवादीन्मद्भर्तुः सत्स्वप्याप्तेष्वनेकशः । सुहृत्सु हृदयमात्मा वा त्वमेवासि महाभुज ॥ २६३ ॥
जनकस्य सुखैर्दुःखैर्यत्सदा गृह्यसे ततः । विधुरेऽद्य स्मृतस्तेन त्वं यथा कुलदेवता ॥ २६४ ॥

१ सरिता पतिः समुद्रस्तस्य तनूजा लक्ष्मीः । २ तत्पिता । ३ कल्पान्तसमुद्रजलानाम् । ४ उपवेश्य ।

वैताढ्याद्रर्दक्षिणत कैलासस्योत्तरेण च । सन्त्यनार्या जनपदा भूयासो भीषणप्रजा ॥ २६५ ॥
तेष्वर्धबर्बरो नाम देशो बर्बरकूलवत् । विधत्ते दारुणाचारैर्नरैरत्यन्तदारुण ॥ २६६ ॥
मयूरमालनगरे तस्य दशस्य भूपवे । आतरङ्गतमो नाम म्लेच्छराजोऽस्ति दारुण ॥ २६७ ॥
शुकमङ्कनकाम्बोजप्रभृतीन् विषयानपि । भुञ्जते तनयास्तस्य नृपीभूय सहस्रश २६८ ॥
इदानीमातरङ्गस्ते परित परिवारित । अभ्यग्याक्षौहिणीनाथैरभाङ्क्षीजनकक्षितिम् ॥ २६९ ॥
प्रतिस्थान च चैत्यानि बभञ्जुस्ते दुराशया । तेषा ह्याजन्म सम्यक्त्वभयोऽप्यमीष्टो धर्मविप्लव ॥ २७० ॥
अनारतमभीष्टस्य धर्मस्य जनकस्य च । तत्कुलस्य परित्राण प्राणभूतस्त्वयोरसि ॥ २७१ ॥
आकर्ण्यैव दशरथो यात्रामेरीमवादयत् । सन्त सतां परित्राणे विलम्बन्ते न जातुचित् ॥ २७२ ॥
रामोऽथोचे दशरथ म्लेच्छोच्छेदाय चेत्स्वयम् । तातो यास्यति तद्राम सानुज किं करिष्यति ॥ २७३ ॥
पुत्रस्नेहाच्च तातेनाक्षमो वा तर्कितोऽस्म्यहम् । आ भरताजन्मसिद्ध नन्विक्ष्वाकुषु पौरुषम् ॥ २७४ ॥
प्रसीद विरम म्लेच्छानुच्छेत्तु मां समादिश । अचिराच्छ्रोष्यसि स्वामिञ्जयवार्तां स्वजन्मन ॥ २७५ ॥
इत्य कथञ्चिद्राजानमनुज्ञाप्य सहानुज । सेनापरिवृतो रामो जगाम मिथिला पुरीम् ॥ २७६ ॥
चमूरुद्दीपिशार्दूलसिंहानिव महावने । पुरीपरिसरेऽद्राक्षीद्रामो म्लेच्छमहाभटान् ॥ ७७ ॥
रणकण्डूलदोर्दण्डा म्लेच्छास्ते जितकाशिन । राम द्रुतमुपद्रोतु प्रावर्तन्त महौजस ॥ २७८ ॥
युगपद्रामसैन्य तैरस्त्रैरन्धीकृत क्षणात् । महावातैरिवोद्भ्रान्तैर्जगदुत्क्षिप्तरेणुभि ॥ २७९ ॥

---

१ जितेन जयेन काश न्ते शोभन्ते इति तथा ।

जितंमानिषु सैन्येषु परेषुं जयमानिषु । मृतमानिनि जनके लोके संहृतमानिनि ॥ २८० ॥
रामो हसितमानी स्वमधिज्यं विदधे धनुः । अवादयच्च तन्मौर्वी रणनाटकडिण्डिमम् ॥ २८१ ॥
॥ युग्मम् ॥

भ्रूभङ्गमप्यकुर्वाणो गीर्वाण इव भूगतः । रामस्तान् कोटिशोऽप्यस्त्रैर्विव्याध व्याधवन्मृगान् ॥ २८२ ॥
अयं वराको जनकस्तत्सैन्यं मशकोपमम् । तत्साहाय्यागतं सैन्यं दैन्यभागादितोऽप्यभूत् ॥ २८३ ॥
अरे कुत इमे बाणाश्छादयन्तो नभस्तलम् । पक्षिराजा इवायान्तीत्यन्योऽन्यमभिभाषिणः ॥ २८४ ॥
आतरङ्गादयो म्लेच्छाधिपाः कुपितविस्मिताः । वर्षन्तोऽस्त्राणि युगपत्प्रतिराम ढुढौकिरे ॥ २८५ ॥
॥ त्रिभिर्विशेषकम् ॥

दूरापाती दृढाघाती शीघ्रवेधी च राघवः । तान् म्लेच्छान् हेलयाभाङ्क्षीच्छरभः कुञ्जरानिव ॥ २८६ ॥
म्लेच्छाः प्रणश्य ते जग्मुः काका इव दिशो दिशि । बभूव स्वस्थो जनको जनैर्जानपदैः समम् ॥ २८७ ॥
हृष्टोऽथ स्वसुतां सीतां रामाय जनको ददौ । इयं रामागमात्तस्य वरप्राप्तिर्जयोऽप्यभूत् ॥ २८८ ॥
तदा च जानकीरूपं जनादाकर्ण्य नारदः । तत्रागात्कौतुकाद्द्रष्टुं कन्यावेश्म विवेश च ॥ २८९ ॥
पिङ्गकेशं पिङ्गनेत्रं तुन्दिलं छत्रिकाधरम् । दण्डपाणिं सकौपीनमपीनाङ्गं स्फुरच्छिखम् ॥ २९० ॥
भीषणं नारदं प्रेक्ष्य भीता सीता सवेपथुः । हा मातरित्यारटन्ती गर्भागारान्तरेऽविशत् ॥ २९१ ॥
॥ युग्मम् ॥

---

१ आत्मानं जितं मन्यन्ते तेषु । २ शत्रुषु । ३ संहारमानिनि । ४ दूरादापततीति तथा । ५ बृहदुदरम् । ६ कृशाङ्गम् ।

वैताढ्याद्दक्षिणतः कैलासस्योत्तरेण च । सन्त्यनार्या जनपदा भूयांसो भीषणप्रजाः ॥ २६५ ॥
तेष्वर्धबर्बरो नाम देशो बर्बरकूलवत् । विद्यते दारुणाचारैर्नरैरत्यन्तदारुणः ॥ २६६ ॥
मयूरमालनगरं तस्य देशस्य भूषणे । आतरङ्गतमो नाम म्लेच्छराजोऽस्ति दारुणः ॥ २६७ ॥
शुकमङ्कनकाम्बोजप्रभृतीन् विषयानपि । भुञ्जते तनयास्तस्य नृपीभूय सहस्रशः ॥ २६८ ॥
इदानीमातरङ्गस्त परितः परिधारितः । अक्षय्याक्षौहिणीनाथैरभाङ्क्षीज्जनकक्षितिम् ॥ २६९ ॥
प्रतिस्थानं च चैत्यानि बभञ्जुस्ते दुराशयाः । तेषां ह्याजन्म सम्यक्त्वमयोऽप्यभीष्टो धर्मविप्लव ॥ २७० ॥
अनागतमभीष्टस्य धर्मस्य जनकस्य च । तत्कुरुष्व परित्राणं प्राणभूतस्तयोरसि ॥ २७१ ॥
आकर्ण्येन दशरथो यात्राभेरीमवादयत् । सन्तः सतां परित्राणे विलम्बन्ते न जातुचित् ॥ २७२ ॥
रामोऽप्योचे दशरथं म्लेच्छोच्छेदाय चेत्स्वयम् । तातो यास्यसि तद्राम सानुजः किं करिष्यति ॥ २७३ ॥
पुत्रस्नेहाच्च तातेनाक्षमो वा तर्कितोऽस्म्यहम् । आ भरताज्जन्मसिद्धं नन्विक्ष्वाकुषु पौरुषम् ॥ २७४ ॥
प्रसीद विरम म्लेच्छानुच्छेत्तुं मां समादिश । अचिराच्छ्रोष्यसि स्वामिञ्जयवार्तां स्वजन्मनः ॥ २७५ ॥
इत्थं कथञ्चिद्राजानमनुज्ञाप्य सहानुजः । सेनापरिवृतो रामो जगाम मिथिलां पुरीम् ॥ २७६ ॥
चमूरुद्वीपिशार्दूलसिंहानिव महावने । पुरीपरिसरेऽद्राक्षीद्रामो म्लेच्छमहाभटान् ॥ ७७ ॥
रणकण्डूलदोर्दण्डा म्लेच्छास्ते जितकाशिनः । रामं द्रुतमुपद्रोतुं प्रावर्तन्त महौजसः ॥ २७८ ॥
युगपद्रामसैन्यं तैरस्त्रैरन्धीकृतं क्षणात् । महावातैरिवोद्भ्रान्तैर्वेगदुत्क्षिप्तरेणुभिः ॥ २७९ ॥

---

१ जितेन जयेन काशन्ते शोभन्ते इति तथा ।

जितंमानिषु[1] सैन्येषु परेषु[2] जयमानिषु । मृतमानिनि जनके लोके संह्रतमानिनि[3] ॥ २८० ॥
रामो हसितमानी स्वमधिज्यं विदधे धनुः । अवादयच्च तन्मौर्वी रणनाटकडिण्डिमम् ॥ २८१ ॥
॥ युग्मम् ॥

भूमङ्गमप्यकुर्वाणो गीर्वाण इव भूगतः । रामस्तान् कोटिशोऽप्यस्त्रैर्विव्याध व्याधवन्मृगान् ॥ २८२ ॥
अयं वराको जनकस्तत्सैन्यं मशकोपमम् । तत्साहाय्यागतं सैन्यं दैन्यभागादितोऽप्यभूत् ॥ २८३ ॥
अरे कुत इमे बाणाश्छादयन्तो नभस्तलम् । पक्षिराजा इवायान्तीत्यन्योऽन्यमभिभाषिणः ॥ २८४ ॥
आतरङ्गादयो म्लेच्छाधिपाः कुपितविस्मिताः । वर्षन्तोऽस्त्राणि युगपत्प्रतिराम ढुढौकिरे ॥ २८५ ॥
॥ त्रिभिर्विशेषकम् ॥

दूरापाती[4] दृढाघाती शीघ्रवेधी च राघवः । तान् म्लेच्छान् हेलयाभाङ्क्षीच्छरभः कुञ्जरानिव ॥ २८६ ॥
म्लेच्छाः प्रणश्य ते जग्मुः काका इव दिशो दिशि । बभूव स्वस्थो जनको जनैर्जानपदैः समम् ॥ २८७ ॥
हृष्टोऽथ स्वसुतां सीतां रामाय जनको ददौ । इय रामागमात्तस्य वरप्राप्तिर्श्रेयोऽप्यभूत् ॥ २८८ ॥
तदा च जानकीरूपं जनादाकर्ण्य नारदः । तत्रागात्कौतुकाद्रष्टुं कन्यावेश्म विवेश च ॥ २८९ ॥
पिङ्गकेशं पिङ्गनेत्रं तुन्दिलं[5] छत्रिकाधरम् । दण्डपाणिं सकौपीनमपीनाङ्गं[6] स्फुरच्छिखम् ॥ २९० ॥
भीषणं नारदं प्रेक्ष्य भीता सीता सवेपथुः । हा मातरित्यारटन्ती गर्भागारान्तरेऽविशत् ॥ २९१ ॥
॥ युग्मम् ॥

---

१ आत्मानं जितं मन्यन्ते तेषु । २ शत्रुषु । ३ संहारमानिनि । ४ दूरादापततीति तथा । ५ बृहदुदरम् । ६ कृशाङ्गम् ।

पृष्ठे शिवायां वाह्लीश धृत्वा तुमुलकारिभि । दासिकाद्वारपालाधै रुध्वे नारदस्तत ॥ २९२ ॥
नयां कलकलादेषु शस्त्रिणो राजपूरुषा । यमदूता इव क्रुद्धा हतैनमिति भाषिण ॥ २९३ ॥
क्षुभितो नारदस्तेभ्य स्व विमोच्य कथञ्चन । ययावुत्पत्य वैताढ्य तत्र चैवमचिन्तयत् ॥ २९४ ॥
व्याघ्रीभ्य इव गौर्जीवन् दासीभ्यो निरगामहम् । दिष्ट्या प्राप्तोऽस्मि वैताढ्य बहुविद्याधरेश्वरम् ॥ २९५ ॥
अस्तीह दक्षिणश्रेणौ चन्द्रगत्यात्मनो युवा । भामण्डलो नाम दोष्मानाखण्डलपराक्रम ॥ २९६ ॥
पटे लिखित्वा तत्सीतां दर्शयाम्यस्य येन ताम् । हठादपहरत्येष कृत प्रतिकरोम्यद ॥ २९७ ॥
तथैव नारद कृत्वा सीतारूपमदर्शयत् । भामण्डलकुमारस्याद्भुतरूप जगत्त्रये ॥ २९८ ॥
सद्यो भामण्डलो भूतवेवाग्रामि मनोभुवा । लेभे न जातुचिन्निद्रा विन्ध्याकृष्ट इव द्विप ॥ २९८ ॥
बुभुजे न हि भोज्यानि पयांस्यपि पपौ न स । अस्तस्थ च मौनेन योगीव ध्यानतत्पर ॥ ३०० ॥
त तथा निधुर प्रस्यानोरथ दृष्ट्वा नृप । किमाधिनाथते कोऽपि त्वामथ व्याधिरुद्धत ॥ ३०१ ॥
किमाज्ञाखण्डन केनाप्यकारि भवतोऽथवा । अन्यद्वा ब्रूहि हे वत्स यद्वेद्रु खस्य कारणम् ॥ ३०२ ॥
भामण्डलकुमारो भूत्प्रिया ह्रधाप्यवाङ्मुख । गुप्त्या ताद्वगारयातु कर्मिना कथमीशते ॥ ३०३ ॥
ऊचुरपस्या अथ भामण्डलस्यार्तिकारणम् । आमनां नारदानीतपटालिखितयोषिति ॥ ३०४ ॥
पस्म यानीय मस्त्यायु नारद राजपुङ्गव । का सा कस्यात्मजेत्यादि पप्रच्छ पटयोषित ॥ ३०५ ॥
आचख्यौ नारदोऽप्येव विदेहाजनकात्मजा । नामधेयेन सीता सा या मया दर्शिता पटे ॥ ३०६ ॥
यादृशी सास्ति रूपेण लिखितु तादृशीं पुन । नाभिज्ञोऽहं न चान्यो वा मूर्त्या लोकोत्तरैव सा ॥ ३०७ ॥

नामरीषु न नागीषु न गन्धर्वीषु तादृशम् । सीतायां यादृशं रूपं का कथा मानवीषु तु ॥ ३०८ ॥
यादृग्रूपं यथावस्थं विकर्तुं नेश्वरा सुराः । नानुकर्तुं सुरनरा न च कर्तुं प्रजापतिः ॥ ३०९ ॥
तस्या मधुरता काचिदाकृतौ वचनेऽपि च । कण्ठे च पाणिपादे च रक्तता काचिदुच्चकैः ॥ ३१० ॥
अथवा तां यथावस्थां यथा नालेखितुं क्षमः । नालं तथा वक्तुमपि वच्म्यतः परमार्थतः ॥ ३११ ॥
योग्या भामण्डलस्येति विचार्य मनसा मया । यथाप्रज्ञं समालिख्य दर्शितेयं पटे नृप ॥ ३१२ ॥
भविष्यति तवैवैषा पत्नी खिद्यस्व मा ततः । इत्याश्वास्य सुतं राजा व्यसृजन्नारदं मुनिम् ॥ ३१३ ॥
ततश्च चपलगतिं नाम विद्याधरं नृपः । इत्यादिदेश जनकमपहृत्यानय द्रुतम् ॥ ३१४ ॥
रजन्यां जनकं हृत्वानुपलक्षित एव सः । समानीयार्पयामास राज्ञश्चन्द्रगतेस्थ ॥ ३१५ ॥
जनकं बन्धुवत्स्नेहात्प्रथन् पुरपार्थिवः । समाश्लिष्यासयित्वा च ससौहार्दमदोऽवदत् ॥ ३१६ ॥
लोकोत्तरगुणा पुत्री तव सीतेति विद्यते । भामण्डलश्च मे सूनुरतुलो रूपसम्पदा ॥ ३१७ ॥
द्वयोर्वधूवरत्वेन संयोगोऽस्तूचितोऽधुना । सम्बन्धादावयोश्चापि मिथो भवतु सौहृदम् ॥ ३१८ ॥
इत्यूचे जनको दत्ता रामाय स्वसुता मया । कथमन्यस्य यच्छामि दीयन्ते कन्यकाः सकृत् ॥ ३१९ ॥
अथ चन्द्रगतिः प्रोचे स्नेहवृद्धिकृते मया । आनीय याचितोऽसि त्वं तां क्षमो हर्तुमप्यहम् ॥ ३२० ॥
यद्यपि स्वसुता सीता त्वया रामाय कल्पिता । तथापि नः पराजित्य रामस्तां परिणेष्यति ॥ ३२१ ॥
वज्रावर्तार्णवावर्ते धनुषी देवताज्ञया । सदा यक्षसहस्राधिष्ठिते दुःसहतेजसी ॥ ३२२ ॥

१ धनुर्नाम्नी मते ।

पूज्ये ते न सदा गोत्रदेवतावन्निकेतने । कृते भविष्यतो रामशार्ङ्गिणोस्तद्गृहाण ते ॥ ३२३ ॥
आम्यामारोपयत्येकमपि दाशरथि स चेत् । वय जितास्तदा तेन स उद्वहतु ते सुताम् ॥ ३२४ ॥
प्रतिज्ञामित्यनुग्राह्य बलादपि हि मैथिलम् । मिथिलायाममेनैपीच चापे ते च सनन्दन ॥ ३२५ ॥
मुमोच जनक राजौकसि चन्द्रगतिर्नृप । स्वय तु सपरीवारोऽवात्सीत्पुर्या वहिर्भुवि ॥ ३२६ ॥
आचख्यौ जनकस्तच्च वृत्त निशि तदैव हि । महादेव्या विदेहाया सद्यो हृदयशल्यदम् ॥ ३२७ ॥
विदेहापि रुरोदैव रे दैवास्यन्तनिर्घृण । पुत्र हृत्वा न मे तृप्त पुत्रीमपि हरिष्यसि ॥ ३२८ ॥
स्वेच्छयैव वरादान लोके न हि परेच्छया । परेच्छया वरादान दैवादापतित मम ॥ ३२९ ॥
परेच्छया प्रतिज्ञातं कोदण्डारोपणं यदि । कुर्यान्न रामोऽन्य कुर्यात्तदानिष्टो वरो भवेत् ॥ ३३० ॥
अथेत्य जनकोऽवोचन्मा भैषीरेष राघव । दृष्टसारो मया देवि लतावच्चस्य तद्वतु ॥ ३३१ ॥
विदेहामिति सम्बोध्य प्रभाते जनकोऽमुचत् । अर्चित्वा चापरत्ने ते मण्डपे मञ्चमण्डिते ॥ ३३२ ॥
सीतास्वयवरायाथ विद्याधरनरेश्वरा । तत्रैत्य जनकाहूता अधिमञ्चमुपाविशन् ॥ ३३३ ॥
तत सखीपरिवृता दिव्यालङ्कारधारिणी । भूचारिणीव त्रिदशी तत्रोपेयाय जानकी ॥ ३३४ ॥
तत्र कृत्वा धनु पूजां राम मनसिकृत्य च । अतिष्ठज्जानकी तत्र जनानेत्रसुधासरित् ॥ ३३५ ॥
नारदोदितसर्वादिसीतारूपेक्षणात्तदा । भामण्डलकुमारस्य मारोऽभून्मारकात्मक ॥ ३३६ ॥
अथोचे जनकद्वा स्थो भो भो सर्वेऽपि खेचरा । महीचराश्च राजानो जनकोऽन्य वदत्यद ॥ ३३७ ॥

१ सपुत्रः । २ रामो न कुर्यादन्यश्च कुर्यादित्यन्वय । ३ कामदेव ।

आरोपयति यः कश्चिदनयोश्चापदण्डयोः । अप्येकतरसद्येव स उद्वहतु नः सुताम् ॥ ३३८ ॥
एकैकशोऽथ दोष्मन्त खेचरा भूभुजोऽपि च । उपधन्वं समाजग्मुस्तदारोपणकाम्यया ॥ ३३९ ॥
वेष्टिते पन्नगै रौद्रैश्चापे ते तीव्रतेजसी । नालं बभूवुस्ते स्प्रष्टुमप्यादातुं तु का कथा ॥ ३४० ॥
धनुःस्फुलिङ्गज्वालाभिर्निर्यान्तीभिरनेकशः । प्लुष्यमाणा निवृत्त्येयुस्तेऽन्यतोऽधोमुखा ह्रिया ॥ ३४१ ॥
अथ दाशरथी रामश्चलत्काञ्चनकुण्डलः । गजेन्द्रलीलागमनश्चापोपान्तमुपासरत् ॥ ३४२ ॥
वीक्ष्यमाण सोपहास चन्द्रगत्यादिभिर्नृपैः । जनकेन च साशङ्क निःशङ्को लक्ष्मणाग्रजः ॥ ३४३ ॥
वज्रमिव वज्रपाणिर्वज्रावर्तं महाधनु । शान्तोरगानलं सद्यः परिपस्पर्श पाणिना ॥ ३४४ ॥
॥ युग्मम् ॥

स्थापयित्वाध्ययःपीठं नमयित्वा च वेत्रवत् । अधिज्यं विदधे धन्वं तद्रामो धन्विनां वरः ॥ ३४५ ॥
आकर्णान्तं तदाकृष्य रोदःकुक्षिम्भरिध्वनि । धनुरास्फालयामास स्वयशःपटहोपमम् ॥ ३४६ ॥
स्वयंवरस्रजं रामे स्वयं चिक्षेप मैथिली । चापाच्चोत्तारयामास रामभद्रोऽपि शिञ्जिनीम् ॥ ३४७ ॥
लक्ष्मणोऽप्यर्णवावर्तं कार्मुकं रामशासनात् । अधिज्यं विदधे सद्यः प्रेक्षितो विस्मितैर्जनैः ॥ ३४८ ॥
आस्फालयच्च तन्नादवधरीकृतदिङ्मुखम् । उत्तार्य मौर्वीं सौमित्रिः पुनः स्थाने मुमोच च ॥ ३४९ ॥
ददुः सौमित्रये विद्याधराश्चकितविस्मिताः । अष्टादश निजाः कन्याः सुरकन्या इवाद्भुताः ॥ ३५० ॥

---

१ सर्पैः । २ दह्यमाना । ३ लोहपीठोपरि । ४ अन्तरीक्षस्य कुक्षिम्भरिर्ध्वनिर्यस्य तत्तथा । ५ मौर्वीम् प्रत्यञ्चाम् ।

विलक्षाश्चन्द्रगत्याद्यास्ताम्यद्भामण्डलान्विताः । विद्याधरेन्द्रा ययुः पुरं निजनिजं ततः ॥ ३५१ ॥
अथ मैथिलसन्देशादागाद्दशरथो द्रुतम् । महोत्सवेन जज्ञे च विवाहो रामसीतयोः ॥ ३५२ ॥
तदा च जनकभ्राता कनकोऽपि निजां सुताम् । भरताय ददौ भद्रां सुप्रभाकुक्षिसम्भवाम् ॥ ३५३ ॥
समं सुतैः स्नुषाभिश्च राजा दशरथोऽपि हि । ययावयोध्यां नगरीं नागरैः प्रकृतोत्सवाम् ॥ ३५४ ॥
अपरेद्युर्दशरथो राजा चैत्यमहोत्सवम् । ऋद्ध्या महत्या विदधे शान्तिस्नात्रं चकार च ॥ ३५५ ॥
स्नात्राम्भः सौविदल्लेन महिष्यै प्रथमं तदा । पश्चाच्चपरपत्नीभ्यो दासीभिः प्राहिणोन्नृपः ॥ ३५६ ॥
यौवनाच्छीघ्रगामिन्यो दास्यः प्रथममेव ताः । राज्ञीनामार्पयन् स्नानपयस्ताश्च ववन्दिरे ॥ ३५७ ॥
वृद्धत्वात्सौविदल्ले तु शनिषन्मन्दगामिनि । असम्प्राप्तस्नानजला महादेवीत्यचिन्तयत् ॥ ३५८ ॥
सर्वासामेव राज्ञीनां जिनेन्द्रस्नानवारिणा । प्रसादो विदधे राज्ञा महिष्या अपि मे न हि ॥ ३५९ ॥
तत्कृतं मन्दभाग्याया जीवितेनाप्यतो मम । म्लाने माने हि दुःखाय जीवितं मरणादपि ॥ ३६० ॥
विमृश्येति प्रविश्यान्तर्मरणे कृतनिश्चया । वस्त्रेणोद्बद्धुमात्मानमारेभे सा मनस्विनी ॥ ३६१ ॥
तदैवागान्नरेन्द्रस्तां तदवस्थां ददर्श च । तन्मृत्युभीतः स्वोत्सङ्गे निवेश्यैवमुवाच च ॥ ३६२ ॥
कुतोऽपमानादारब्धं दुःसाहसमिदं त्वया । किं नाम दैवाद्विदधे मया काप्यवमानना ॥ ३६३ ॥
सापि गद्गदवागूचे जिनस्नानपयः पृथक् । सर्वासां प्रैषि राज्ञीनां मत्तो न पुनर्मम ॥ ३६४ ॥
इत्यवोचत सा यावत्तावदागाच्च कञ्चुकी । राज्ञार्हत्स्नात्रवारीदं प्रस्थापितमिति ब्रुवन् ॥ ३६५ ॥

---

१ ताम्यन् यो भामण्डलस्तेन युक्ता । २ पुत्रवधूभिः । ३ प्रकर्षेण कृत उत्सवो यस्यां ताम् । ४ कञ्चु

सोऽभ्यषिञ्चच्च तां मूर्ध्नि तेन पुण्येन वारिणा । विलम्बेन किमागास्त्वं राज्ञा चैवमपृच्छयत ॥ ३६६ ॥
कञ्चुक्यपि जगादैवं वार्द्धकं मेऽपराध्यति । सर्वकार्याक्षमं स्वामिन्मां पश्य स्वयमप्यमुम् ॥ ३६७ ॥
ततो मुमूर्षुमिव तं प्रस्खलन्तं पदे पदे । घण्टान्तर्लालिकालोलदशनं वलिभाजनम् ॥ ३६८ ॥
श्वेतसर्वाङ्गरोमाणं भ्रूलोमच्छन्नलोचनम् । शुष्कमांसासृजं प्रादुर्भूतसर्वाङ्गवेपथुम् ॥ ३६९ ॥
विलोक्याचिन्तयद्राजा स्मो यावन्नेदृशा वयम् । चतुर्थपुरुषार्थाय तावद्धि प्रयतामहे ॥ ३७० ॥

॥ त्रिभिर्विशेषकम् ॥

एवंमनोरथो राजा विषयेभ्यः पराङ्मुखः । कमप्यनैषीत् समयं भवे वैराग्यतन्मयः ॥ ३७१ ॥
तस्यां नगर्यामन्येद्युश्चतुर्ज्ञानी महामुनिः । सत्यभूतिरिति सङ्घप्रावृतः समवासरत् ॥ ३७२ ॥
सपुत्रादिपरीवारो राजा दशरथोऽपि तम् । गत्वा ववन्दे शुश्रूषुर्देशनां निषसाद च ॥ ३७३ ॥
तदानीमेव वैताढ्यगिरेश्चन्द्रगतिर्नृपः । सीताभिलापसन्तप्तभामण्डलसमन्वितः ॥ ३७४ ॥
विद्याधरेन्द्रैरन्वीतो रथावर्ताचलेऽर्हतः । वन्दित्वा विनिवृत्तः संस्तत्रायातो नभःस्थितः ॥ ३७५ ॥

॥ युग्मम् ॥

तं मुनिं समवसृतं वीक्षाञ्चक्रेऽवतीर्य च । ववन्देऽथाग्रतो भर्तुः शुश्रूषुर्निषसाद च ॥ ३७६ ॥
सीताभिलापजं तापं ज्ञात्वा भामण्डलस्य तु । सत्यभूतिः सत्यवादी सूरिः प्रस्तुत्य देशनाम् ॥ ३७७ ॥

---

१ घण्टाया अन्तर्मध्ये या लालिका वादनवस्तु तद्वल्लोलाश्चला दशना दन्ता यस्य स तम् ।

चन्द्रगतिपुष्पवत्यो सभामण्डलसीतयो । समाचख्यौ पूर्वभवास्तेषा पापान्निवृत्तये ॥ ३७८ ॥

॥ युग्मम् ॥

सीताभामण्डलयोश्च भवेऽस्मिन् युग्मजातताम् । भामण्डलापहार च यथावदवदन्मुनि ॥ ३७९ ॥
भामण्डलकुमारोऽपि तदाकर्ण्य मुनेर्वच । सञ्जातजातिस्मरणो मूर्छितो न्यपतद्भुवि ॥ ३८० ॥
भामण्डलो लब्धसंज्ञ कथित सत्यभूतिना । स्वपूर्वभववृत्तान्त शशस स्वयमप्यथ ॥ ३८१ ॥
ययु परमसवेग चन्द्रगत्यादयोऽप्यथ । स्वसेति सीता च नमश्चक्रे भामण्डल सुधी ॥ ३८२ ॥
जातमात्रो योऽपजह्रे सोऽयं मम सहोदर । इति हृष्टाशिष तस्मै ददौ सीता महासती ॥ ३८३ ॥
नमश्चकार राम च ललाटस्पृष्टभूतल । भामण्डलो विनयवान् सद्य सञ्जातसौहृद ॥ ३८४ ॥
सम विदेहया देव्या जनकं भूपतिं तत । तत्रानैषीच्चन्द्रगति प्रेष्य विद्याधरोत्तमान् ॥ ३८५ ॥
जातमात्रापहारादिवृत्तान्ताख्यानपूर्वकम् । भामण्डलसुतस्तेऽसाविति तस्मै शशस स ॥ ३८६ ॥
अहर्षं वचसा तेन स्तनितेनेव बर्हिण । जनको जननी सा च विदेहा स्तन्यमक्षरत् ॥ ३८७ ॥
भामण्डलो नमश्चक्रे पितरावुपलक्ष्य तौ । चुम्ब्यमानो मूर्ध्नि ताभ्यां स्नाप्यमानोऽश्रुवारिभि ॥ ३८८ ॥
अथ चन्द्रगती राज्य न्यस्य भामण्डले सुते । भवोद्विग्न प्रवव्राज सत्यभूतिमुने पुर ॥ ३८९ ॥
सत्यभूतिं चन्द्रगतिं पितरावनरण्यजम् । सीतारामौ च नत्वागमन्निज भामण्डल पुरम् ॥ ३९० ॥
सत्यभूतिं महर्षिं त नत्वा दशरथो नृप । अपृच्छदात्मन पूर्वभवानाख्यन्मुनिश्च स ॥ ३९१ ॥

---

१ मेघगर्जितेन । २ दशरथम् ।

सेनापुरे त्वं वणिजो मानवस्य महात्मनः । पत्न्यामभूर्दीर्घिकायामुपारिस्तिर्नाम कन्यका ॥ ३९२ ॥
साधूनां प्रत्यनीका सा भूत्वा तत्र भवे चिरम् । पर्यभ्राम कष्टासु तिर्यगादिषु योनिषु ॥ ३९३ ॥
तज्जीवस्त्वं भवं भ्रान्त्वा पुरे चन्द्रपुरे ततः । धनस्याभूत्सुतः पत्न्यां सुन्दर्यां वरुणाभिधः ॥ ३९४ ॥
तदोदारः प्रकृत्या त्वं साधुभ्य श्रद्धयाधिकम् । निरन्तरमदा दानं कालधर्ममथासदः ॥ ३९५ ॥
द्वीपेऽथ धातकीखण्डे युग्म्युत्तरकुरुष्वभूः । मृत्वा चागा देवभूयं परिच्युत्य ततोऽपि हि ॥ ३९६ ॥
विजये पुष्कलावत्यां पुष्कलायां च पुर्यभूः । नन्दिघोषनृपपृथ्वीदेव्योस्तुङ्नन्दिवर्धन ः ॥ ३९७ ॥
नन्दिघोषः सुतं राज्ये न्यस्य त्वां नन्दिवर्धनम् । यशोधरमुनेरात्तदीक्षो ग्रैवेयके ययौ ॥ ३९८ ॥
श्रावकस्त्वं पालयित्वा त्वं मृत्वा नन्दिवर्धन । त्रिदशो ब्रह्मलोकेऽभूः परिच्युत्य ततोऽपि हि ॥ ३९९ ॥
प्रत्यग्विदेहे वैताढ्ये चोत्तरश्रेणिभूषणे । पुरे शशिपुरे रत्नमालिनः खेचरेशितुः ॥ ४०० ॥
विद्युल्लताभिधानायां सधर्मिण्यां महाभुजः । सूनुः सूर्यजय इति नाम्ना त्वं तनयोऽभवः ॥ ४०१ ॥
॥ त्रिभिर्विशेषकम् ॥

अन्यदा रत्नमाली तु दृप्तं विद्याधरेश्वरम् । विजेतुं वज्रनयनं पुरं सिंहपुरं ययौ ॥ ४०२ ॥
स ज्वालयितुमारेभे पुरं सिंहपुरं ततः । सबालवृद्धं सस्त्रैणं सपशुपवनं हठात् ॥ ४०३ ॥
अभिधानेनोपमन्योः पूर्वजन्मपुरोधस । जीवो देवः सहस्राराप्तं तदेत्यैवमब्रवीत् ॥ ४०४ ॥
भो भो महानुभावैवं मा कृथाः पापमुत्कटम् । त्वं भूरिनन्दनो नाम राजाभूः पूर्वजन्मनि ॥ ४०५ ॥

१ श्रेणिणी । २ पुत्र- ।

तदा भासनिर्वृत्तिं त्वं प्रत्यज्ञासीर्विवेकवान् । पुरोहितेन तेनोपमन्युनोक्तश्च मभवान् ॥ ४०६ ॥
पुरोधा सोऽन्यदा पुंसा स्कन्दनाम्ना निशाचित गजश्चाभूद्गृहीतश्च भूरिनन्दनभूभुजा ॥ ४०७ ॥
हतश्चमो रणे सोऽथ भूरिनन्दनभूपतेः । गन्धारायामभूत्पत्न्या सूनुर्नाम्नारिसूदनः ॥ ४०८ ॥
सञ्जातजातिस्मरणः प्रव्रज्य च विपद्य च । सोऽहं देव सहस्रारे कल्पे जातोऽस्मि विद्धि माम् ॥ ४०९ ॥
भूरिनन्दनराजोऽभूद्विपद्याजगरो वने । दग्धो दावेन सोऽयासीद् द्वितीयां नरकावनिम् ॥ ४१० ॥
नरकेऽपि मया गत्वा स प्राक्स्नेहात्प्रबोधितः । तस्मादुद्धृत्य सोऽभूस्त्वं रत्नमालीह पार्थिव ॥ ४११ ॥
मांसप्रत्याख्यानभङ्गं तदानीमिव सम्प्रति । अनन्तरं सोऽदर्के सत्पुरुदाह स्म मा कथाः ॥ ४१२ ॥
तदाकर्ण्य वचो युद्धाद्रत्नमाली न्यवर्तत । राज्ये न्यधत्त च कुलनन्दनं सूर्यनन्दनम् ॥ ४१३ ॥
सूर्यजयेन पुत्रेण सहैव व्रतमाददे । तत्कालमेव तिलकसुन्दराचार्यसन्निधौ ॥ ४१४ ॥
द्वावप्यभूतां तौ मृत्वा महाशुक्रेऽमरोत्तमौ । सूर्यजयस्ततश्च्युत्वा सोऽस्त्वं दशरथोऽभवः ॥ ४१५ ॥
प्रच्युत्य रत्नमाली तु जनकोऽयमजायत । अभूच्च्युत्वोपमन्युस्तु कनको जनकानुजः ॥ ४१६ ॥
नन्दिघोषः पिता यस्ते नन्दिवर्धनजन्मनि । सोऽहं ग्रैवेयकाच्च्युत्वा सत्यभूतिरिहाभवम् ॥ ४१७ ॥
तच्छ्रुत्वा जातसंवेगस्तं वन्दित्वानरण्यजः । प्रविव्रजिषुराधातुं रामे राज्यं गृहं ययौ ॥ ४१८ ॥
अथ राज्ञीः सुतान्मन्त्रिमुख्यानाहूय पार्थिवः । आपप्रच्छे यथौचित्यं दत्तालापसुधारसः ॥ ४१९ ॥
नत्वा बभाषे भरतोऽहं सर्वविरतिं प्रभो । त्वया सममुपादास्येऽस्थास्ये त्वां विना न हि ॥ ४२० ॥

---

१ सूर्यञ्जयस्य पुत्रं कुलनन्दननामानम् । २ स्थापयितुम् । ३ दत्त आलापरूप सुधारसो येन सः ।

ममान्यथा हि द्वे कष्टे स्वामिन्नत्यन्तदुःसहे । एकं त्वत्पादविरहोऽपरं संसारतर्पणम् ॥ ४२१ ॥
तच्छ्रुत्वा चाथ कैकेयी निश्चितं भाव्यतः परम् । न पतिर्न च मे सूनुरिति ध्यात्वाब्रवीदिदम् ॥ ४२२ ॥
स्वामिन् स्मरसि योऽदत्तस्त्वया मह्यं स्वयं वरः । स्वयंवरोत्सवे तत्र तेन सारथ्यकर्मणा ॥ ४२३ ॥
तं प्रयच्छाधुना मह्य नाथ सत्यप्रतिश्रव । प्रस्तरोत्कीर्णरेखेव प्रतिज्ञा हि महात्मनाम् ॥ ४२४ ॥
अथावदद्दशरथः प्रतिपन्नं स्मराम्यहम् । याचस्व यन्ममाधीनं विना व्रतनिषेधनम् ॥ ४२५ ॥
ततो ययाचे कैकेयी त्वं चेत्प्रव्रजसि स्वयम् । स्वामिन् विश्वंभरामेतां भरताय प्रयच्छ तत् ॥ ४२६ ॥
अद्यैव गृह्यतामेषा भवूभूरित्यभिधाय ताम् । सलक्ष्मणं समाहूय राम दशरथोऽभ्यदत् ॥ ४२७ ॥
अस्याः सारथ्यतुष्टेन दत्तः पूर्वं मया वरः । सोऽयं भरतराज्येन कैकेय्या याचितोऽधुना ॥ ४२८ ॥
रामोऽपि हृष्टोऽभाषिष्ट मात्रेदं साधु याचितम् । यन्मद्भ्रात्रे भरताय राज्यदानं महौजसे ॥ ४२९ ॥
आपप्रच्छे प्रसादान्मामिदं तातस्तथाप्यदः । दुनोति मामविनयसूचनाकारणं जने ॥ ४३० ॥
अप्येकवन्दिने राज्यं तुष्टस्तातो ददात्वदः । निषेधेऽनुमतौ वा मे न स्वाम्यं पत्तिमानिनः ॥ ४३१ ॥
भरतोऽप्यहमेवास्मि निर्विशेषावुभौ तव । अतोऽभिषिच्यतां राज्ये भरतः परया मुदा ॥ ४३२ ॥
इति रामवचः श्रुत्वा भूपतिः प्रीतिविस्मितः । आदिक्षन्मन्त्रिणो यावद्भरतस्तावदब्रवीत् ॥ ४३३ ॥
स्वामिन् सह व्रतादानमादावप्यर्थितं मया । तात तन्नान्यथा कर्तुं कस्यापि वचसार्हसि ॥ ४३४ ॥
राजाप्युवाच मा वत्स मत्प्रतिज्ञां मुधा कुरु । वरो मया हि त्वन्मातुर्दत्तो न्यासीकृतश्चिरम् ॥ ४३५ ॥

१ हे सत्यप्रतिज्ञ । २ प्रस्तरः पाषाण । ३ पृथ्वीम् । ४ अविनयसूचनस्य कारणम् । ५ पत्तिसदृशस्य मम नाधिपत्यम् ।

सोऽद्य ते राज्यदानेन कैकेय्या याचितोऽनघ । आज्ञां मम च मातुश्च नान्यथा कर्तुमर्हसि ॥ ४३६ ॥
रामो भरतमित्यूचे न ते गर्वोऽस्ति यद्यपि । तथापि सत्यापयितुं तात त्वं राज्यमुद्वह ॥ ४३७ ॥
अथाश्रुभरितदृष्टिर्भरतो गद्गदाक्षरम् । पतित्वा पादयो राममित्युवाच कृताञ्जलि ॥ ४३८ ॥
तातपादार्यपादाना महेच्छानामद खलु । उचित ददता राज्यमाददानस्य मे न तु ॥ ४३९ ॥
तातस्य खलु किं नाह किं वा नार्यस्य चानुज । सत्य मातृमुखोऽस्म्येष गर्वमेव करोमि चेत् ॥ ४४० ॥
रामो राजानमित्यूचे भरतो मयि सत्यसौ । राज्य नादास्यते तस्माद्वनवासाय याम्यहम् ॥ ४४१ ॥
इत्यनुज्ञाप्य राजान रामो नत्वा च भक्तित । भरते च रुदत्युच्चैर्निर्ययौ चापतूणवान् ॥ ४४२ ॥
वनवासाय गच्छन्त दृष्ट्वा दशरथ सुतम् । भूयो भूयो ययौ मूर्छामतुच्छां स्नेहकातर ॥ ४४३ ॥
अथापराजितां देवीं नत्वा रामोऽभ्यधादिति । मातर्यथाह तनयो भरतोऽपि तथैव ते ॥ ४४४ ॥
त्वां सत्यापयितु स धां तस्मै राज्यमदात्पिता । मयि सत्येष नादत्ते तद्गन्तव्य मया वने ॥ ४४५ ॥
द्रष्टव्या भरत पश्ये सविशेषप्रसादया । कदाचिदपि मा भूस्त्व मद्वियोगेन कातरा ॥ ४४६ ॥
तामाकर्ण्य गिर देवी पपात भुवि मूर्छिता । चेटीभिश्चन्दनाम्भोभि सिक्तोत्तस्थावुवाच च ॥ ४४७ ॥
आ केन जीवितास्म्येषा मूर्छा हि सुखमृत्यवे । सहिष्ये रामविरहदु ख जीवन्त्यह कथम् ॥ ४४८ ॥
वन व्रजिष्यति सुत पतिश्च प्रव्रजिष्यति । श्रुत्वाप्येतन्न यद्दीर्णा कौशल्ये वज्रमय्यसि ॥ ४४९ ॥
रामो जगाद भूयोऽपि मात पत्न्यसि मत्पितु । तत किमिदमारब्ध कातरस्त्रीजनोचितम् ॥ ४५० ॥

---

१ तस्मात्कारणात् । २ कौशल्ये अपराजिताया अपर नाम ।

वनान्यटितुमेकाकी याति केसरिणीसुतः । स्वस्था तु केसरिण्यास्ते न ताम्यति मनागपि ॥ ४५१ ॥
तातस्य ऋणमस्त्युच्चैः प्रतिपन्नवरो ह्ययम् । अत्र स्थिते च मय्यम्ब तस्यानृण्यं भवेत्कथम् ॥ ४५२ ॥
इत्यादियुक्तिवचनैर्बोधयित्वापराजिताम् । तां नत्वान्याश्च जननीर्निर्ययौ लक्ष्मणाग्रजः ॥ ४५३ ॥
दूराद्दशरथं नत्वा सीतोपेत्यापराजिताम् । नत्वा चायाचतादेशं रामानुगमनं प्रति ॥ ४५४ ॥
ऊर्ध्वेऽपराजिता देवी क्रोडमारोप्य जानकीम् । बालामिव स्नपयन्ती कवोष्णैर्नयनोदकैः ॥ ४५५ ॥
वत्से वत्सो रामभद्रो विनयी पित्रनुज्ञया । वनं प्रयाति तस्यैतन्नृसिंहस्य न दुष्करम् ॥ ४५६ ॥
देवीव लालितासि त्वमाजन्मोत्तमवाहनैः । सहिष्यसे कथं वत्से पादचङ्क्रमणव्यथाम् ॥ ४५७ ॥
तवाङ्गं सौकुमार्येण कमलोदरसोदरम् । क्लिष्टं तापादिना कुर्यात्क्लेशं दाशरथेरपि ॥ ४५८ ॥
स्वभर्तुरनुयानेनानिष्टकष्टागमेन च । न निषेधं न चानुज्ञां यान्त्यास्ते कर्तुमुत्सहे ॥ ४५९ ॥
सीताप्युवाच निःशोका नमस्कृत्यापराजिताम् । दधती प्रातरुत्फुल्लसरोरुहमिवाननम् ॥ ४६० ॥
अधिदेवस्तु मे भक्तिर्नित्यं क्षेमङ्करा पथि । एषाहमनुयास्यामि रामं विद्युदिवाम्बुदम् ॥ ४६१ ॥
इत्युक्त्वा तां पुनर्नत्वा निर्ययौ जनकात्मजा । आत्मानमात्मारामेव ध्यायन्ती लक्ष्मणाग्रजम् ॥ ४६२ ॥
अहो अत्यन्तमनया पतिभक्त्याद्य जानकी । आद्योदाहरणं जज्ञे पतिदैवतयोषिताम् ॥ ४६३ ॥
कष्टादमीता सीतेयं सतीजनमतल्लिका । अहो शीलेन महता पुनाति स्वं कुलद्वयम् ॥ ४६४ ॥

---

१ सिंहीपुत्रः । २ अङ्कम् । ३ पट्टराज्ञीव । ४ रामस्यापि क्लेशं कुर्यात्तापादिना क्लिष्टं तवाङ्गम् कर्तृ । ५ त्वयीत्यधिदेवस् । ६ पतिरेव दैवतं यासां तासां नारीणाम् । ७ सतीसमूहे प्रशस्या ।

इति व्याहरन्तीभि शोकगद्गदया गिरा । पौरीभि कथ्यमानेयं सीता यान्ती वन प्रति ॥ ४६५ ॥
॥ त्रिभिर्विशेषकम् ॥

राम वनाय निर्यान्त श्रुत्वा सपदि लक्ष्मण । सद्य सधुक्षितक्रोधवह्निर्दध्याविद हृदि ॥ ४६६ ॥
ऋजुस्तात प्रकृत्यापि प्रकृत्यानृजव स्त्रिय । इयच्चिर वर धृत्वा याचते सान्यथा कथम् ॥ ४६७ ॥
दत्तमेवावता राज्य भरताय महीभुजा । अपनीतमृण स्वस्य गता नम पितणभी ॥ ४६८ ॥
निर्मथ साम्प्रत हत्वा भरतात् कुलपासनात् । न्यस्यामि राज्य किं रामे विरामाय निजक्रुध ॥ ४६९ ॥
अथवासौ महासत्वस्तृणवद्राज्यमुज्झितम् । रामो नादास्यते दुःख तातस्य तु भविष्यति ॥ ४७० ॥
तातस्य मा स्म भूद्दुःख राजास्तु भरतोऽपि हि । अह त्वनुगमिष्यामि रामपादान् पदातिवत् ॥ ४७१ ॥
एव विचिन्त्य सौमित्रिर्नत्वापृच्छ्य च भूपतिम् । ययौ सुमित्रामाप्रष्टु नत्वा चैवमवोचत ॥ ४७२ ॥
गमिष्यति वन रामोऽनुगमिष्यामि त त्वहम् । मर्यादाब्धि विना स्थाय न स्यात्तु लक्ष्मण क्षम ॥ ४७३ ॥
कथञ्चिद्धैर्यमालम्ब्य सुमित्राप्यब्रवीदिदम् । साधु वत्सासि मे वत्सो ज्येष्ठ यदनुगच्छसि ॥ ४७४ ॥
मां नमस्कृत्य वत्सोऽद्य रामभद्रश्चिर गत[२] । अतिदूरे भवति ते मा विलम्बस्व वत्स तत् ॥ ४७५ ॥
इद साध्वम्ब साध्वम्ब मदम्बासीत्युदीर्य ताम् । नत्वा च लक्ष्मणोऽगच्छत् प्रणन्तुमपराजिताम् ॥ ४७६ ॥
तां नत्वोवाच सौमित्रिरार्य एकाक्यगाच्चिरम् । त्वामापृच्छुमह त्वागामार्यानुगमनोत्सुक ॥ ॥ ४७७ ॥
उदश्रुरूचे कौशल्या मन्दभाग्यास्मि हा हता । वत्स त्वमपि मां मुक्त्वा प्रस्थितोऽसि वनाय यत् ॥ ४७८ ॥

---

१ दीप्तः क्रोधाग्निर्यस्य सः । २ वक्ता । ३ कुलाधमात् ।

त्वमेकोऽत्रावतिष्ठस्व मा प्रतिष्ठस्व लक्ष्मण । ममाश्वासकृते रामविरहार्दितचेतसः ॥ ४७९ ॥
प्रत्यूचे लक्ष्मणोऽप्येवं माता रामस्य नन्वसि । मातः कृतमधैर्येणार्हेण सामान्ययोषिताम् ॥ ४८० ॥
दूरे गच्छति मे बन्धुरनुयास्यामि तं द्रुतम् । तद्विघ्नं मा कृथा देवि रामनिघ्नः सदाप्यहम् ॥ ४८१ ॥
तामित्युक्त्वा च नत्वा च सौमित्रिरथ सत्वरम् । अनुधाव्यागमद् सीतारामौ कार्मुकतूणभृत् ॥ ४८२ ॥
प्रयोऽपि निर्ययुः पुर्यां विकस्वरमुखाम्बुजाः । विलासोपवनायेव वनवासाय सोद्यमाः ॥ ४८३ ॥
प्राणैरिव विनिर्यद्भिर्मैथिलीरामलक्ष्मणैः । कष्टां नराश्च नार्यश्च नगर्यां लेभिरे दशाम् ॥ ४८४ ॥
वेगात्तानन्वधावंस्तानुरागेण गरीयसा । नागराः क्रूरकैकेयीविध्योराक्रोशदायिनः ॥ ४८५ ॥
प्राप्यायमाणो राजापि सान्तःपुरपरिच्छदः । द्रुतमन्वसरद्राममाकृष्टः स्नेहरज्जुभिः ॥ ४८६ ॥
द्रुतं राज्ञि जने चापि राममद्रानुगामिनि । नगर्ययोद्धा समभूदुद्वसेवसमन्ततः ॥ ४८७ ॥
अथावस्थाय काकुत्स्थः पितरं जननीरपि । न्यवर्तयत्कथमपि गिरा विनयसारया ॥ ४८८ ॥
तथा यथोचितालापैः पौरानपि विसृज्य सः । सीतासौमित्रिसहितस्त्वरितत्वरितं ययौ ॥ ४८९ ॥
ग्रामे ग्रामे ग्रामवृद्धैर्महेभ्यैश्च पुरे पुरे । प्रार्थ्यमानोऽप्यवस्थातुं काकुत्स्थो न ह्यवास्थित ॥ ४९० ॥
इतश्च भरतो राज्यं नाददे किं तु प्रत्युत । कैकेयीं स्वं च चुक्रोश स्वभ्रातृविरहासहः ॥ ४९१ ॥
परिव्रज्योत्सुको राजा सामन्तान् सचिवानपि । प्राहिणोद्राममानेतुं राज्याय सहलक्ष्मणम् ॥ ४९२ ॥

१ रामाधीनः । २ क्रूरायाः कैकेय्या विधेर्दैवस्य च । ३ उद्वसा निर्जना 'उजड' इति भाषाया अनुकरणे । ४ रामः ।

पश्चिमायायिनं रामं प्रापुस्त्वरितमेव ते । निवृत्त्यै चाभ्यधुर्भक्त्या राजाज्ञाख्यानपूर्वकम् ॥ ४९३ ॥
तैर्दीनं प्रार्थ्यमानोऽपि न न्यवर्तत राघवः । महतां हि प्रतिज्ञा तु न चलत्यद्रिपादवत् ॥ ४९४ ॥
विसृज्यमाना अपि ते राघवेण मुहुर्मुहुः । सहैव चेलुः सर्वेऽपि कृताशास्तन्निवर्तने ॥ ४९५ ॥
अयोध्यापदपदं निर्मानुष्यां घनद्रुमाम् । पारियात्राटवीं प्रापुर्जानकीरामलक्ष्मणाः ॥ ४९६ ॥
अभिधानेन गम्भीरां गम्भीरावर्तभीषणाम् । पृथुप्रवाहां पथि ते समीयाञ्चक्रिरे नदीम् ॥ ४९७ ॥
तत्र स्थित्वावदद्रामः सामन्तादीनिदं वचः । इतः स्थानान्निवर्तध्वमध्वा कष्टो ह्यतः परम् ॥ ४९८ ॥
अस्माकं कुशलोदन्तं गत्वा तातस्य शंसत । उपास्यं भरतं भक्त्या तातवत्ताप्यतः परम् ॥ ४९९ ॥
धिगस्मान्रामपादानामयोग्यानिति भूरिशः । ते रुदन्तो न्यवर्तन्त बाष्पाम्भःस्तिमितांशुकाः ॥ ५०० ॥
उत्ततार ततो रामो दुस्तरां तां तरङ्गिणीम् । ससीतालक्ष्मणः सास्रैः प्रेक्षितस्तैस्तटस्थितैः ॥ ५०१ ॥
रामेऽथ दृक्पथातीते सामन्ताद्याः कथञ्चन । अयोध्यानगरीमीयुस्तद्वार्तां व्याचचक्षिरे ॥ ५०२ ॥
राजाप्युवाच भरतं नायातौ रामलक्ष्मणौ । राज्यं गृहाण मम तद्दीक्षाविघ्नाय मा स्म भूः ॥ ५०३ ॥
भरतोऽप्यवदद्राज्यं नादास्येऽहं कथञ्चन । आनेष्ये तु स्वयं गत्वा प्रसाद्य निजमग्रजम् ॥ ५०४ ॥
आगात्तदा च कैकेयी राजानमिति चाब्रवीत् । भरताय त्वया राज्यं दत्तं सत्यप्रतिश्रव ॥ ५०५ ॥
परमेष न गृह्णाति राज्यं ते विनयी सुतः । अन्यासां चास्य मातॄणां महद्दुःखं ममापि च ॥ ५०६ ॥

---

१ पश्चिमायां गामिनम् । २ निवर्तनाय । ३ पर्वतप्रत्यन्तवत् । ४ वदत । ५ पारियात्रनामा कुलाचलस्तस्याटवीं केचित् सौराष्ट्रदेशेषु प्रसिद्धं 'बरडा' इत्याख्यं गिरिं पारियात्रं वदन्ति । ६ सेवध्वम् । ७ बाष्पजलेनार्द्रवस्त्राणि येषां ते । ८ अश्रुसहितैः ।

अविमृश्य विधायिन्या पापीयस्या मया कृतम् । सति त्वयि सपुत्रेऽपि हहा राज्यमराजकम् ॥ ५०७ ॥
कौशल्यायाः सुमित्रायाः सुप्रभायाश्च दुःश्रवम् । रुदितं मम शृण्वन्त्या हृदयं भवति द्विधा ॥ ५०८ ॥
भरतेन समं गत्वा तौ वत्सौ रामलक्ष्मणौ । अनुनीय समानेष्याम्यनुजानीहि नाथ माम् ॥ ५०९ ॥
अथादिष्टा प्रहृष्टेन राज्ञा दशरथेन सा । ययौ सभरतामात्या प्रति रामं कृतत्वरा ॥ ५१० ॥
कैकेयीभरतौ षड्भिः प्रापतुस्तद्वनं दिनैः । अपश्यतां द्रुमूले च जानकीरामलक्ष्मणान् ॥ ५११ ॥
रथादुत्तीर्य कैकेयी वत्स वत्सेति भाषिणी । प्रणमन्तं रामभद्रं चुचुम्बोपरि मूर्धनि ॥ ५१२ ॥
पादाब्जयोः प्रणमन्तौ वैदेहीलक्ष्मणावपि । आक्रम्योपरि बाहुभ्यां तारतारं रुरोद सा ॥ ५१३ ॥
भरतोऽपि नमश्चक्रे रामपादाब्जषट्पदः । प्रत्यपद्यत मूर्छां च मूर्छत्खेदमहाविषः ॥ ५१४ ॥
बोधितो रामभद्रेण विनयी भरतोऽवदत् । अभक्तमिव मां त्यक्त्वा कथमत्र त्वमागमः ॥ ५१५ ॥
राज्यार्थी भरत इति मातृदोषेण योऽभवत् । ममापवादो हर तमात्मना सह मां नयन् ॥ ५१६ ॥
निवृत्य यद्वायोध्यायां गत्वा राज्यश्रियं श्रय । कौलीनशल्यं मे भ्रातरेवमप्यपयास्यति ॥ ५१७ ॥
जगन्मित्रं हि सौमित्रिस्तवामात्यो भविष्यति । अयं जनः प्रतीहारः शत्रुघ्नस्त्वातपत्रभृत् ॥ ५१८ ॥
एवं ब्रुवाणे भरते कैकेय्यप्यब्रवीदिदम् । कुरु भ्रातृवचो वत्स सदासि मातृवत्सलः ॥ ५१९ ॥
अत्र न त्वत्पितुर्दोषो न दोषो भरतस्य च । कैकेय्या एव दोषोऽयं सुलभः स्त्रीस्वभावतः ॥ ५२० ॥
कौलट्यवर्जा ये केऽपि दोषाः स्त्रीणां पृथक् पृथक् । ते सर्वे कृतसंस्थाना मयि दोषखनाविव ॥ ५२१ ॥

१ मूर्छत् व्याप्तीभवत् खेद एव महाविषं यस्य सः । २ कुलनाशकं शल्यम् । ३ कुलटायाः कर्म कौलट्यं तद्वर्जाः ।

पत्यु सुतानां तन्मातृजनस्य च मया कृतम् । इद दु लाकर कर्म तत्सहस्व सुतोऽसि यत् ॥ ५२२ ॥
इत्यादि सांश्रु जल्पन्तीं तामूचे लक्ष्मणाग्रज । तातस्य सत्सुर्भूत्वाह प्रतिज्ञात त्यजामि किम् ॥ ५२३ ॥
तातेन दत्तमेतस्मै राज्य ह्यनुमत मया । अस्त्वन्यथा कथङ्कार वाम्द्वयोर्जीवतोरपि ॥ ५२४ ॥
तदस्तु भरतो राजा द्वयोरपि निदेशत । अस्यास्म्यहमनुल्लङ्घ्यो मम तात इवाम्बिके ॥ ५२५ ॥
इत्युक्त्वोत्थाय काकुत्स्थ सीतानीतजलै स्वयम् । राज्येऽभ्यषिञ्चद् भरत सर्वसामन्तसाक्षिकम् ॥ ५२६ ॥
राम प्रणम्य कैकेयीं सम्भाष्य भरत तथा । विससर्ज प्रतस्थे च ककुभं दक्षिणां प्रति ॥ ५२७ ॥
यथायथोध्या भरतस्तत्र चाखण्डशासन । उरीचक्रे राज्यभार पितुर्भ्रातुश्च शासनात् ॥ ५२८ ॥
महामुने सत्यभूते पार्श्वे दशरथोऽप्यथ । भूयसा परिवारेण सम दीक्षामुपाददे ॥ ५२९ ॥
स्वभ्रातृवनवासेन भरत शल्यितो हृदि । अर्हत्प्रोघतोऽखण्डराज्यं यामिकवत्सुधी ॥ ५३० ॥
सौमित्रिमैथिलसुतासहितोऽथ रामो गच्छन्नतीत्य गिरिमध्वनि चित्रकूटम् ।
आसादयत्कतिपयैर्दिवसैरवन्तिदेशैकदेशभवनिस्थितदेवदेश्य ॥ ५३१ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि
रामलक्ष्मणोत्पत्तिपरिणयनवनवासगमनो नाम चतुर्थ सर्ग ।

---

१ भक्तसहित यथा स्यात्तथा । २ दिवाम् ।

# ॥ अथ पञ्चमः सर्गः ॥

रामोऽथ विश्रमयितुं श्रान्तामध्वनि जानकीम् । वटस्य मूले न्यषदद् गुह्यकानामिवेश्वरः ॥ १ ॥
तं देशं सर्वतो वीक्ष्य रामः सौमित्रिमभ्यधात् । देशः कस्यापि भीत्यायमधुनैवोद्वसोऽभवत् ॥ २ ॥
अच्छुक्ककुल्यान्युद्यानानीक्षुवाटाश्च सेक्षवः । सान्नानि च खलान्याहुर्नूतनोद्वसतामिह ॥ ३ ॥
तदा च रामः पप्रच्छ गच्छन्तं जनमेककम् । किमुच्चचाल देशोऽयं क चासि चलितोऽनघ ॥ ४ ॥
सोऽप्यूचेऽवन्तिदेशोऽस्मि पुर्यवन्त्यां नरेश्वरः । अस्ति सिंहोदरो नाम सिंहवद् दुःसहो द्विषाम् ॥ ५ ॥
तस्य च प्रतिबद्धोऽस्ति विषयेऽस्मिन्महामतिः । सामन्तो वज्रकर्णाख्यो दशाङ्गपुरनायकः ॥ ६ ॥
स पापर्द्धयां गतोऽन्येद्युर्वनमध्ये महामुनिम् । कायोत्सर्गस्थमैक्षिष्ट नामतः प्रीतिवर्धनम् ॥ ७ ॥
किं तिष्ठसि द्रुम इवारण्येऽमुत्रेति तेन स । अनुयुक्तो मुनिरात्महितार्थमिति सोऽब्रवत् ॥ ८ ॥
भूयोऽप्यूचे वज्रकर्णः खाद्यपेयादिवर्जिते । अत्र सम्पद्यतेऽरण्ये किं नामात्महितं तव ॥ ९ ॥
तं च योग्यं मुनिर्ज्ञात्वा धर्ममात्महितं जगौ । श्रावकत्वं सोऽपि सद्यः प्रपेदे तत्पुरः सुधीः ॥ १० ॥
विना च देवमर्हन्तं विना साधूंश्च नापरम् । नंस्यामीति तदग्रे स जग्राहाभिग्रहं दृढम् ॥ ११ ॥
ततश्च तं मु वन्दित्वागादृशाङ्गपुरं पुरम् । पालयन् श्रावकत्वं च चिन्तयामासिवानिदम् ॥ १२ ॥

१ निर्जन. । २ अधीनः । ३ मृगयायाम् ।

नमस्कार्यो मया नान्य इति तावदभिग्रह । सिंहोदरस्य मे वैरी भविष्यत्यनमस्कृत ॥ १३ ॥
एव विमृश्योत्प्रतिम स्वाङ्गुलीये मणीमयीम् । मुनिसुव्रतनाथस्य प्रतिमा सन्न्यवीविशत् ॥ १४ ॥
तद्बिम्ब स्वाङ्गुलीयस्थ नमन् वञ्चयते स्म स । सिंहोदर नरपतिं मायोपायो बलीयसि ॥ १५ ॥
त वज्रकर्णवृत्तान्त सिंहोदरमहीपते । आचचक्षे खल कोऽपि खला सर्वङ्कषा खलु ॥ १६ ॥
तथ सिंहोदरोऽकुप्यन्महाहिरिव नि श्वसन् । वज्रकर्णाय तत्कोप कोऽप्यागत्य शशस च ॥ १७ ॥
तस्य कोपो मयि कथ त्वया ज्ञात इति स्फुटम् । वज्रकर्णेन पृष्ट समाचख्यौ स पुमानिति ॥ १८ ॥
पुरे कुन्दपुरे श्राद्ध समुद्रसङ्गमो वणिक् । यमुना नाम तत्पत्नी विद्युदङ्गोऽस्मि तत्सुत ॥ १९ ॥
क्रमाच्च यौवन प्राप्तो भाण्डमादाय चागमम् । उज्जयिन्यामह पुर्यां क्रयविक्रयहेतवे ॥ २० ॥
तत्र कामलता नाम्नापश्य वेश्यां मृगीदृशम् । सद्यश्च कामबाणानामभूवमहमास्पदम् ॥ २१ ॥
निशामेकां वसामीति तया कृतसमागम । दृढ रागेण बद्धोऽह मृगो वागुरया यथा ॥ २२ ॥
आजन्म कष्टेन धन यन्मत्पित्रार्जित बहु । तल्लेशेन मया तत्तु षड्भिर्मासैर्विनाशितम् ॥ २३ ॥
सिंहोदरमहिष्या श्रीधराया ये हि कुण्डले । तादृशे देहि मह्य त्वमित्यूचे सान्यदा तु माम् ॥ २४ ॥
न मेऽ कश्चिदप्यस्ति ते एवापहराम्यहम् । इति रात्रौ साहसिक खात्रेणागां नृपौकसि ॥ २५ ॥
सिंहोदर श्रीधरेति पृच्छन्ती शुश्रुवे मया । नाथोद्विग्न इवेदानीं निद्रा न लभसे कथम् ॥ २६ ॥

---

१ उत्पन्ना प्रतिमा बुद्धिर्यस्य सः । २ माया कपटमेवोपाय । ३ सर्वं कषति नाशयतीति सर्वङ्कषा क्षुरिकातुल्या इत्यर्थः । ४ पाशेन । ५ क्षेत्रपातेन ।

सिंहोदरोऽवददेवि तावन्निद्रा कुतो मम । प्रणामविमुखो यावद्वज्रकर्णो न मार्यते ॥ २७ ॥
अमुं प्रातर्हनिष्यामि ससुहृत्पुत्रबान्धवम् । यात्वियं रजनी तावद्विनिद्रस्यापि मे प्रिये ॥ २८ ॥
तदाकर्ण्य तवाख्यातुं त्यक्तकुण्डलचौरिकः । त्वां साधर्मिकवात्सल्यादिह त्वरितमागमम् ॥ २९ ॥
वज्रकर्णस्तदाकर्ण्य पुरीं तृणकणाधिकाम् । सद्यो व्यधत्तापश्यच्च परचक्ररजोऽम्बरे ॥ ३० ॥
क्षणाच्चावेष्टयत्त सिंहोदरेण प्रबलैर्बलैः । तद्दशाङ्गपुरं विष्वक् चन्दनद्रुरिवाहिभिः ॥ ३१ ॥
सिंहोदरोऽथ दूतेन वज्रकर्णमदोऽवदत् । प्रणाममायया मायिन् वञ्चितोऽस्मि त्वया चिरम् ॥ ३२ ॥
विना तेनाङ्गुलीयेन मामागत्य नमस्कुरु । अन्यथा सकुटुम्बस्त्वं यमवेश्माद्य यास्यसि ॥ ३३ ॥
प्रत्यूचे वज्रकर्णोऽपि मम ह्ययमभिग्रहः । विनार्हन्तं विना साधुं प्रणमाम्यपरं न हि ॥ ३४ ॥
न पौरुषाभिमानोऽत्र किं तु धर्माभिमानिता । नमस्कारं विना सर्वं ममादत्स्व यथारुचि ॥ ३५ ॥
धर्मद्वारं देहि मह्यं यथा धर्माय कुत्रचित् । अहमन्यत्र गच्छामि धर्म एवास्तु मे धनम् ॥ ३६ ॥
इत्युक्ते वज्रकर्णेन न हि तत्प्रत्यपादि सः । जातु धर्ममधर्मं वा गणयन्ति न मानिनः ॥ ३७ ॥
पुरं सवज्रकर्णं तद्रुध्वा सिंहोदरो बहिः । स्थितोऽस्ति मुष्णन् देशश्च तत्प्रयादयमुद्दसः ॥ ३८ ॥
अहं च सकुटुम्बोऽपि नष्टोऽस्मिन् राजविग्रहे । दग्धान्यत्राद्य सौधानि जीर्णा सा च कुटी मम ॥ ३९ ॥
शून्येभ्य इभ्यवेश्मभ्यो वेश्मोपकरणान्यहम् । आनेतुं क्रूरगेहिन्या प्रेषितो यामि तन्मुखः ॥ ४० ॥
तस्या दुर्वचसोऽप्येतत्फलं शुभमभून्मम । यन्मया देवकल्पस्त्वं दृष्टो दैववशादसि ॥ ४१ ॥

---

१ गृहाण । २ देवसदृशः ।

एवमुक्तवतस्तस्य दरिद्रस्य रघूद्वह । रत्नस्वर्णमय प्रादच्च करुणानिधि ॥ ४२ ॥
त विसृज्य ततो रामो दशाङ्गपुरमीयिवान् । चन्द्रप्रभ वहिश्चैत्ये नत्वा तत्राप्यवास्थित ॥ ४३ ॥
रामादेशान सौमित्रिस्तत्प्रविश्य क्षणात् पुरम् । वज्रकर्णान्तिकेऽगच्छद्लक्ष्याणा ह्यसौ स्थिति ॥ ४४ ॥
वज्रकर्ण सदाकार ज्ञात्वा त नरमुत्तमम् । ऊचे महाभाग भव भोजनातिथ्यभाग् मम ॥ ४५ ॥
रामानुजोऽप्यभिदधे सकलत्रो मम प्रभु । स्थितोऽस्ति वहिरुद्याने तमादौ भोजयाम्यहम् ॥ ४६ ॥
तत सौमित्रिणा सार्ध वज्रकर्णो महीपति । भूयिष्ठव्यञ्जन भोज्यमुपराममनाययत् ॥ ४७ ॥
भुक्तोत्तरे चानुशिष्य रामेण प्रेपितो ययौ । लक्ष्मणोऽवन्तिनृपति जगादति च सौष्ठवी ॥ ४८ ॥
राजा दाशरथिर्दासीकृताशेषमहीपति । विरोध वज्रकर्णेन भरतस्ते निषेधति ॥ ४९ ॥
सिंहोदरोऽपि प्रत्यूचे भृत्यानां भरतोऽपि हि । भक्तानामेव कुरुते प्रसाद नान्यथा पुन ॥ ५० ॥
अय पुनर्वज्रकर्णो मत्सामन्तो दुराशय । न मां नमति तेनास्य प्रसीदामि कथ वद ॥ ५१ ॥
भूयोऽपि लक्ष्मणोऽवोचन्नासावविनयी त्वयि । अस्याप्रणामस्त्वेषा हि जज्ञे धर्मानुरोधत ॥ ५२ ॥
मा कुप्यो वज्रकर्णोऽय मान्य भरतशासनम् । आसमुद्रान्तमेदिन्या भरत शासिता यत ॥ ५३ ॥
क्रुद्ध सिंहोदर स्माह को नाम भरतो नृप । यो वज्रकर्णगृह्य सन् वातुलो मा वदत्यद ॥ ५४ ॥
कोपारुणाक्ष सौमित्रि स्फुरदोष्ठदलोऽवदत् । रे न जानासि भरत ज्ञापयाम्येष मद्भुतम् ॥ ५५ ॥
उत्तिष्ठस्व युधे सर्वात्मना सवर्मितो भव । न भवस्येप गोधेव मद्भुजाशनिताडित ॥ ५६ ॥

---

१ बहुतराणि शाकानि यस्मिस्तत् । २ प्रापयत् । ३ सौष्ठव भव्यत्वमस्यास्तीति । ४ प्रणामाकरणे प्रतिज्ञा । ५ वज्रकर्णस्य पक्षपाती ।

सिंहोदरः ससैन्योऽथ सौमित्रिं हन्तुमुद्यतः । बालः परिस्प्रष्टुमिव भस्मच्छन्नं हुताशनम् ॥ ५७ ॥
लक्ष्मणोऽपि गजालानं भुजेनोन्मूल्य नालवत् । विद्विषस्ताडयामासोदस्तदण्ड इवान्तकः ॥ ५८ ॥
अथ सौमित्रिरुत्पत्य सिंहोदरमिभस्थितम् । तद्वाससा पशुमिवाबध्नात् कण्ठे महाभुजः ॥ ५९ ॥
आश्चर्यं पश्यतां तत्र दशाङ्गपुरवासिनाम् । तं निन्ये गामिवाकृष्य लक्ष्मणो रामसन्निधौ ॥ ६० ॥
दृष्ट्वा सिंहोदरो रामं नत्वा चेदमभाषत । न ज्ञातस्त्वमिहायातो मया रघुकुलोद्वह ॥ ६१ ॥
अथवा किमिदं देव मत्परीक्षाकृते कृतम् । कृतं नः ज्ञापितेनापि यूयं छलपरा यदि ॥ ६२ ॥
क्षमस्वाज्ञानदोषं मे यत्कर्तव्यं तदादिश । भृत्ये कोपः शिक्षामात्रकृते शिष्ये गुरोरिव ॥ ६३ ॥
सन्धेहि वज्रकर्णेनेत्यादिशत्तं रघूद्वहः । सिंहोदरोऽपि तां वाचं तथेति प्रत्यपद्यत ॥ ६४ ॥
तत्रागाद्वज्रकर्णोऽपि रामभद्रस्य शासनात् । विनयेन पुरोभूय कृताञ्जलिरुवाच च ॥ ६५ ॥
स्वामिनौ वृषभस्वामिवंशजौ रामशार्ङ्गिणौ । युवां दृष्टौ मया दिष्ट्या किं तु ज्ञातौ चिरादिह ॥ ६६ ॥
भरतार्धस्य सर्वस्य युवां नाथौ महाभुजौ । अहमन्ये च राजानो युवयोरेव किङ्कराः ॥ ६७ ॥
मुञ्चैनं मत्प्रभुं नाथ शाधि चैनमतः परम् । यथासौ सहते मेऽन्यप्रणामाभिग्रहं सदा ॥ ६८ ॥
विनार्हन्तं विना साधुं नमस्यो नापरो मया । इति ह्यभिग्रहोऽग्राहि महर्षेः प्रीतिवर्धनात् ॥ ६९ ॥
रामभ्रूसङ्ज्ञया सिंहोदरस्तत्प्रत्यपद्यत । सौमित्रिणा विमुक्तः सन् वज्रकर्णं च सस्वजे ॥ ७० ॥
सिंहोदरोऽपि परया प्रीत्या राघवसाक्षिकम् । राज्यार्धं वज्रकर्णाय सोदरायेव दत्तवान् ॥ ७१ ॥

---

१ गजबन्धनस्तम्भं । २ ऊर्ध्वीकृत दण्ड. । ३ शिक्षां देहि ।

श्रीधराकुण्डले ते च याचित्वावन्तिपार्थिवात् । अदच विद्युदङ्गाय दशाङ्गपुरपार्थिव ॥ ७२ ॥
सौमित्रये वज्रकर्णो ददावष्टौ स्वकन्यका । सिंहोदर ससामन्त पुन कन्याशतत्रयम् ॥ ७३ ॥
अथोचे लक्ष्मण कन्या पार्श्वे व सन्तु सम्प्रति । भ्राता नो भरतो राज्ये यत पित्रा निवेशित ॥७४॥
समयेऽङ्गीकृतराज्य परिणेष्यामि व सुता । इदानीं तु वय गत्वा स्थास्यामो मलयाचले ॥ ७५ ॥
ओमित्युक्त्वा स्थितौ वज्रकर्णसिंहोदरौ नृपौ । विसृष्टौ रामभद्रेणेयतुर्निजनिज पुरम् ॥ ७६ ॥
रामस्तत्र निशा नीत्वा ससीतालक्ष्मण प्रगे । गच्छन् क्रमेण सम्प्राप देश कमपि निर्जलम् ॥ ७७ ॥
पिपासितायां सीतायां विश्रान्तायां तरोस्तले । रामाज्ञयाथ सौमित्रिर्जलमानेतुमभ्यगात् ॥ ७८ ॥
गच्छन् सरो ददर्शैकमनेकाम्भोजमण्डितम् । दूरादानन्दजनन वयस्यमिव वल्लभम् ॥ ७९ ॥
तदा च क्रीडितु तत्रागात् कूबरपुराधिभू । नृप कल्याणमालाख्य प्रेक्षाञ्चक्रे च लक्ष्मणम् ॥ ८० ॥
[illegible] कामबाणे सद्योऽपि बिभिदे भिदुरात्मके । नत्वा लक्ष्मणमूचे च भव मे भोजनातिथि ॥ ८१ ॥
विकार मान्मथ देहलक्षणानि च लक्ष्मण । निरीक्ष्य दध्यौ नार्येषा पुवेषा कारणेन तु ॥ ८२ ॥
ध्यात्वेत्युवाच सौमित्रि समार्योऽस्ति मम प्रभु । इतश्चादूरदेशेऽस्मिन् भुञ्जे तेन विना न हि ॥ ८३ ॥
तेन प्रधानपुरुषैर्भद्राकारै प्रियम्वदै । तत्रानिन्ये समभ्यर्थ्य ससीतोऽपि रघूद्वह ॥ ८४ ॥
सोऽन्नमस्यद्रामभद्र मद्रघीमैंथिलीमपि । तयो कृते पटकुटीं तत्काल च न्यवेशयत् ॥ ८५ ॥
तत्र राम कृतस्नानभोजन स उपाययौ । सहैकमन्त्रिणा युक्त स्त्रीवेशो नि परिच्छद ॥ ८६ ॥

१ अधिभू राजा । २ भेदनशील आत्मा येषां तैः । ३ कूबरपतिः । ४ वस्त्रगृहम्, तम्बु इति लोके ।

लज्जानतमुखीं तां च निजगादेति राघवः । भद्र पुरुषवेषेण स्त्रीभावं निह्नुषे कुतः ॥ ८७ ॥
ऊचेऽथ कूवरपतिः कूवरेऽस्मिन् महापुरे । वालिखिल्यो नाम राजा पृथ्वीनामास्य तु प्रिया ॥ ८८ ॥
आपन्नसत्वा सा जज्ञेऽन्येद्युर्म्लेच्छैर्महाभटैः । अवस्कन्दागतैर्निन्ये वालिखिल्यो नियम्य सः ॥ ८९ ॥
पश्चाच्च पृथिवी देवी तनयां मामसूत सा । पुत्रोऽजनीति चाघोषि सचिवेन सुबुद्धिना ॥ ९० ॥
तज्ज्ञापितः पुत्रजन्म प्रभुः सिंहोदरोऽवदत् । तत्र राजास्तु बालोऽयं वालखिल्यागमावधि ॥ ९१ ॥
क्रमेण वर्धमानाहं मूलात् पुंवेषधारिणी । मातृमन्त्रिजनं मुक्त्वापरैरनुपलक्षिता ॥ ९२ ॥
राज्यं करोमि कल्याणमालाख्या प्रथिता सती । मन्त्रिणां मन्त्रसामर्थ्यात् स्यादलीकेऽपि सत्यता ॥ ९३ ॥
म्लेच्छानां भूरि यच्छामि द्रविणं पितृमुक्तये । द्रव्यमेते तु गृह्णन्ति मुञ्चन्ति पितरं न तु ॥ ९४ ॥
तत्प्रसीदत मे तातं तेभ्यो मोचयताधुना । सिंहोदरान्मोचितः प्राग्वज्रकर्णो नृपो यथा ॥ ९५ ॥
रामोऽप्युवाच पुंवेषैव स्वराज्यं प्रशासती । यावद्गत्वा मोचयामो म्लेच्छेभ्यः पितरं तव ॥ ९६ ॥
महाप्रसाद इत्यूचे सा स्त्री पुंवेषधारिणी । ऊचे सुबुद्धिमन्त्री तु लक्ष्मणोऽस्या वरोऽस्त्विति ॥ ९७ ॥
राघवोऽप्यब्रवीत्तातादेशाद्देशान्तरं वयम् । यास्यामोऽथ निवृत्तेषु लक्ष्मणः परिणेष्यति ॥ ९८ ॥
प्रतिपद्येति काकुत्स्थस्तस्थौ तत्र दिनत्रयम् । निशाशेषे सुप्तजने ससीतालक्ष्मणो ययौ ॥ ९९ ॥
सापि प्रातरपश्यन्ती जानकीरामलक्ष्मणान् । विमनाः स्वं पुरमगाच्चक्रे राज्यं तथैव तु ॥ १०० ॥
प्राप क्रमेण रामोऽपि नर्मदामुत्ततार च । पथिकैर्वार्यमाणोऽपि विन्ध्याटव्यां विवेश च ॥ १०१ ॥

१ युद्धागतैः । २ बद्ध्वा । ३ शासनं कुर्वती सती तिष्ठेत्यध्याहार्यम् ।

तत्रादौ दक्षिणदिशि कण्टकिद्रुस्थितो द्विक । रराष विरस क्षीरद्रुस्थोऽन्यो मधुर पुन ॥ १०२ ॥
न विषादो न वा हर्षोऽभूद्रामस्य तथापि हि । शकुन चाशकुनं च गणयन्ति हि दुर्बला ॥ १०३
गच्छन् ददर्श चागच्छन्म्लेच्छसैन्यमुद्रायुधम् । असहृग्यमरस्याधीय दक्षघाताय निर्गतम् ॥ १०४ ॥
युवा सेनापतिस्तत्र दृष्ट्वा सीता स्मरातुर । स्वच्छन्दवृत्ति स्वान् म्लेच्छानुधकैरेवमादिशत् ॥ १०५ ॥
अरे रे पथिकावेतौ नाशयित्वा विनाश्य वा । एता बलस्त्रिय हृत्वा समानयत मत्कृते ॥ १०६ ॥
इत्युक्ता सह तेनैवाधावन्त प्रति राघवम् । प्रहरन्त शरप्रासप्रायै प्रहरणै क्षिते ॥ १०७ ॥
उवाच लक्ष्मणो राम तिष्ठार्येह सहार्यया । अमून् स्तुन इव म्लेच्छान् यावद्विद्रावयाम्यहम् ॥ १०८ ॥
इत्युक्त्वा लक्ष्मणोऽधिज्य कृत्वा धनुरनादयत् । तन्नादाधात्रसन्म्लेच्छा सिंहनादादिव द्विपा ॥ १०९ ॥
असयध्यापनावोऽपि शरमोक्षोऽस्ति दूरत । इत्य विमृश्य स म्लेच्छराजो रामस्रुपाययौ ॥ ११० ॥
पिशुकफलको दीनास्य स्यन्दनादवतीर्य स । रामभद्र नमश्चक्र कृपा सौमित्रिणेक्षित ॥ १११ ॥
सोऽथोचदेव कौशाम्ब्या पुर्यां वैश्वानरो द्विज । सावित्री नाम तत्पत्नी रुद्रदेवोऽस्मि तत्सुत ॥ ११२ ॥
आजन्म क्रूरकर्मत्वात्तस्कर पारदारिक । न तत्किमपि कर्मास्ति यत्पापो नाचराम्यहम् ॥ ११३ ॥
अथैकदा खात्रमुखे प्राप्तोऽहं राजपूरुषै । शूलां समारोपयितु नीतश्च नृपशासनात् ॥ ११४ ॥
उपशूल च दीनोऽहमुपशूलमिव स्थित । दृष्ट श्रावकवणिजा दत्त्वा दण्ड च मोचित ॥ ११५ ॥
मा कार्षीश्चौरिकां भूय इत्युदीर्य महात्मना । विसृष्टो वणिजा तेन त देश त्यक्तवानहम् ॥ ११६ ॥

---

१ काक । २ कठोरम् । ३ तीक्ष्णै । ४ परस्त्रीरत । ५ प्राणिवधस्थानसमीपम् । ६ अज ।

भ्रमन्नागामिमां पल्लीं काक इत्याख्ययान्यया । इह ख्यातः क्रमात्पल्लीपतित्वमिदमासदम् ॥ ११७ ॥
इह स्थितश्च लुण्टाकैर्लुण्टयामि पुरादिकम् । आनयामि स्वयं गत्वा बन्दे धृत्वा नृपानपि ॥ ११८ ॥
वश्योऽस्मि व्यन्तर इव तव स्वामिन् समादिश । किङ्करः किं करोम्येष सहस्वाविनयं मम ॥ ११९ ॥
वालिखिल्यं विमुञ्चेति रामेणोक्तः किरातराट् । तं मुमोच नमश्चक्रे वालिखिल्योऽपि राघवम् ॥ १२० ॥
रामाज्ञया च काकेन स निन्ये कूबरं पुनः । कल्याणमालां पुंवेषामपश्यच्च सुतां निजाम् ॥ १२१ ॥
रामलक्ष्मणवृत्तान्तं मिथोऽकथयतां च तौ । कल्याणमालिकावालिखिल्यावखिलमप्यथ ॥ १२२ ॥
काकोऽपि स्वां ययौ पल्लिं ततो रामोऽपि निर्गतः । विन्ध्याटवीमतिक्रम्य प्राप तापीं महानदीम् ॥१२३॥
तापीमुत्तीर्य च क्रामंस्तद्देशप्रान्तवर्तिनम् । अरुणग्रामनामानं रामो ग्राममथासदत् ॥ १२४ ॥
पिपासितायां सीतायां तत्र रामः सलक्ष्मणः । गृहे ययौ कोपनस्य कपिलस्याग्निहोत्रिणः ॥ १२५ ॥
ब्राह्मणी च सुशर्माख्या तेभ्योऽदात् पृथगासनम् । स्वयं च पाययामास सलिलं स्वादु शीतलम् ॥ १२६ ॥
आगात्तदा च कपिलः पिशाच इव दारुणः । निरीक्ष्य चोपविष्टांस्तान् रुष्टोऽभाषिष्ट गेहिनीम् ॥ १२७ ॥
मलिनानां किमेतेषां प्रवेशो मम वेश्मनि । पापीयसि त्वया दत्तो ऽग्निहोत्रमशुचीकृतम् ॥ १२८ ॥
एवमाक्रोशिनं विप्रं क्रूरं रामानुजः क्रुधा । करीवारमतोद्धृत्य परिभ्रमयितुं दिवि ॥ १२९ ॥
रामोऽप्युवाच को नाम कोपोऽस्मिन् कीटमात्रके । द्विजब्रुवं विमुञ्चन्तमप्यमुं मुञ्च मानद ॥ १३० ॥
रामाज्ञया च सौमित्रिस्तं मुमोच शनैर्द्विजम् । ससीतालक्ष्मणो रामो निर्जगाम च तद्गृहात् ॥ १३१ ॥

---

१ कोपवतः । २ अधमब्राह्मणम् ।

ते गच्छन्त क्रमात्प्रापुररण्यमपर महत् । कज्जलश्यामबलद कालश्च समुपाययौ ॥ १३२ ॥
वर्षत्यब्दे च काकुत्स्थस्तस्थौ वटतरोरध । वर्षाकाल वटेऽत्रैव नयाम इति चावदत् ॥ १३३ ॥
आकर्ण्य तद्वचो भीतस्तन्न्यग्रोधाधिदैवतम् । इभकर्णाभिधो यक्षो गोकर्णं स्वप्रभु ययौ ॥ १३४ ॥
त प्रणम्यत्यभाषिष्ट स्वामिन्नुद्वासितस्तत । केऽपिद्दु सहतेजोभिर्निवासाद्वटाददहम् ॥ १३५ ॥
तत्कुरुष्व परित्राणमत्राणस्य मम प्रभो । ते हि स्थास्यन्ति सकला प्रावृष मद्वटद्रुमे ॥ १३६ ॥
गोकर्णोऽप्यवधिं ज्ञात्वा जस्यावेति विचक्षण । अप्यावितो गृहायातावष्टमौ रामशार्ङ्गिणौ ॥ १३७ ॥
इत्युक्त्वा निशि तत्रैत्य नवयोजनविस्तृताम् । द्वादशयोजनायामां धनधान्यादिपूरिताम् ॥ १३८ ॥
उत्तुङ्गवप्रप्रासादा माण्डपूर्णापणावलिम् । पुरीं रामपुरीं नामाकृत रामाय सोऽमर ॥ १३९ ॥
॥ युग्मम् ॥
प्रातर्मङ्गल्य देन प्रबुद्धो राम ऐक्षत । त वीणाधारिणं यक्ष महर्द्धिनगरीं च ताम् ॥ १४० ॥
सोऽवोचद्विस्मित राम स्वामी त्वमतिथिश्च मे । गोकर्णो नाम यक्षोऽहमकार्षं त्वत्कृते पुरीम् ॥ १४१ ॥
मया सपरिवारेण सेव्यमानो दिवानिशम् । इह तिष्ठ सुख स्वामिन् यथकाल यथारुचि ॥ १४२ ॥
इति तेनार्थितो रामो यक्षपुम्भिर्निषेवित । अवतस्थे सुख तत्र सीतासौमित्रिसयुत ॥ १४३ ॥
इतश्च विप्र कपिल समिदादिकृतेऽन्यदा । भ्रमस्तस्मिन्महारण्ये पर्शुपाणि समाययौ ॥ १४४ ॥
स ददर्श पुरीं ता च दध्यौ चेतसि विस्मयात् । मायेयमिन्द्रजाल वा गान्धर्वमथवा पुरम् ॥ १४५ ॥

---

१. तद्वटस्याधिदैवत देवता ।

तत्रैकां मानुषीरूपां चारुनेपथ्यवाससम् । सोऽपृच्छद्यक्षिणीं दृष्ट्वा कस्येयं नूतना पुरी ॥ १४६ ॥
सोचे गोकर्णयक्षेण कृतेयं नूतना पुरी । नाम्ना रामपुरी रामसीतासौमित्रिहेतवे ॥ १४७ ॥
दीनादिभ्यो ददात्यर्थमत्र रामो दयानिधिः । सर्वः कृतार्थीभूतोऽत्र यो यो दुःस्थः समाययौ ॥ १४८ ॥
त्यक्त्वा सोऽपि समिद्भारं पतित्वा तत्पदाब्जयोः । ऊचे मया कथं रामो द्रष्टव्यः शंस मेऽनघे ॥ १४९ ॥
साप्यवादीदत्र पुर्यामस्ति द्वारचतुष्टयम् । नित्यं च रक्ष्यते यक्षैः प्रवेशोऽत्र दुर्लभः ॥ १५० ॥
पूर्वद्वारेऽत्र यच्चैत्य तद्वन्दित्वा यथाविधि । श्रावकीभूय चेद्यासि प्रवेशं लभसे तदा ॥ १५१ ॥
तद्गिरा कपिलोऽर्थार्थी साधूनामन्तिके ययौ । अभ्यवन्दत तान् साधून् धर्मं तेभ्योऽशृणोच्च सः ॥ १५२ ॥
तत स लघुकर्मत्वाद्विशुद्धः श्रावकोऽभवत् । गत्वौको धर्ममाख्याय भार्यां च श्राविकां व्यधात् ॥ १५३ ॥
आजन्म दौस्थ्यदग्धौ तौ रामादर्थयितुं धनम् । उपेयतू रामपुरीं तत्र चैत्यं प्रणेमतुः ॥ १५४ ॥
राजवेश्म प्रविश्याथ मैथिलीरामलक्ष्मणान् । उपलक्ष्य बिभायोद्वेदं ताक्रोशान् द्विजः स्मरन् ॥ १५५ ॥
तं नंष्टुमनसं सानुक्रोश सौमित्रिरब्रवीत् । मा भैषीर्भो द्विजार्थी चेदेह्यर्थं प्रार्थयस्व तत् ॥ १५६ ॥
ततोऽपशङ्कः कपिलो गत्वा रामाय चाशिषम् । दत्त्वोपाविशदग्रे च गुह्यकैरर्पितासने ॥ १५७ ॥
कुतस्त्वमागतोऽसीति पृष्टो रामेण सोऽवदत् । किं मां न वेत्सि त्र विप्रमरुण्ग्रामवासिनम् ॥ १५८ ॥
यूयं येनातिथीभूता अपि दुर्वचसा मया । आक्रुष्टा मोचितोऽस्म्यस्माद्युष्माभिश्च कृपापरैः ॥ १५९ ॥
सुशर्मा ब्राह्मणी सापि प्राग्वृत्ताख्यानपूर्वकम् । गत्वोपसीतं दीनास्या प्रदत्ताशीरुपाविशत् ॥ १६० ॥

---

१ दुःखी । २ धनार्थी । ३ गृहम् । ४ दयासहितः । ५ द्विजेति सम्बोधनम् । ६ सीतायाः समीपम् ।

तत स विप्रो द्रविणै कृतार्थीकृत्य भूरिभि । राघवेण विसृष्ट सन् स्वग्राममगमद् पुन ॥ १६१ ॥
प्रबुद्धो ब्राह्मण सो पि दत्वा दान यथारुचि । नन्दावतसमूरीणामन्तिके व्रतमग्रहीत् ॥ १६२ ॥
अथ प्रावृष्यतीताया यियासु श्रेय राघवम् । गोकर्णयक्षो विनयादवमूचे कृताञ्जलि॰ ॥ १६३ ॥
यद्यतो यास्यसि स्वामिंस्तत्प्रसीद क्षमस्व मे । यद्भक्तिस्खलित किञ्चिन्मनागप्यभवत्त्वयि ॥ १६४ ॥
त्वदानुरूपा क पूजां कर्तुमीशो महाभुज । इत्युक्त्वादच रामाय हार नाम्ना स्वयम्प्रभम् ॥ १६५ ॥
सौमित्रये च ताडङ्क दिव्यरत्नविनिर्मिते । चूडामणि च सीतायै वीणा चेप्सितनादिनीम् ॥ १६६ ॥
रामोऽनुमान्य त यक्ष प्रतस्थे स्वेच्छया तत । ता पुरीमुपसञ्जह्रे सोऽपि यक्ष स्वय कृताम् ॥ १६७ ॥
ते क्रामन्त प्रतिदिन जानकीरामलक्ष्मणा । त्यक्त्वारण्यानि विजयपुर स न्याक्षणे ययु ॥ १६८ ॥
तस्मिंश्च बहिरुद्याने मकरध्वजि महीयस । तले न्यग्रोधवृक्षस्य तेऽवात्सुर्वेश्मसन्निभे ॥ १६९ ॥
पुरे च तस्मिन्नभवद्राजा नाम्ना महीधर । इन्द्राणी नाम तत्पत्नी वनमालेति तत्सुता ॥ १७० ॥
वनमाला च बाल्येऽपि सौमित्रेर्गुणसम्पदम् । रूप चाकर्ण्य त श्रुत्वा नान्य वरमियेष सा ॥ १७१ ॥
तदा प्रव्रजित श्रुत्वा नृप दशरथ तथा । निर्गतौ रामसौमित्री विषण्णोऽभू महीधर ॥ १७२ ॥
अदत्त चन्द्रनगरे वृषभश्रापत्य मले । नाम्ना सुरेन्द्ररूपाय वनमाला महीधर ॥ १७३ ॥
वनमालापि तच्छ्रुत्वा मरणे कृतनिश्चया । तस्यां निश्येकिका दैवात्तदुद्यानमुपाययौ ॥ १७४ ॥
प्रविश्य तत्रायतनेऽपूजयद्वनदेवताम् । जन्मान्तरेऽपि सौमित्रि पतिर्मेऽस्त्वित्युवाच च ॥ १७५ ॥

---

१ वृषभनृपस्य पुत्राय ।

ययौ च सा तं न्यग्रोधं ददृशे लक्ष्मणेन च । प्रसुप्तजानकीरामयामिकेन प्रजाग्रता ॥ १७६ ॥
इदं च दध्यौ सौमित्रिः किमियं वनदेवता । अधिष्ठात्री वटतरोरस्य वा कापि यक्षिणी ॥ १७७ ॥
एवं चिन्तयतस्तस्य साध्यारोहद्वटद्रुमम् । करिष्यति किमेषेति लक्ष्मणोऽप्यारुरोह तम् ॥ १७८ ॥
सा प्रोचे प्राञ्जलिर्भूत्वा मातरो वनदेवताः । दिग्देव्यो व्योमदेव्यश्च सर्वाः शृणुत मद्वचः ॥ १७९ ॥
नाभूदिह भवे तावन्मम भर्ता स लक्ष्मणः । भूयाद्भवान्तरे तर्हि भक्तिस्तत्र ममास्ति चेत् ॥ १८० ॥
इत्युदित्वा कण्ठपाशं विधायोत्तरवाससा । बद्ध्वा च वटशाखायां द्राक् सात्मानमलम्बयत् ॥ १८१ ॥
भद्रे मा साहसं कार्षीर्लक्ष्मणोऽहमिति ब्रुवन् । लक्ष्मणोऽपास्य तत्पाशं तामादायोत्ततार च ॥ १८२ ॥
प्रबुद्धयोर्निशाशेषे लक्ष्मणो रामसीतयोः । शशंस वनमालाया वृत्तान्तं तमशेषतः ॥ १८३ ॥
ह्रियावगुण्ठितमुखी वनमालापि तत्क्षणम् । जानकीरामचरणारविन्देभ्यो नमोऽकरोत् ॥ १८४ ॥
इतोऽपि च तदैन्द्राणी महीधरनृपप्रिया । वनमालामपश्यन्ती पूच्चक्रे करुणस्वरम् ॥ १८५ ॥
वनमालान्वेषणाय निर्ययौ च महीधरः । इतस्ततः परिभ्राम्यंस्तत्रस्थां च ददर्श ताम् ॥ १८६ ॥
हत हत तान् कुमारीतस्करानिति भाषिषु । उद्वेषु च सैन्येषूत्तस्थौ रामानुजः क्रुधा ॥ १८७ ॥
धनुष्यारोपयामास स ज्यां भाल इव भ्रुवम् । अकारयच्च टङ्कारं वैरिहङ्कारहारकम् ॥ १८८ ॥
चुक्षुभुस्तत्रसुः पेतुस्तद्धनुर्ध्वनिना परे । महीधरः पुरः स्थित्वा सौमित्रिं स्वयमैक्षत ॥ १८९ ॥
उपलक्ष्य ततोऽवादीज्ज्यामुत्तारय धन्वनः । सौमित्रे मत्सुतापुण्यैरिष्यमाणस्त्वमागतः ॥ १९० ॥

उत्तारितज्ये सौमित्रौ सुस्थित स महीधर । प्रेक्ष्य राम नमश्चक्रज्वतीर्य स्यन्दनोत्तमात् ॥ १९१ ॥
उवाच च तव भ्रात्रऽनुप्मै सौमित्रये मया । स्वय जातानुरागेति कल्पितेय पुराप्यभूत् ॥ १९२ ॥
इदानीमनयो हे मद्भाग्यन समागम । जामाता लक्ष्मणस्त्व च सम्बन्धी दुर्लभ खलु ॥ १९३ ॥
इत्युदित्वा महत्या च प्रतिपत्त्या महीधर । निनाय जानकीरामलक्ष्मणान्निजसदनि ॥ १९४ ॥
तेषु तत्र च तिष्ठत्सु कदाचन समास्थितम् । एत्यातिवीर्यराड्दूतो नृपमूचे महीधरम् ॥ १९५ ॥
नन्द्यावर्तपुराधीशो तिवीर्यो वीर्यसागर । साहाय्यायाहृयति त्वा जाते भरतविग्रहे ॥ १९६ ॥
भूयासो भूभुजोऽम्येयुस्तस्य दाशरथेर्बले । त्वमप्यतिवीर्येणाहृयसे सुमहाबल ॥ १९७ ॥
अथैव लक्ष्मणोऽपृच्छन्नन्द्यावर्तमहीभुज । भरतस्याभुजा सार्धं किं विरोधनिबन्धनम् ॥ १९८ ॥
दूतोऽप्युवाच न स्वामी भरताद् भक्तिमिच्छति । स तु प्रतीच्छति न तामिद विग्रहकारणम् ॥ १९९ ॥
राम पप्रच्छ त दूतमतिवीर्यस्य सङ्गरे । समर्थो भरत किं भोस्तत्सेवां यत्र मन्यते ॥ २०० ॥
दूतोऽप्यूचे महावीर्योऽतिवीर्यस्तावदेष न । भरतोऽपि न सामान्यस्तद्वयो संशयो जये ॥ २०१ ॥
इत्युक्तवन्त त दूतमागच्छाम्यय सत्वरम् । इत्युक्त्वा व्यसृजद्राजा राम चैवममापत ॥ २०२ ॥
अहो अहस्त्वमेतस्यातिवी[१]स्याल्पमेघस । यदस्मानयमाहूय भरत योधयिष्यति ॥ २०३ ॥
तत्सवसेनया गत्वानुपलक्षितदौत्रदा । अमुमेव हनिष्यामो भारतादिव शासनात् ॥ २०४ ॥
ऊचे रामोऽत्र तिष्ठ त्व त्वत्सुतै सबलै सह । तत्राहमेव यास्यामि करिष्यामि यथोचितम् ॥ २०५ ॥

१ महातेन मनुचेन ।

एवमस्त्विति तेनोक्तस्तत्पुत्रबलसंयुतः । नन्द्यावर्तपुरं रामः ससीतालक्ष्मणो ययौ ॥ २०६ ॥
उषितं बहिरुद्याने रामं तत्क्षेत्रदेवता । अभाषत महाभाग किमभीष्टं करोमि ते ॥ २०७ ॥
न नः किमपि कर्तव्यमित्युक्ते राघवेण तु । साभ्यधादेवमेतद्धि तथाप्युपकरोम्यदः ॥ २०८ ॥
अतिवीर्यो जितः स्त्रीभिरिति तस्यायशस्कृते ससैन्यस्य करिष्यामि स्त्रीरूपं कामिकं तव ॥ २०९ ॥
स्त्रीराज्यमिव तत्सैन्य स्त्रीरूपमभवत्क्षणात् । स्त्रीरूपौ रामसौमित्री चाभूतां सुन्दराकृती ॥ २१० ॥
महीधरेण स्व सैन्यं तव साहाय्यहेतवे । प्रैषीदमिति रामस्तं द्वाःस्थेनाज्ञापयन्नृपम् ॥ २११ ॥
अतिवीर्योऽप्युवाचैवं स्वयं नागान्महीधरः । कृतं तदस्य सैन्येन मुमूर्षोर्विदुमानिनः ॥ २१२ ॥
जेष्याम्येकोऽपि भरतं सहायाः किं ममापि हि । निर्वास्यतां द्रुतमिदं तत्सैन्यमयशस्करम् ॥ २१३ ॥
अथान्यः कश्चिदप्युचे स्वयमागान्न केवलम् । स प्रत्युतोपहासाय स्त्रीसैन्यं प्राहिणोदिह ॥ २१४ ॥
तच्छ्रुत्वा सुमहाक्रोधं नन्द्यावर्तेश्वरोऽकरोत् । स्त्रीरूपधारिणस्ते च रामाद्या द्वारमाययुः ॥ २१५ ॥
आदिक्षदतिवीर्योऽपि दासीनदिमिकाः स्त्रियः । गाढं गृहीत्वा ग्रीवासु निर्वास्यन्तां पुराद्बहिः ॥ २१६ ॥
समन्ताचस्य सामन्ता उत्थाय सपदातयः । स्त्रीसैन्यं तदुपद्रोतु प्रावर्तन्त महाभुजाः ॥ २१७ ॥
रामभद्रो भुजस्तम्भेनेभस्तम्भमथोच्चकैः । समुत्पाट्यायुधीकृत्य तान् समन्तादपातयत् ॥ २१८ ॥
तेन सामन्तभङ्गेनातिवीर्यः कुपितो भृशम् । रणाय स्वयमुत्तस्थे खड्गमाकृष्य भीषणम् ॥ २१९ ॥
अथ तत् खड्गमाच्छिद्य लक्ष्मणस्तत्क्षणादपि । तमाचकर्ष केशेषु तद्वस्त्रेण बबन्ध च ॥ २२० ॥

मृगं व्याघ्र इवादाय तं नृप्याग्रथचाल स । दृश्यमानो वनै पौरैस्त्वासतस्लेक्षणै ॥ २२१ ॥
अथ तं मोचयामास मैथिली करुणापरा । सद्यो भरतसेवां च सौमित्रिं प्रत्यपादयत् ॥ २२२ ॥
स्त्रीवेषमथ सजह्रे सर्वेषां क्षेत्रदेवता । अज्ञासीदतिवीर्योऽपि तौ तदा रामलक्ष्मणौ ॥ २२३ ॥
अतिवीर्यस्तयो पूजां महतीं विदधे तत । दध्यौ च मानध्वंसेन मानी वैराग्यमुच्चकै ॥ २२४ ॥
किं सेविष्येऽहमप्यन्यमित्यहङ्कारमाग्धृदि । दीक्षार्थी विजयरथे पुत्रे राज्यं न्यधत्त स ॥ २२५ ॥
द्वितीयो भरतो मेऽसि शाधि क्ष्मां प्रव्रज स्म मा । रामेणेत्य निषिद्धोऽपि स प्राव्राजीन्महामना ॥ २२६ ॥
तत्स्नुर्विजयरथो रतिमालाभिधां निजाम् । लक्ष्मणाय ददौ जामिं तां मेनेऽपि लक्ष्मण ॥ २२७ ॥
ययौ ससैन्यो विजयपुरं रामोऽपि पत्तनम् । अयोध्यां विजयरथो भरतं सेवितुं पुन ॥ २२८ ॥
विज्ञाततद्वृत्तान्तोऽपि भरतो गरिमाचल । सत्कार क्षमायात सन्तो हि नतवत्सला ॥ २२९ ॥
कनिष्ठां रतिमालाया नाम्ना विजयसुन्दरीम् । ददौ स्वसारं श्रीसारं भरताय स भूभुजे ॥ २३० ॥
तदा च विहरंस्तत्रातिवीर्यो मुनिराययौ । वन्दित्वा क्षमयाञ्चक्रे भरतेन स भूभुजा ॥ २३१ ॥
विसृष्ट सप्रसादेन भरतेन महीभुजा । सानन्दो विजयरथो नन्द्यावर्तपुरं ययौ ॥ २३२ ॥
महीधरमनुज्ञाप्य रामे गन्तुं समुद्यते । वनमालामापप्रच्छे यियासुर्यं लक्ष्मण ॥ २३३ ॥
जगाद वनमालापि बाष्पपूर्णविलोचना । प्राणत्राणं तदाकार्षीं प्राणेश मम किं मुधा ॥ २३४ ॥
परं भवेत् सुखमृत्युस्तदेव मम वल्लभ । न त्वर्वक्षसमिद्धं दुःखं त्वद्विरहोत्थितम् ॥ २३५ ॥

१ अधिकृत्यासेन चपलनेत्रः । २ सत्कारम् । ३ जगाद । ४ अर्धपथसत्याम् ।

अद्यैव परिणीय त्वं सहैव नय मां प्रभो । त्वद्वियोगाच्छलं प्राप्य नेष्यत्यपरथान्तकः ॥ २३६ ॥
अन्वनैषीऌक्ष्मणोऽस्य भ्रातुः शुश्रूषको ह्यहम् । शुश्रूषाविघ्नकृन्मा भूः सहायान्ती मनस्विनि ॥ २३७ ॥
प्राप्याभीप्सितं स्थान ज्यायासं वैरवर्णिनि । त्वा समेष्यामि भूयोऽपि वास्तव्या हृदये ह्यसि ॥ २३८ ॥
घोरेभ्यः शपथेभ्यो यं त्व कारयसि मानिनि । त करोमि पुनरिहागमप्रत्ययहेतवे ॥ २३९ ॥
न चेदायामि भूयोऽपि तदहं रात्रिभोजिनाम् । गृह्णाऽहसेति शपथं सौमित्रिः कारितस्तया ॥ २४० ॥
रात्रिशेषे ततो रामः ससीतालक्ष्मणोऽचलत् । क्रमाद्वनानि लङ्घित्वा प्राप क्षेमाञ्जलिं पुरीम् ॥ २४१ ॥
रामस्तत्र बहिरुद्याने वन्याहारः फलादिभिः । बुभुजे लक्ष्मणानीतैर्जानकीकरसंस्कृतैः ॥ २४२ ॥
तत्र राममनुज्ञाप्य कौतुकात्प्राविशत् पुरीम् । सौमित्रिस्तत्र चाश्रौषीदुच्चराघोषणामिति ॥ २४३ ॥
शक्तिप्रहार सहते योऽमुष्य पृथिवीपतेः । तस्मै परिणयनाय ददात्येष स्वकन्यकाम् ॥ २४४ ॥
तेन चाघोषणाहेतुं पृष्ट एकोऽवदत् पुमान् । अत्रास्ति शत्रुदमनो नाम राजा महाभुजः ॥ २४५ ॥
तस्यास्ति कनकादेवीकुक्षिजा वरकन्यका । जितपद्मेति पद्मायाः सद्मैकं पद्मलोचना ॥ २४६ ॥
वरस्यौजःपरीक्षार्थमिदमारभ्यते ततः । प्रत्यहं क्ष्माभुजानेन तादृक्षो नेति कोऽपि ना ॥ २४७ ॥
श्रुत्वेत्थं लक्ष्मणोऽगच्छत्तं राजानं सभास्थितम् । कुतो हेतोः कुतस्त्यस्त्व तत्पृष्टश्चैवमब्रवीत् ॥ २४८ ॥
अह भरतदूतोऽस्मि गच्छन्नर्थेन केनचित् । तव कन्यामिमां श्रुत्वा परिणेतुमिहागमम् ॥ २४९ ॥
सहिष्यसे शक्तिघात ममेत्युक्तो महीभुजा । किमेकेन सहिष्येऽहं पञ्चेत्यूचे च लक्ष्मणः ॥ २५० ॥

---

१ अन्यथा । २ वरः वर्णो यस्या सावरवर्णिनी तत्संबोधने । ३ पापेन । ४ लक्ष्म्या सद्म गृहम् । ५ बलपरीक्षार्थम् ।

नितपद्मा तदानीं च तत्रागाद्राजकन्यका । बभूव लक्ष्मणं प्रेक्ष्य क्षणाच्च मदनातुरा ॥ २५१ ॥
तया सद्योऽनुरागिण्या वार्यमाणोऽपि भूपतिः । चिक्षेप लक्ष्मणायाशु तु सह शक्तिपञ्चकम् ॥ २५२ ॥
द्वे कराभ्यां द्वे कक्षाभ्यां दन्तैरेकां च लक्ष्मणः । अग्रहीज्जितपद्मायाः कन्यायाः मनसा सह ॥ २५३ ॥
जितपद्माक्षिपत्तत्र स्वयं वरणमालिकाम् । उदुद्वामिमां कन्येत्यब्रवीत्पार्थिवोऽपि तम् ॥ २५४ ॥
लक्ष्मणोऽप्यवदद्बाह्योपवनेऽस्ति ममाग्रजः । रामो दाशरथिस्तेन परतन्त्रोऽस्मि सर्वदा ॥ २५५ ॥
तौ रामलक्ष्मणौ ज्ञात्वा तत्क्षणं स क्षमापतिः । गत्वा रामं नमश्चक्रे स्ववेश्मन्यानिनाय च ॥ २५६ ॥
महत्या प्रतिपत्त्या स राजा राममपूजयत् । सामान्योऽप्यतिथिः पूज्यः किं पुनः पुरुषोत्तमः ॥ २५७ ॥
ततोऽपि चलिते रामे सौमित्रिस्तं महीपतिम् । उवाच परिणेष्यामि व्यावृत्तस्त्वत्सुतामिति ॥ २५८ ॥
निशायां निर्ययौ रामः प्रापः सायं च पत्तनम् । वंशस्थलं नाम वंशशैलाख्याद्रितटस्थितम् ॥ २५९ ॥
तस्मिन् सभूपतिं लोकमाकुलं लोके भयाकुलम् । पप्रच्छ च नरं कश्चिद्रामस्तद्भयकारणम् ॥ २६० ॥
आचख्यौ पुरुषः सोऽपि तार्तीयीकोऽद्य वासरः । अमुष्मिन् पर्वते रात्रौ रौद्रस्योच्छलतो ध्वने ॥ २६१ ॥
तद्भयाद्रात्रिमन्यत्र गमयत्यखिलो जनः । प्रातश्च पुनरायाति कष्टा नित्यमियं स्थितिः ॥ २६२ ॥
ततश्च कौतुकाद्रामः प्रेरितो लक्ष्मणेन च । तत्रारुरोहापश्यच्च कायोत्सर्गस्थितौ मुनी ॥ २६३ ॥
भक्त्या ववन्दिरे तौ तु जानकीरामलक्ष्मणाः । तदग्रेऽवादयद्रामो गोकर्णार्पितवल्लकीम् ॥ २६४ ॥
हृद्यं जगौ च सौमित्रिर्ग्रामरागमनोहरम् । चित्राङ्गहारकरणं सीता देवी ननर्त च ॥ २६५ ॥

१ ध-लकी वीणा ।

तदा चास्तं ययावर्को जलम्भे च विभावरी । विकृतानेकवेतालश्चागाद्देवोऽनलप्रभः ॥ २६६ ॥
स्वयं वेतालरूपः सोऽट्टहासैः स्फोटयन्नभः । महर्षी तावुपद्रोतु प्रावर्तत दुराशयः ॥ २६७ ॥
मुक्त्वोपसाधु वैदेहीं सन्नद्धौ रामलक्ष्मणौ । उत्तस्थाते त निहन्तुमकाले कालतां गतौ ॥ २६८ ॥
सोऽपि देवस्तयोस्तेजःप्रसरं सोढुमक्षमः । निजं स्थान ययौ साध्वोस्तयोश्चाजनि केवलम् ॥ २६९ ॥
देवैश्च केवलज्ञानमहिमा विदधे तयोः । नत्वा रामश्च पप्रच्छोपसर्गविधिकारणम् ॥ २७० ॥
तत्राख्यदेको महर्षिराख्यया कुलभूषणः । आसीन्नगर्यां पद्मिन्या राजा विजयपर्वतः ॥ २७१ ॥
तस्यामृतस्वराख्योऽभूद्दूतो दूतस्य तस्य च । भार्योपयोगा तत्पुत्रावुदितो मुदितोऽपि च ॥ २७२ ॥
वयस्यस्तस्य दूतस्य वसुभूतिरिति द्विजः । उपयोगा तदासक्ताजिघांसदमृतस्वरम् ॥ २७३ ॥
नृपादेशाद्विदेशायान्यदागादमृतस्वरः । सह गच्छन् वसुभूतिर्मार्गे तं चावधीच्छलात् ॥ २७४ ॥
वसुभूतिः पुरीमेत्य जनायैवमवोचत । कुतोऽपि कार्यादमृतस्वरेणाहं निवर्तितः ॥ २७५ ॥
शशंस चोपयोगायाः स नौ सम्भोगविघ्नकृत् । मया व्यापादितो मार्गे च्छलं लब्ध्वामृतस्वरः ॥ २७६ ॥
साऽप्यूचे साध्वकार्षीस्त्वं जहि पुत्रावेमावपि । अस्तु निर्मक्षिकमिति सोऽपि तत्प्रत्यपद्यत ॥ २७७ ॥
दैवाच्छ्रुत्वा च तं मन्त्रं वसुभूतिसधर्मिणी । ईर्ष्ययाख्यच्च तत्सून्वोर्मुदितस्योदितस्य च ॥ २७८ ॥
उदितेन रुषा सद्यो वसुभूतिर्निपातितः । मृत्वैष नलपल्ल्या स म्लेच्छः समुदपद्यत ॥ २७९ ॥
धर्मं श्रुत्वान्यदा राजा महर्षेर्मतिवर्धनात् । प्रव्रज्यामाददे तावप्युदितो मुदितोऽपि च ॥ २८० ॥

---

१ यमत्व प्राप्तौ रामलक्ष्मणौ । २ हन्तुमैच्छत् ।

सम्मेते वन्दितुं चैत्यान्युदितो मुदितोऽपि च । अचेलतु पथि भ्रान्तौ पल्लीं ता च समेयतु ॥ २८१ ॥
पूर्ववैराद्वसुभूतिजीवो म्लेच्छो निरीक्ष्य तौ । हन्तु दधावे म्लेच्छाधिपतिना च न्यषिध्यत ॥ २८२ ॥
म्ल ग्रहश प्राग्भवे सोऽभूत्मृगो व्याधाच्च मोचित । मुदितोदितजीवाभ्या कर्षकाभ्या च तद्भवे ॥ २८३ ॥
तेन म्लेच्छाधिपेनात्तत्रातौ सम्मेतमेत्य च । तौ चैत्यानि ववन्दाते विजह्राते चिराय च ॥ २८४ ॥
विधायानशन मृत्वा महाशुक्रे सुरोत्तमौ । तौ सुन्दरसुकेशाख्यावभूतां महर्द्धिकौ ॥ २८५ ॥
भ्रान्त्वा भव वसुभूतिजीवो म्लेच्छ कथञ्चन । अवाप मानुष जन्म तत्र सोऽभूच्च तापस ॥ २८६ ॥
स विपद्य समुत्पेदे ज्योतिष्केषु सुरेषु तु । धूमकेतुर्नाम देवो मिथ्यादृष्टिर्दुराशय ॥ २८७ ॥
उदितमुदितजीवौ शुक्राच्च्युत्वाथ भारते । महापुरेऽरिष्टपुरे प्रियम्वदमहीपते ॥ २८८ ॥
पद्मावत्यां सधर्मिण्यामजायेतामुभौ सुतौ । विश्रुतौ नामतो रत्नरथचित्ररथाविति ॥ २८९ ॥
धूमकेतुरपि च्युत्वा पत्न्यां तस्यैव भूपते । बभूव कनकाभाया नाम्ना ह्यनुद्धर ॥ २९० ॥
अभूत्समत्सरो रत्नरथे चित्ररथे च स । तस्योपरि न मात्सर्यं बिभराञ्चक्रतुस्तु तौ ॥ २९१ ॥
न्यस्य रत्नरथे राज्य यौवराज्य द्वयो पुन । प्रियम्वद षड्दिनानि प्रायं कृत्वा सुरोऽभवत् ॥ २९२ ॥
राज्य पालयतो रत्नरथस्यैको नृपो ददौ । श्रीप्रभां नाम कन्यां स्वा याचमानेऽप्यनुद्धरे ॥ २९३ ॥
क्रुद्धोऽथानुद्धरो रत्नरथस्योर्वीमलुण्टयत् । पातयित्वा रणे रत्नरथेन जगृहे च स[१] ॥ २९४ ॥
विडम्ब्य बहुधा रत्नरथेन मुमुचेऽथ स । तापसोऽभूच्च सीसह्नान्योधीचक्रे[२] निज तप ॥ २९५ ॥

---

१ अनुद्धरम् । २ विफलीचक्रे ।

ततो मृत्वा भवं भ्रान्त्वा चिरान्मर्त्यो बभूव सः । तापसीभूय भूयोऽपि चकाराज्ञानकं तपः ॥ २९६ ॥
मृत्वानलप्रभः सोऽयं ज्योतिष्कस्त्रिदशोऽभवत् । दीक्षां रत्नरथचित्ररथौ जगृहतुश्च तौ ॥ २९७ ॥
विपद्य चाच्युते कल्पेऽतिबलोऽथ महाबलः । नामधेयेन जज्ञाते त्रिदशौ प्रवरर्द्धिकौ ॥ २९८ ॥
च्युत्वा च सिद्धार्थपुरे क्षेमङ्करमहीपतेः । महिष्या विमलादेव्यास्तौ कुक्षाववतेरतुः ॥ २९९ ॥
क्रमादजनिषातां च विमलायाशुभौ सुतौ । कुलभूषण एवोऽहं तथायं देशभूषणः ॥ ३०० ॥
उपाध्यायस्य घोषस्यार्पितौ पाठाय भूभुजा । अपठाव कलाः सर्वा द्वादशाब्दीमवस्थितौ ॥ ३०१ ॥
त्रयोदशेऽब्दे घोषेण सहायातौ नृपान्तिके । राजवेश्मन्यपश्याव कन्यां वातायनस्थिताम् ॥ ३०२ ॥
जातानुरागौ तस्यां च सद्योऽपि विमनायितौ । अगमाचान्तिकं राज्ञोऽदर्शयावाखिलाः कलाः ॥ ३०३ ॥
उपाध्यायो-र्चितो राज्ञा जगाम निजमन्दिरम् । आवां च मातरं नन्तुं गतौ राजाज्ञया ततः ॥ ३०४ ॥
तत्र चावामपश्याव तां कन्यां मातुरन्तिके । अशंसचाम्बा युवयोः स्वसेय कनकप्रभा ॥ ३०५ ॥
घोषोपाध्यायसदने युवयोस्तस्थुषोः सतोः । जातेयं वत्सौ तेनेमां नोपलक्षयथो युवाम् ॥ ३०६ ॥
तच्छ्रुत्वा लज्जितावावामज्ञानात् स्वसृकाङ्क्षिणौ । क्षणाद्वैराग्यमापन्नौ प्राव्रजावान्तिके गुरोः ॥ ३०७ ॥
तप्यमानौ तपस्तीव्रमिहायातौ महागिरौ । कायोत्सर्गेण चास्थाव निरपेक्षौ वपुष्यपि ॥ ३०८ ॥
पितावयोर्वियोगेन गृहीत्वानशनं मृतः । गरुडेशोऽभवद्देवो महालोचननामकः ॥ ३०९ ॥
विज्ञायासनकम्पेन चोपसर्गं स आवयोः । सम्प्रत्ययमिहायातः प्राग्जन्मस्नेहपीडितः ॥ ३१० ॥

१ न जानीथः ।

अनलप्रभदेव सो नन्तवीर्यमहामुने । पार्श्वे केवलिनोऽगच्छत् सह देवै कुतूहलात् ॥ ३११ ॥
दशनान्तेऽनन्तवीर्यं पृष्ट शिष्येण केनचित् । मुनिसुव्रततीर्थेऽस्मिन् क पश्चात्तव केवली ॥ ३१२ ॥
सोऽप्याख्यन्मम निर्वाणे केवली कुलभूषण । देशभूषण इति च भ्रातरौ द्वौ भविष्यत ॥ ३१३ ॥
तथानलप्रभ श्रुत्वा निज स्थानमुपेत्य च । विभङ्गनान्यदा ज्ञात्वा कायोत्सर्गस्थिताविह ॥ ३ ४ ॥
मिथ्यात्वेनान्तवीर्यवचन कर्तुमन्यथा । प्राग्ज मवैराच्च स नावुपद्रुताव दारुणम् ॥ ३१५ ॥
॥ युग्मम् ॥
दिनान्यतीयुश्चत्वारि तस्योपद्रवतो ह्यम् । अथायातौ युवामत्र युष्मद्भीत्यानशच्च स ॥ ३१६ ॥
कर्मक्षयादावयोश्च केवल समजायत । कर्मक्षये सहायोऽयमुपसर्गपरोऽप्यभूत् ॥ ३१७ ॥
महालोचन वो पि तदोचे गरुडाधिप । काकुत्स्थ साध्वकार्षीस्त्व किं प्रत्युपकरोमि ते ॥ ३१८ ॥
नार्थो न कश्चिदप्यस्तीत्युक्ते रामेण सोऽमर । तथाप्युपकरिष्यामि क्वापीत्युक्त्वा तिरोदधे ॥ ३१९ ॥
अथ वशस्थलाधीशो राजा नाम्ना सुरप्रभ । तत्रागत्य नमश्चक्रे राममानर्च चोच्चकै ॥ ३२० ॥
रामाज्ञया तत्र शैले सोऽर्हच्चैत्यान्यकारयत् । रामनाम्ना रामगिरिर्गिरि सोऽभूत्तदादि च ॥ ३२१ ॥
सुरप्रभमथापृच्छ्य प्रतस्थे रघुपुङ्गव । उद्दण्ड दण्डकारण्य प्रविवेश च निर्भय ॥ ३२२ ॥
विधाय तत्र चावास महागिरिगुहागृहे । काकुत्स्थ सुस्थितस्तस्थौ स्वकीय इव वेश्मनि ॥ ३२३ ॥
तत्र भोजनवेलायामन्येद्युश्चारणौ मुनी । नाम्ना त्रिगुप्तसुगुप्तौ नभसा समुपेयतु ॥ ३२४ ॥

१ नौ मायाम् । २ न प्रयोजनम् ।

द्विमासोपोषितौ तौ तु पारणार्थमुपस्थितौ । भक्त्या ववन्दिरे रामसीतासौमित्रयस्त्रयः ॥ ३२५ ॥
यथोचितैरन्नपानैः सीता तौ प्रत्यलाभयत् । तदा देवैर्विदधिरे रत्नगन्धाम्बुवृष्टय ॥ ३२६ ॥
तदा रत्नजटी कम्बुद्वीपविद्याधरेश्वरः । द्वौ सुरौ चैत्य रामाय प्रीताः साश्वं रथं ददुः ॥ ३२७ ॥
गन्धाम्बुवृष्टिगन्धेन तत्र गन्धाभिधः खगः । उत्तीर्य पादपाद्रोगी तद्वास्तव्यः समाययौ ॥ ३२८ ॥
सञ्जातजातिस्मरणो मुनेर्दर्शनमात्रतः । पपात मूर्च्छया भूमौ सीताम्भोभिः सिषेच तम् ॥ ३२९ ॥
लब्धसञ्ज्ञः समुत्थाय साधुपादेषु सोऽपतत् । साधोः स्पर्शौषधीलब्ध्या नीरोगश्चाभवत्क्षणात् ॥ ३३० ॥
पक्षौ हेमावजायेतां चञ्चूर्विद्रुमविभ्रमा । पद्मरागप्रभौ पादौ नानारत्नप्रभं वपुः ॥ ३३१ ॥
रत्नाङ्कुरश्रेणिनिभा जटाः शिरसि चाभवन् । जटायुर्नाम तस्याभूत्ततः प्रभृति पक्षिणः ॥ ३३२ ॥
॥ युग्मम् ॥

रामोऽपृच्छन्महर्षी तौ गृध्रः क्रव्यादयं कुधीः । स्थित्वा वः पादयोः पार्श्वे शान्तः कस्मादजायत ॥३३३॥
भदन्तावयमत्यन्तविरूपावयवः पुरा । कथमद्य क्षणाज्जातो हेमरत्नोत्करद्युतिः ॥ ३३४ ॥
सुगुप्तोऽथाचख्यावासीदिह पुरा पुरम् । कुम्भकारकटं नाम राजा तत्रैष दण्डकः ॥ ३३५ ॥
श्रावस्त्यां च तदा राजा जितशत्रुरजायत । धारिणी नाम तत्पत्नी स्कन्दको नाम तत्सुतः ॥ ३३६ ॥
पुरन्दरयशा नामाभवच्च दुहिता तयोः । कुम्भकारकटेशस्तां पर्यणैषीच्च दण्डकः ॥ ३३७ ॥
अन्यदार्थेन केनापि जितशत्रुनृपान्तिके । प्राहिणोद्दण्डको दूतं पालक नामतो द्विजम् ॥ ३३८ ॥

१ क्रव्यं मांसमत्तीति क्रव्याद् क्विप्प्रत्ययान्तः । २ हे भगवन्तौ ।

जितशत्रुस्तदा नार्हद्धर्मगोष्ठीपरोऽभवत् । आरेभे पालकस्त तु धर्म दूषयितु कुधी ॥ ३३९ ॥
स स्कन्दककुमारेण मिथ्यादृष्टिदुराशय । युक्त्या निरुत्तरीचक्रे सत्यमर्वादपूर्वकम् ॥ ३४० ॥
तदा स हसित सभ्यैरमर्ष स्कन्दके दधत् । विसृष्टश्च यदा राज्ञा कुम्भकारकट ययौ ॥ ३४१ ॥
विरक्तश्च यदा पञ्चराजपुत्रशतान्वित । मुनिसुव्रतपादान्ते स्कन्दको व्रतमाददे ॥ ३४२ ॥
पुरन्दरयशोमुरपलोक पोषयितु पुरे । कुम्भकारकटे यामीत्यापप्रच्छे स च प्रभुम् ॥ ३४३ ॥
उवाच प्रभुरप्येव तत्र ते मारणान्तिक । गतस्य सपरीवारस्योपसर्गो भविष्यति ॥ ३४४ ॥
धर्ममाराधकास्तत्र भाविनो वा न वेत्यथ । भूयोऽपि स्कन्दकोऽपृच्छत् स्वामिन मुनिसुव्रतम् ॥ ३४५ ॥
त्वा विनाराधका सर्वेऽपीत्याख्यद् भगवानपि । सर्वमेतर्हि सम्पूर्णमित्युक्त्वा स्कन्दकोऽचलत् ॥ ३४६ ॥
क्रमेण स्कन्दकाचार्यो मुनिपञ्चशतीयुत । गच्छन्नासादयामास कुम्भकारकट पुरम् ॥ ३४७ ॥
त दृष्ट्वा पालक क्रूर सस्मरन् पराभवम् । साधुयोग्योद्यानेषु शस्त्राण्युर्व्यामखानयत् ॥ ३४८ ॥
उद्याने स्कन्दकाचार्य एकस्मिन् समवासरत् । आययौ वन्दितु त च दण्डक सपरिच्छद ॥ ३४९ ॥
स्कन्दको देशना चक्रे जहृषुर्बहवो जना । प्रहृष्टो देशनान्ते च वेश्मागाद्दण्डको नृप ॥ ३५० ॥
गत्वा रहसि राजानमित्यूचे पालक कुधी । स्वामिन्नेष बकाचार पाखण्डी स्कन्दक खलु ॥ ३५१ ॥
सहस्रयोधिभि पुम्भिर्मुनिवेषधरैरसौ । त्वां हत्वा राज्यमादातुमागादिह महाशठ ॥ ३५२ ॥
अत्रोद्याने स्वस्थाने च मुनिवेषैर्महाभटै । छन्न क्षिप्तानि शस्त्राणि दृष्ट्वा प्रत्येतु भूपति ॥ ३५३ ॥
ततश्चाखानयद्राजा मुनिस्थानानि सर्वत । चित्राण्यस्त्राण्यपश्यच्च विषाद च पर ययौ ॥ ३५४ ॥

अविचार्य ततो राजाप्यादिदेशेति पालकम् । साधु मन्त्रिस्त्वया ज्ञातं चक्षुष्मान् भवता ह्यहम् ॥ ३५५ ॥
कर्तुं त्वमेव जानासि दुर्मतेरस्य चोचितम् । तत्कुरुष्व न भूयोऽपि प्रष्टव्योऽहं महामते ॥ ३५६ ॥
इत्युक्तः पालकः शीघ्रं गत्वा यन्त्रमकारयत् । स्कन्दकस्याग्रतः साधूनेकैकं च न्यपीलयत् ॥ ३५७ ॥
निःपील्यमानानेतांस्तु देशनापूर्वकं स्वयम् । अकारयत् स्कन्दकोऽपि सम्यगाराधनाविधिम् ॥ ३५८ ॥
उपयन्त्रं शिशौ नीते परिवारान्तिमे मुनौ । कारुण्यात् स्कन्दकाचार्य इत्यभाषत पालकम् ॥ ३५९ ॥
आदौ पीलय मामेव कुरुष्वैतद्वचो मम । बालं मुनिं न पश्यामि पील्यमानं यथा ह्यमुम् ॥ ३६० ॥
तत्पीडापीडितं ज्ञात्वा स्कन्दकं पालकोऽपि हि । तमेव बालकमुनिं तत्पीडार्थमपीलयत् ॥ ३६१ ॥
उत्पन्नकेवलाः सर्वेऽप्यवापुः पदमव्ययम् । प्रत्याख्याय स्कन्दकस्तु निदानमिति निर्ममे ॥ ३६२ ॥
दण्डकस्य पालकस्य तथात्र कुलराष्ट्रयोः । व्यापादनाय भूयासं तपसोऽस्य फलं यदि ॥ ३६३ ॥
एवं कृतनिदानः सन् पीलितः पालकेन सः । देवो वह्निकुमारोऽभूत् कालाग्निरिव तत्क्षये ॥ ३६४ ॥
पुरन्दरयशोदत्तरत्नकम्बलतन्तुजम् । तद्रजोहरणं रक्तेनाक्तं शकुनिकाहरत् ॥ ३६५ ॥
दोर्दण्डबुद्ध्या यत्नेन गृहीतमपि तत्त्वतः । पुरः पुरन्दरयशोदेव्या दैवात् पपात सः ॥ ३६६ ॥
विदाञ्चकार सा भ्रातुर्महर्षेर्विपदं ततः । किमकार्षीः पाप पापमित्याक्रोशच्च दण्डकम् ॥ ३६७ ॥
तां शोकमग्नामुद्धृत्यानैषीच्छासनदेवता । मुनिसुव्रतपादान्ते प्रव्रज्यामाददे च सा ॥ ३६८ ॥
स्कन्दकाग्निकुमारोऽपि प्राग्जन्मावधिना विदन् । सपालकं सपूर्लोकमदहद्दण्डकं नृपम् ॥ ३६९ ॥

१ परिवारेऽन्तिमश्चरमस्तस्मिन् । २ रक्तेन शोणितेनाक्तं व्याप्तम् । ३ पक्षिणी ।

तदादि दण्डकारण्यमिदं दारुणमुद्धसम् । दण्डकस्याभिधानेन बभूव भुवि विश्रुतम् ॥ ३७० ॥
दण्डकोऽपि भवे भ्रान्त्वा दुःखखानिषु योनिषु । गन्धाख्योऽयमभूत् पक्षी महारोगी स्वकर्मभिः ॥ ३७१ ॥
अस्यास्मद्दर्शनाज्जातिस्मरणं समजायत । अस्मत्स्पर्शौषधीलब्ध्या रोगाश्च क्षयमासदन् ॥ ३७२ ॥
तच्छ्रुत्वा मुदितः पक्षी भूयोऽपि मुनिपादयोः । पपात धर्मं चाश्रौषीच्छ्रावकत्वं च शिश्रिये ॥ ३७३ ॥
जीवघातपलाहाररात्रिभोजनकर्मणाम् । प्रत्याख्यानं ददौ तस्येप्सितं ज्ञात्वा महामुनिः ॥ ३७४ ॥
इत्यूचे च मुनी रामं साधर्मिक इहैष वः । साधर्मिके च वात्सल्यमुक्तं श्रेयस्करं जिनैः ॥ ३७५ ॥
बन्धुर्न एष परम इत्युक्त्वा राघवेण तौ । वन्दितौ नभसोत्पत्य मुनी जग्मतुरन्यतः ॥ ३७६ ॥
तं दिव्यं रथमारुह्य जानकीरामलक्ष्मणाः । विजह्रुः क्रीडयान्यत्र सहचारिजटायुषः ॥ ३७७ ॥
इतः पातालल‍ङ्कायां खरचन्द्रणखात्मजौ । शम्बूकसुन्दनामानावभूतां नवयौवनौ ॥ ३७८ ॥
पितृभ्यां वार्यमाणोऽपि दण्डकारण्यमन्यदा । शम्बूकः सूर्यहासासिसाधनार्थमुपेयिवान् ॥ ३७९ ॥
सोऽथ क्रौञ्चरवातीरे स्थित्वान्तर्वंशगह्वरम् । वारयिष्यति मां यस्तं हनिष्यामीत्यवोचत ॥ ३८० ॥
एकान्नभुग्विशुद्धात्मा ब्रह्मचारी जितेन्द्रियः । अधोमुखो वटशाखानिबद्धचरणद्वयः ॥ ३८१ ॥
विद्यां जपितुमारेभे सूर्यहासासिसाधिनीम् । सप्ताहाधिकद्वादशाब्द्या या सिद्धिमुपगच्छति ॥ ३८२ ॥
एवं च तस्थुषस्तस्य वल्गुलीस्थानकस्पृशः । वर्षाणि द्वादशातीयुश्चत्वारि दिवसानि च ॥ ३८३ ॥
सेद्धुकामः सूर्यहासः प्रत्याकारतिरोहितः । स्फूर्जत्परिमलो व्योम्ना तत्रागाद्वंशगह्वरे ॥ ३८४ ॥

---

१ पलं मांसम् । २ पक्षिणः । ३ सहचारी जटायुर्येषां ते । ४ वल्गुलोऽधोमुखस्थायी पक्षी तस्य स्थानमाश्रितः । ५ कोशच्छन्नः ।

क्रीडयेतस्ततो भ्राम्यंस्तत्र सौमित्रिराययौ । ददर्श सूर्यहासासिं सूर्यस्येव करोत्करम् ॥ ३८५ ॥
तं खड्गमाददे सोऽथ प्रत्याकाराच्चकर्ष च । अपूर्वशस्त्रालोके हि क्षत्रियाणां कुतूहलम् ॥ ३८६ ॥
तत्तीक्ष्णत्वपरीक्षार्थं तत्क्षणं तेन लक्ष्मणः । अभ्यर्णस्थां वंशजालीं नालत्रं लुलाव च ॥ ३८७ ॥
वंशजालान्तरस्थस्य शम्बूकस्याथ कर्तितम् । भूतले मौलिकमलं सोऽपश्यत्पतितं पुरः ॥ ३८८ ॥
प्रविवेशाग्रतो यावत् सौमित्रिर्वंशगह्वरम् । तावत्कबन्धमैक्षिष्ट वटशाखावलम्बिनम् ॥ ३८९ ॥
अयुध्यमानोऽशस्त्रश्च पुमान् कोऽपि हतो मया । अमुना कर्मणा धिङ्मामित्यात्मानं निनिन्द सः ॥ ३९० ॥
गत्वा च रामभद्राय तदशेषं शशंस सः । असिं च दर्शयामास रामोऽप्येवमभाषत ॥ ३९१ ॥
असावसिः सूर्यहासः साधकोऽस्य त्वया हतः । अस्य सम्भाव्यते नूनं कश्चिदुत्तरसाधकः ॥ ३९२ ॥
अत्रान्तरे दशग्रीवस्वसा चन्द्रणखाभिधा । मत्सूनोः सूर्यहासोऽद्य सेत्स्यतीति कृतत्वरा ॥ ३९३ ॥
पूजापानान्नसहिता तत्र प्रमुदिता ययौ । ददर्श च शिरः सूनोश्छिन्नं लुलितकुण्डलम् ॥ ३९४ ॥
॥ युग्मम् ॥
क्वासि हा वत्स शम्बूक शम्बूकेति रुदत्यथ । अपश्यल्लक्ष्मणस्याङ्घ्रिन्यासपङ्क्तिं मनोहराम् ॥ ३९५ ॥
मम सूनुर्हतो येन तस्येयं पदपद्धतिः । इति तत्पदपद्धत्या द्रुत चन्द्रणखा ययौ ॥ ३९६ ॥
यावत् किञ्चिदगात्तावत् ससीतालक्ष्मणं पुरः । नेत्राभिरामं रामं सापश्यत्तरुतले स्थितम् ॥ ३९७ ॥
निरीक्ष्य रामं सा सद्यो रिरंसाविवशाभवत् । कामावेशः कामिनीनां शोकोद्रेकेऽपि कोऽप्यहो ॥ ३९८ ॥

---

१ किरणसमूहम् । २ शीर्षकमलम् । ३ रन्तुमिच्छा रिरंसा । ४ शोकाधिके ।

कन्यारूपं विकृत्याथ नागकन्यासहोदरम् । सा मन्मथार्ता काकुत्स्थमुपतस्थे सवेपथु ॥ ३९९ ॥
प्रभाषे रामभद्रस्ता भद्रे कुत इहागमः । दारुणे दण्डकारण्ये कृतान्तैकनिकेतने ॥ ४०० ॥
साप्यूचेऽवन्तिराजस्य कन्याहं भवनोपरि । सुप्ता हृतास्मि केनापि खेचरेण क्षपान्तरे ॥ ४०१ ॥
इहारण्ये समायातो दृष्टः सोऽन्येन केनचित् । विद्याधरकुमारेण जगदे चेति सासिना ॥ ४०२ ॥
स्त्रीरत्नमपहृत्यैतद् चिल्लो हारलतामिव । क्व गमिष्यसि रे पाप मृत्युस्तेऽहमुपस्थितः ॥ ४०३ ॥
इत्युक्तः सोऽत्र मां मुक्त्वा तेनाजिं सुचिरं व्यधात् । उभावपि विपेदाते मत्तौ वनगजाविव ॥ ४०४ ॥
एकाकिनी कान्दिशीका भ्राम्यन्त्यहमितस्ततः । प्राप्ता त्वां पुण्ययोगेन च्छायाद्रुमिव जङ्गले ॥ ४०५ ॥
तन्मां परिणय स्वामिन् कुमारीं कुलसम्भवाम् । महत्सु जायते जातु न वृथा प्रार्थनार्थिनाम् ॥ ४०६ ॥
ध्रुवं मायाविनी काचिन्नटवद्रूपधारिणी । कूटनाटकमुत्पाद्यागादस्मद्वञ्चयितुमत्र न ॥ ४०७ ॥
चिन्तयन्ताविति चिरं सुद्विसंवादिनौ मुखम् । अन्योऽन्यमीक्षाञ्चक्राते स्मेराक्षौ रामलक्ष्मणौ ॥ ४०८ ॥
॥ युग्मम् ॥
अथ रामः स्मितज्योत्स्नापूरस्नपिताधरः । तामित्यूचे सभार्योऽहमभार्यं भज लक्ष्मणम् ॥ ४०९ ॥
तथार्थितस्तथैवैत्य लक्ष्मणोऽप्येवमब्रवीत् । आर्यं गता त्वमार्यैव तद्गच्छ वातयानया ॥ ४१० ॥
सा पाश्चात्खण्डनात् पुत्रवधाच्च रुपिताधिकम् । आरटद्गत्वा खरादीनां तत्कृतं तनयक्षयम् ॥ ४११ ॥
विद्याधरसहस्रैस्ते चतुर्दशभिरावृता । ततोऽभ्येयुरुपद्रोतुं रामं शैलमिव द्विपाः ॥ ४१२ ॥

१ कामार्ता । रात्रिमध्ये । ३ खड्गसहितेन । ४ पक्षिविशेषः । ५ युद्धम् । ६ प्रफुल्लनेत्रौ ।

किमार्यः सत्यपि मयि योत्स्यते स्वयमीदृशैः । इति राममयाचिष्ट तेषां युद्धाय लक्ष्मणः ॥ ४१३ ॥
गच्छ वत्स जयाय त्वं यदि ते सङ्कटं भवेत् । सिंहनादं ममाहूत्यै कुर्या इत्यन्वशात्स तम् ॥ ४१४ ॥
रामाज्ञां प्रतिपद्योच्चैर्लक्ष्मणोऽथ धनुःसखः । गत्वा प्रववृते हन्तुं स तांस्तार्क्ष्य इवोरगान् ॥ ४१५ ॥
प्रवर्धमाने तद्युद्धे स्वभर्तुः पार्ष्णिवृद्धये । गत्वा त्वरितमित्यूचे रावणं रावणस्वसा ॥ ४१६ ॥
आयातौ दण्डकारण्ये मनुष्यौ रामलक्ष्मणौ । अनात्मज्ञौ निन्यतुस्ते जामेयं यमगोचरम् ॥ ४१७ ॥
श्रुत्वा स्वसृपतिस्ते तु सानुजः सबलो ययौ । तत्र सौमित्रिणा सार्धं युध्यमानोऽस्ति सम्प्रति ॥ ४१८ ॥
कनिष्ठभ्रातृवीर्येण स्ववीर्येण च गर्वितः । परतोऽस्ति स्थितो रामो विलसन् सीतया सह ॥ ४१९ ॥
सीता च रूपलावण्यश्रिया सीमेव योषिताम् । न देवी नोरगी नापि मानुष्यन्यैव कापि सा ॥ ४२० ॥
तस्या दासीकृताशेषसुरासुरवधूजनम् । त्रैलोक्येऽप्यप्रतिच्छन्दं रूपं वाचामगोचरम् ॥ ४२१ ॥
आसमुद्रसमुद्राङ्क यानि कान्यपि भूतले । तवैवार्हन्ति रत्नानि तानि सर्वाणि बान्धव ॥ ४२२ ॥
दृशामनिमिषीकारकारणं रूपसम्पदा । स्त्रीरत्नमेतद्गृह्णीया न चेत्तन्नासि रावणः ॥ ४२३ ॥
आरुह्य पुष्पकमथादिदेश दशकन्धरः । विमानराज त्वरितं याहि यत्रास्ति जानकी ॥ ४२४ ॥
ययौ चात्यन्तवेगेन विमानमनुजानकि । स्पर्धयेव दशग्रीवमनसस्तत्र गच्छतः ॥ ४२५ ॥
दृष्ट्वापि रामादत्युग्रतेजसो दशकन्धरः । बिभाय दूरे तस्थौ च व्याघ्रो हुतवहादिव ॥ ४२६ ॥

१ धनुःसहायः । २ गरुडः । ३ पार्ष्णिः सेनापृष्ठभागः । ४ अबुधौ । ५ युद्धस्थानादन्यत्र । ६ समुद्रपर्यन्त मुद्रया सहितश्चा यस्य यत्सम्बोधनम् ।

इति चाचिन्तयदित कष्ट रामो दुरासद । इतश्च सीताहरणमितो व्याघ्र इतस्तटी ॥ ४२७ ॥
विमृश्य च ततो विद्यामस्मार्षीदवलोकनीम् । उपतस्थे च सा सद्यः किङ्करीव कृताञ्जलि ॥ ४२८ ॥
ततश्चाज्ञापयामास तत्काल तां दशानन । कुरु साहाय्यमद्याय मम सीतां हरिष्यत । ४२९ ॥
सावोचद्वासुकर्मौलिरत्नमादीयते सुखम् । न तु रामसमीपस्था सीता देवासुरैरपि ॥ ४३० ॥
उपाय किं त्वसावस्ति यायाद्येनैष लक्ष्मणम् । तेस्यैष सिंहनादेन सङ्कतो ह्यनयोरयम् ॥ ४३१ ॥
एव कुर्विति तेनोक्ता मजित्वा परतस्तत । सा साक्षादिव सौमित्रि सिंहनाद विनिर्ममे ॥ ४३२ ॥
सिंहनाद च त श्रुत्वा रामो दध्यौ ससम्भ्रम । जगत्यप्रतिमल्लो मे हस्तिमल्ल इवानुज ॥ ४३३ ॥
त न पश्यामि सौमित्रिर्येन प्राप्नोति सङ्कटम् । तस्य सङ्कटसङ्केतस्त्वेका त्वत्र निशम्यते ॥ ४३४ ॥
एव वितर्कव्यग्रोऽभूद्यावद्रामो महामना । सीता लक्ष्मणवात्सल्यात्तावदेवमवोचत ॥ ४३५ ॥
आर्यपुत्र किमद्यापि वत्से सङ्कटमागते । विलम्बसे द्रुत गत्वा त्रायस्व ननु लक्ष्मणम् ॥ ४३६ ॥
इत्यादि सीतावचनै सिंहनादेन चेरित । जगाम त्वरित रामोऽपशकुनान्यप्यमानयन् ॥ ४३७ ॥
अथोत्तीर्य दशग्रीवो विमाने पुष्पकाभिधे । आरोपयितुमारेभे रुदन्तीं जनकात्मजाम् ॥ ४३८ ॥
स्वामिन्येषोऽस्मि मा भैषीस्तिष्ठ तिष्ठ निशाचर । रोषादिति वदन् दूराज्जटायुस्तमधावत ॥ ४३९ ॥
स श्रोटिनखकोटीभिर्निशिताभिर्महाखग । चकर्ष रावणस्योर सीरै कृपिमहीमिव ॥ ४४० ॥
तत क्रुद्धो दशग्रीव खड्गमारोप्य दारुणम् । पक्षा छित्वापातयत्त पतङ्ग पृथिवीतले ॥ ४४१ ॥

१ येनोपायेनैष रामो लक्ष्मण यायात् । २ लक्ष्मणस्यैव । ३ चञ्चूनखाग्रैः । ४ हलै । ५ पक्षिणम् ।

निःशङ्कोऽथ दशग्रीवः सीतामारोप्य पुष्पके । चचाल नभसा तूर्णं पूर्णप्रायमनोरथः ॥ ४४२ ॥
हा नाथ विद्विषंन्माथ राम हा वत्स लक्ष्मण । हा तातपादा हा भ्रातर्भामण्डल महाभुज ॥ ४४३ ॥
सीता वो ह्रियतेऽनेन काकेनेव बलिश्छलात् । एवं सीता रुरोदोच्चै रोदयन्तीव रोदसीम् ॥ ४४४ ॥
श्रुत्वा तद्रुदितं रत्नजटचर्कजटिनन्दनः । खेचरो विममर्शैवं नूनं रामस्य पत्न्यसौ ॥ ४४५ ॥
समुद्रोपरि शब्दोऽयं श्रूयते येन तेन तु । ह्रियते रावणेनेयं छलितौ रामलक्ष्मणौ ॥ ४४६ ॥
प्रभोर्भामण्डलस्याद्योपकरोमीति जातधीः । दधावे खड्गमाकृष्य दशकन्धरमाक्षिपन् ॥ ४४७ ॥
युद्धायाह्वयमानं तं हसित्वैव दशाननः । सद्यो जहार तद्विद्या विद्यासामर्थ्यतोऽखिलाम् ॥ ४४८ ॥
निकृत्तपक्षः पक्षीव हृतविद्यः पपात सः । कम्बुद्वीपे कम्बुशैलमारुह्य समवास्थित ॥ ४४९ ॥
रावणोऽपि विमानस्थो गच्छन् व्योम्नार्णवोपरि । इति सानुनयं प्रोचे मैथिलीं मन्मथातुरः ॥ ४५० ॥
नभश्चरक्ष्माचराणां भर्तुर्मे महिषीपदम् । प्राप्तासि रोदिषि कथं हर्षस्थाने कृतं शुचा ॥ ४५१ ॥
मन्दभाग्येन रामेण सह त्वां योजयन् विधिः । नानुरूपं पुरा चक्रे मयाकार्यधुनोचितम् ॥ ४५२ ॥
मां पतिं देवि मन्यस्व सेवया दाससन्निभम् । मयि दासे तव दासाः खेचर्यः खेचरा अपि ॥ ४५३ ॥
ब्रुवाणे रावणे त्वेवं सीता तस्थावधोमुखी । स्मरन्ती मन्त्रवद्भक्त्या राम इत्यक्षरद्वयम् ॥ ४५४ ॥
जानकीपादयोर्मूर्ध्ना स पपात स्मरातुरः । साप्यपासारयत्पादौ परपुंस्पर्शकातरा । ४५५ ॥
आचुक्रोश च सीतैवं निरनुक्रोश निस्त्रप । अचिराल्लप्स्यसे मृत्युं परस्त्रीकामनाफलम् ॥ ४५६ ॥

१ विद्विषतां शत्रूणा माथो मथनं यस्मात्तत्सम्बोधने। २ अचिन्तयत् । ३ लूनौ पक्षौ यस्य सः । ४ परपुरुषस्पर्शने कातरा ।

तदानीं सङ्मुखा एयुर्मन्त्रिण सारणादय । अन्ये च रक्ष सामन्ता समताद्राक्षसप्रभो ॥ ४५७ ॥
महोत्सवा महोत्साहो महासाहसकृत्पुरीम् । आगमद्रावणो लङ्कामलङ्कर्मीणविक्रम ॥ ४५८ ॥
न यावद्रामसौमित्रिक्षेमोदन्तसमागम । मोक्ष्ये न तावदित्युच्चै सीताभिग्रहमाददे ॥ ४५९ ॥
लङ्कापूर्वदिशि स्थिते सुरवरोद्यानोपमे खेचर,–स्त्रीमा त्रिमधाम्नि देवरमणोद्याने स्वय जानकीम् ।
रक्ताशोकतरोस्तले त्रिजटया धारक्षकैरावृतां, मुक्त्वागाद्दशकन्धर प्रमुदित स्व धाम धाम्ना निधि ॥४६०॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सीताहरणो नाम पञ्चम सर्ग ।



## ॥ अथ षष्ठः सर्गः ॥

इतश्च रामः सम्प्राप्तस्त्वरितं तत्र चापभृत् । अमित्रैः[1] सह सौमित्रिर्यत्राभूद्रणकेलिकृत् ॥ १ ॥
आयान्तं राममालोक्य सौमित्रिरिदमब्रवीत् । आर्यामेकाकिनीं मुक्त्वा किमार्येह त्वमागमः ॥ २ ॥
आहूतः सिंहनादेन तव वैधुर्य[2]लक्ष्मण । लक्ष्मणाहमिहायातो[3] व्याजहारेति राघवः ॥ ३ ॥
लक्ष्मणोऽप्यवदत्सिंहनादोऽकारि मया न हि । श्रुतश्चार्येण तन्नूनं वयं केनापि वञ्चिता ॥ ४ ॥
अपहर्तुं सत्यमार्यामपनीतो[4]ऽस्युपायतः । सिंहनादस्य करणे शङ्के स्तोकं न कारणम् ॥ ५ ॥
तद्गच्छ शीघ्रमेवार्य त्रातुमार्यां महाभुज । हत्वारीनहमप्येष यावदायामि पृष्ठतः ॥ ६ ॥
इत्युक्तो रामभद्रोऽगात् स्वस्थानं तत्र जानकीम् । नापश्यच्च महीपृष्ठे मूर्च्छितो निपपात च ॥ ७ ॥
लब्धसंज्ञः समुच्छाय तं मुमूर्षुं जटायुषम् । ईक्षाञ्चक्रे रामभद्रो दध्याविति च तीक्ष्णधीः ॥ ८ ॥
केनापि दयिता नूनं जह्रे च्छलपरेण मे । तेनापहारक्रुद्धोऽयं महात्मा निहतः खगः ॥ ९ ॥
ततः प्रत्युपकाराय श्रावकस्य जटायुषः । ददौ रामो नमस्कारं परलोकाध्वशम्बलम् ॥ १० ॥
स विपद्याभवत् कल्पे माहेन्द्रे प्रवरः सुरः । रामोऽपि सीतामन्वेष्टुमाटाटव्यामितस्ततः ॥ ११ ॥
इतश्च लक्ष्मणो वीरः खरेण प्राज्यपत्तिना[5] । योद्धुं प्रावर्ततैकोऽपि न सिंहस्य सखा युधि ॥ १२ ॥

---

१ शत्रुभिः । २ वैकल्यचिन्हेन । ३ हे लक्ष्मण । ४ दूरं नीतः । ५ प्राज्या बहवः पत्तयो यस्य तेन ।

अत्रान्तरे च त्रिशिरा खरस्यावरजो भ्रम् । को नामास्मिस्तत्राक्षेप इति ज्येष्ठ यवारयत् ॥ १३ ॥
अथो रथस्थ त्रिशिरोराक्षस समरोधतम् । जघान रामावरजो गणयस्त पतङ्गवत् ॥ १४ ॥
तदा पातालल‍ङ्केशचन्द्रोदरनृपात्मज । विराध सर्वसत्वाहिसैन्यस्तत्र समाययौ ॥ १५ ॥
आरिराधयिषुर्नत्वा विराधो रामसोदरम् । इत्यूचे तव भृत्योऽहमेतेषां त्वद्द्विषां द्विषन् ॥ १६ ॥
चन्द्रोदराख्य निर्वास्य पितर मे महाभुज । पातालल‍ङ्का जगृहुरमी रावणशासय ॥ १७ ॥
क सत्वाक्षोस्तैमोच्चसे द्विषद्विदलने च ते । तथापि भृत्यलेशत्वाद्रणायादिश मां प्रभो ॥ १८ ॥
स्मित्वा च लक्ष्मणोऽनोचद्दन्यमानान्मया द्विष । पश्यामून् विजयो ह्यन्यसाहाय्याद्दोष्मतां ह्रिये ॥ १९ ॥
अद्यप्रभृति ते स्वामी ज्येष्ठो मम रघूद्वह । पातालल‍ङ्काराज्ये च स्थापितोऽसि मयाद्य भो ॥ २० ॥
विरोधिन विराध स्व त दृष्ट्वा लक्ष्मणान्तिके । क्रुद्धोऽधिक खरोऽभ्येत्याभिजल्पश्चैवमब्रवीत् ॥ २१ ॥
तनयो मम शम्बूक क्वास्ते विश्वस्तघातक । विराधेन वराकेण सख्या किं रक्ष्यसेऽधुना ॥ २२ ॥
स्मित्वा चोवाच सौमित्रिस्त्रिशिरा अपि तेऽनुज । भ्रातु पुत्रस्य सोत्कण्ठस्तमनुप्रेषितो मया ॥ २३ ॥
पुन भ्रातरि चोत्कण्ठा चेत्सवापि वलीयसी । नेतु त्वामपि तत्रास्मि सज्ज सज्ज्यधनुर्ननु ॥ २४ ॥
मया प्रमादघातेन पादन्यासेन कुन्थुवत् । तव सूनुर्हतो मूढ तत्र मे पौरुष न हि ॥ २५ ॥
अधुना त्व भटम्मन्यश्चेत्सूत्सहसि कौतुकम् । त्वया प्रीणामि कीनाश वनवासेऽपि सत्यहम् ॥ २६ ॥

---

१ कनीयान् भ्राता । २ सर्वं सबल सैन्य यस्य स । ३ आराधयितुमिच्छु । ४ सूतस्य । ५ छत्तुदलने ६ ज्यया प्रत्यञ्चया सहित सज्य धनुयस्य स । ७ यमम् । ८ सती दाता ।

इत्युक्तवति सौमित्रावमित्रो राक्षसः खरः । खेरं प्रहर्तुमारेभे दन्तीव गिरिसानुनि ॥ २७ ॥
लक्ष्मणोऽपि क्षणेनापि कङ्कपत्रैः सहस्रशः । अम्बरं तिरयामास भानुभिर्भानुमानिव ॥ २८ ॥
भयङ्करः खेचराणां गरीयान् सङ्गरस्तयोः । अजायत श्राद्धदेवदैवतैकमहोत्सवः ॥ २९ ॥
विष्णुनापि रणे यस्य शक्तिरीदृक् खरः स हि । प्रतिविष्णोरप्यधिको व्योमन्येवं गिरोऽभवन् ॥ ३० ॥
कालक्षेपो वधेऽस्यापीत्यमर्षाल्लज्जितः स्वयम् । सौमित्रिः खरमूर्धानं क्षुरप्रेणाच्छिदत् क्षणात् ॥ ३१ ॥
दूषणो लक्ष्मणेनापि ससैन्यो योद्धुमुद्यतः । संजह्रे कुञ्जर इव सयूथो दववह्निना ॥ ३२ ॥
ततः सार्धं विराधेन चचले रामसोदरः । स्फुरद्वामेक्षणः काममाशंसन्नार्ययोः शुभम् ॥ ३३ ॥
गत्वा दूरमपश्यच्च रामभद्रं द्रुमान्तरे । सीताविरहितं दृष्ट्वा विषादं परमं ययौ ॥ ३४ ॥
पुरःस्थमपि सौमित्रिमपश्यन् रघुपुङ्गवः । सीताविरहशल्येन पीडितः खेऽब्रवीदिति ॥ ३५ ॥
वनं भ्रान्तमिदं तावन्मया दृष्टा न जानकी । युष्माभिः किं न सा दृष्टा ब्रूत हे वनदेवताः ॥ ३६ ॥
अमुष्मिन् भीषणेऽरण्ये भूतश्वापदसङ्कुले । विमुच्यैकाकिनीं सीतां लक्ष्मणाय गतोऽस्मि हा ॥ ३७ ॥
रक्षोभटसहस्राग्रे संयत्येकं च लक्ष्मणम् । मुक्त्वा भूयोऽहमत्रागामहो धीर्मम दुर्धियः ॥ ३८ ॥
हा सीते निर्जनेऽरण्ये कथं मुक्ता मया प्रिये । हा वत्स लक्ष्मण कथं मुक्तोऽसि रणसङ्कटे ॥ ३९ ॥
एवं ब्रुवन् रामभद्रो मूर्छया न्यपतत् क्षितौ । क्रन्दद्भिः पक्षिभिरपि वीक्ष्यमाणो महाभुजः ॥ ४० ॥
लक्ष्मणोऽप्यब्रवीदेवमार्यायं किमिदं ननु । तवायं लक्ष्मणो भ्राता जित्वारीन् समुपास्थितः ॥ ४१ ॥

१ तीक्ष्णं यथा स्यात्तथा । २ किरणैः । ३ श्राद्धदेवो यमः । ४ आकाशे आकाशाभिमुख इत्यब्रवीदित्यर्थः । ५ रणे ।

पीयूषेणेव ससिक्तो रामभद्रस्तया गिरा । लब्धसञ्ज्ञो ददर्शाग्रे सस्वजे च निजानुजम् ॥ ४२ ॥
उदश्रुरूचे सौमित्रि सिंहनादस्य कारण । जानकीहरणमिद ध्रुव कस्यापि मायिन ॥ ४३ ॥
तस्य प्राणै सहैवाहमाहरिष्यामि जानकीम् । तत्प्रवृत्त्युपलम्भाय सम्प्रति प्रयतामहे ॥ ४४ ॥
पाताललङ्काराज्य च स्थाप्यतामेष पैतृके । विराध प्रतिपन्न हि मयास्मै खराहवे ॥ ४५ ॥
सीताप्रवृत्तिमानेतु विद्याधरभटानथ । प्रजिघाय विराधस्तावाराधयिषु प्रभू ॥ ४६ ॥
काकुत्स्थौ तस्थतुस्तत्र शोकानलकरालितौ । मुहुर्मुहुर्नि श्वसन्तौ निर्दशन्तौ क्षुधाधरम् ॥ ४७ ॥
दूर विद्याधरा भ्रान्त्वा विराधप्रहिताश्च ते । सीताप्रवृत्ति न प्रापुस्तत्रैत्यास्थुरधोमुखा ॥ ४८ ॥
तेषामधोमुखत्वेन ज्ञात्वा रामोऽब्रवीदिति । स्वामिकार्ये यथाशक्ति साधु युष्माभिरुद्यतम् ॥ ४९ ॥
सीताप्रवृत्तिर्न प्राप्ता को दोषस्तत्र वो भटा । दैवस्य विपरीतस्य के यूय कोऽपरोऽथवा ॥ ५० ॥
नत्वा विराधोऽप्यवद मा निर्वेद कृथा प्रभो । अनिर्वेद श्रियो मूल तव भृत्योऽस्मि नन्वहम् ॥ ५१ ॥
एहि पाताललङ्काया निवेशयितुमद्य माम् । सीताप्रवृत्ति सुलभा तत्र भर्तुर्भविष्यति ॥ ५२ ॥
विराधेन ससैन्येन ततो राम सलक्ष्मण । ययौ पाताललङ्काया पुर्या परिसरावनौ ॥ ५३ ॥
तत्रारिसूदन सुन्दो नाम रक्ष खरात्मज । सम्मुखीनो रणायागान्महासैन्यसमावृत ॥ ५४ ॥
पुरोगेण विराधेन सम पूर्वविरोधिना । सुन्दश्चक्रे रण घोर सद्य पितृवधक्रुधा ॥ ५५ ॥
अथो रणस्थे काकुत्स्थे सुन्दश्चन्द्रणखागिरा । सद्य अपस्य लङ्काया रावण शरण ययौ ॥ ५६ ॥

१ प्रतिज्ञातम् । २ खरसङ्ग्रामे ।

ततः पाताललङ्कायां प्रविश्य रघुपुङ्गवौ । निवेशयामासतुस्तं विराधं पैतृके पदे ॥ ५७ ॥
प्रासादे खरराजस्य तस्थतू रामलक्ष्मणौ । युवराज इव पुनर्विराधः सुन्दवेश्मनि ॥ ५८ ॥
इतश्च साहसगतेश्चिरं ताराभिलाषिणः । सिद्धा प्रतारणी विद्या हिमवद्गिरिकन्दरे ॥ ५९ ॥
तया सुग्रीवरूपः स कामरूप इवामरः । जगाम किष्किन्धपुरे द्वितीयोऽर्क इवाम्बरे ॥ ६० ॥
क्रीडार्थं बहिरुद्याने सुग्रीवे च गते तदा । स तदन्तःपुरमगात्तारादेवीविभूषितम् ॥ ६१॥
आगाच्च सत्यसुग्रीवो द्वारि च द्वारपालकैः । स्खलितोऽग्रे गतो राजा सुग्रीव इति वादिभिः ॥ ६२ ॥
सुग्रीवद्वितयं दृष्ट्वा सन्देहाद्वालिनन्दनः । शुद्धान्तविप्लवं त्रातुं तद्द्वारं त्वरितो ययौ ॥ ६३ ॥
शुद्धान्ते विटसुग्रीवः प्रविशन् वालिसूनुना । मार्गाद्रिणा सरित्पूर इव प्रस्खलितस्ततः ॥ ६४ ॥
अथामिलन् सैनिकानामक्षौहिण्यश्चतुर्दश । आहूतानि जगत्सारसर्वस्वानीव सर्वतः ॥ ६५ ॥
द्वयोरपि तयोर्भेदमजानन्तोऽथ सैनिकाः । सत्यसुग्रीवतोऽर्धेऽर्धं विटसुग्रीवतोऽभवन् ॥ ६६ ॥
ततः प्रववृते युद्धं सैन्ययोरुभयोरपि । कुन्तपातैर्दिवं कुर्वन्नुल्कापातमयीमिव ॥ ६७ ॥
युयुधे सादिना सादी निषादी च निषादिना । पदातिना पदातिश्च रथिको रथिकेन च ॥ ६८ ॥
चतुरङ्गचमूचक्रविमर्दादथ मेदिनी । अवाप कम्पं मुग्धेव प्रौढप्रियसमागमात् ॥ ६९ ॥
एह्येहि रे परगृहप्रवेशिन्निति त ब्रुवन्[१] । विटसुग्रीवमुद्ग्रोत्रः सुग्रोवो योद्धुमाह्वत ॥ ७० ॥
ततश्च विटसुग्रोवो मत्तेभ इव तर्जितः । ऊर्जितं गर्जितं कुर्वन् सम्मुखीनो युधेऽभवत् ॥ ७१ ॥

---

[१] अन्त दुरस्योपद्रवम् । २ हे परगृहप्रवेशिन् इति सम्बोधनम् ।

युयुधाते महायोधौ तौ क्रोधारुणलोचनौ । विदधानौ जगत्त्रास कीनाशस्येव सोदरौ ॥ ७२ ॥
तौ निशातैर्निशातानि शस्त्र शस्त्राण्यथो मिथ । चिच्छिदाते तृणच्छेद रणच्छेका[1]भावपि ॥ ७३ ॥
शस्त्रखण्डैरुच्छलद्भिर्दुद्रुवे खेचरीगण । महायुद्ध तयोर्वृक्षखण्डो महिषयोरिव ॥ ७४ ॥
तौ छिन्नास्त्रावथान्योऽन्यममर्षणशिरोमणी । मल्लयुद्धनास्फलतां पर्वताविव जङ्गमौ ॥ ७५ ॥
उत्पतन्तौ क्षणाद्व्योम्नि निपतन्तौ क्षणाद्भुवि । ताम्रचूडाविवाभाता वीरचूडामणी उभौ ॥ ७६ ॥
तौ द्वावपि महाप्राणौ मिथो जेतुमनीश्वरौ । अपसृत्य च दूरेण वृषभाविव तस्थतु ॥ ७७ ॥
साहाय्यकाय सुग्रीव समाहूयाञ्जनासुतम् । भूयोऽपि युयुधे मायासुग्रीवेणोग्रकर्मणा ॥ ७८ ॥
हनूमत पश्यतोऽपि द्वयोर्भेदमजानत । कुट्टयामास सुग्रीव विटसुग्रीव उत्कट ॥ ७९ ॥
पुनर्युद्धेन सुग्रीव खिन्न खिन्नतनुस्तत । बहिर्निर्गत्य किष्किन्धपुरादावासमग्रहीत् ॥ ८० ॥
तत्रैव विटसुग्रीवस्तस्थावस्वस्थमानस । अन्त पुरप्रवेश च न लेभे वालिनन्दनात् ॥ ८१ ॥
सुग्रीवो न्यञ्चितग्रीवमथैव पर्यचिन्तयत् । अहो स्त्रीलम्पट कूटपटु कोऽप्येष नो द्विषन् ॥ ८२ ॥
आत्मीया अप्यनात्मीया द्विषन्मायावशीकृता । अहो बभूवुस्तदसावनवस्कन्दो नि र्हय ॥ ८३ ॥
मायापराक्रमोत्कृष्ट कथ वध्यो द्विषन्मया । धिग्मां पराक्रमभ्रष्ट वालिनाम्नस्त्रपाकरम् ॥ ८४ ॥
धन्यो महाबलो वाली योऽखण्डपुरुषव्रत । राज्य तृणमिव त्यक्त्वा जगाम परम पदम् ॥ ८५ ॥
चन्द्ररश्मि कुमारो मे बलायान् जगतोऽप्यसौ । किं तु द्वयोरभेदज्ञ क रक्षतु निहन्तु कम् ॥ ८६ ॥

---

१ रणे छेकौ चतुरौ । २ वृक्षसमूह । ३ हनूमन्तम् । ४ नञर्थीये यथा तथा । लक्षग्राम: ।

इदं तु विदधे साधु साध्वहो चन्द्ररश्मिना । तस्य पापीयसो रुद्धं शुद्धान्ते यत्प्रवेशनम् ॥ ८७ ॥
वधाय बलिनोऽमुष्य बलीयासं श्रयामि कम् । यद्घात्या एव स्पिवः स्वतोऽपि परतोऽपि वा ॥ ८८ ॥
भूर्भुवःस्वस्त्रयीवीर मरुत्तमखभञ्जनम् । भजामि विद्विषद्घातहेतवे किं दशाननम् ॥ ८९ ॥
असौ किं तु प्रकृत्या स्त्रीलोलस्त्रैलोक्यकण्टकः । तं च मां च निहत्याशु तारामादास्यते स्वयम् ॥ ९० ॥
ईदृशे व्यसने प्राप्ते साहाय्यं कर्तुमीश्वरः । आसीत् खरः खरतरो राघवेण हतः स तु ॥ ९१ ॥
तावेव रामसौमित्री गत्वा मित्रीकरोमि तत् । तत्कालोपनतस्यापि तौ विराधस्य राज्यदौ ॥ ९२ ॥
तौ तु पाताललङ्कायामलङ्कर्मीणदोर्बलौ । विराधस्योपरोधेन तथैवाद्यापि तिष्ठतः ॥ ९३ ॥
एवं विमृश्य सुग्रीवोऽनुशिष्य रहसि स्वयम् । विराधपुर्यां विश्वासभूतं दूतं न्ययोजयत् ॥ ९४ ॥
गत्वा पाताललङ्कायां विराधाय प्रणम्य सः । स्वामिव्यसनवृत्तान्त कथयित्वाब्रवीदिदम् ॥ ९५ ॥
महति व्यसने स्वामी पतितो नस्तदीदृशे । राघवौ शरणीकर्तुं तव द्वारेण वाञ्छति ॥ ९६ ॥
द्रुतमायातु सुग्रीवः सतां सङ्गो हि पुण्यतः । तेनेत्युक्तो दूत एत्य सुग्रीवाय शशंस तत् ॥ ९७ ॥
प्रचचालाथ सुग्रीवोऽश्वानां ग्रैवेयैकस्वनैः । दिशो मुखरयन् सर्वा वेगाद्दूरमदूरयन् ॥ ९८ ॥
पातालङ्कां स प्राप क्षणेनाप्युपवेश्मवत् । विराधमुपतस्थे चाभ्युत्तस्थौ सोऽपि तं मुदा ॥ ९९ ॥
विराधोऽपि पुरोभूय रामभद्राय तायिने । तं नमस्कारयामास तद्दुःखं च व्यजिज्ञपत् ॥ १०० ॥
सुग्रीवोऽप्येवमूचेऽस्मिन् दुःखे त्वमसि मे गतिः । क्षुते हि सर्वथा मूढे शरणं तरणिः खलु ॥ १०१ ॥

१ स्त्रीलम्पट । २ मायासुग्रीवम् । ३ आग्रहेण । ४ कण्ठाभरणस्वनैः । ५ समीपीकुर्वन । ६ रक्षित्रे । ७ नष्टे । ८ सूर्यः ।

स्वयं दुःख्यपि तद्दुःखं छेत्तुं रामोऽभ्युपागमत् । स्वकार्यादधिको यत्नः परकार्ये महीयसाम् ॥ १०२ ॥
सीताहरणवृत्तान्तं विराधेनावबोधितः । रामं विज्ञापयामास सुग्रीवोऽथ कृताञ्जलिः ॥ १०३ ॥
त्रायमाणस्य ते विश्वं तथा द्योतयतो रवेः । न कापि कारणापेक्षा देव वच्मि तथाप्यदः ॥ १०४ ॥
त्वत्प्रसादात्क्षतारिः सन् ससैन्योऽपि तवानुगः । आनेष्यामि प्रवृत्तिं च सीताया नचिरादहम् ॥ १०५ ॥
ससुग्रीवः प्रतस्थे च किष्किन्धां प्रति राघवः । विराधमनुगच्छन्तं सम्बोध्य विससर्ज च ॥ १०६ ॥
रामभद्रेऽथ किष्किन्धापुरद्वारमधिष्ठिते । सुग्रीवो विटसुग्रीवमाह्वास्त रणकर्मणे ॥ १०७ ॥
निनदन् विटसुग्रीवोऽप्यागादाह्वानमात्रतः । रणाय नालसाः शूरा भोजनाय द्विजा इव ॥ १०८ ॥
दुर्धरैश्चरणन्यासैः कम्पयन्तौ वसुन्धराम् । तावुभावप्ययुध्येतां मत्ताविव वनद्विपौ ॥ १०९ ॥
रामः सरूपौ तौ दृष्ट्वा कोऽस्मदीयः परश्च कः । इति संशयतस्तस्थावुदासीन इव क्षणम् ॥ ११० ॥
भवत्वेवं तावदिति विमृशन् रघुपुङ्गवः । वज्रावर्ताभिधधनुष्टङ्कारमकरोत्ततः ॥ १११ ॥
धनुष्टङ्कारतस्तस्मात् सा साहसगतेः क्षणात् । रूपान्तरकरी विद्या हरिणीव पलायत ॥ ११२ ॥
विमोह्य मायया सर्वं परदारान् रिरंससे । पापारोपय रे चापमिति रामस्ततर्ज तम् ॥ ११३ ॥
एकेनापीषुणा प्राणांस्तस्याहार्षीद्रघूद्वहः । न द्वितीया चपेटा हि हरेर्हरिणमारणे ॥ ११४ ॥
विराधमिव सुग्रीवं रामो राज्ये न्यवेशयत् । सुग्रीवोऽपि स्वलोकेन प्राग्वद्देवानमस्यत ॥ ११५ ॥
त्रयोदश निजाः कन्या दातुमत्यन्तसुन्दरीः । रामभद्रमयाचिष्ट प्राञ्जलिर्वानरेश्वरः ॥ ११६ ॥

---

१ रन्तुमिच्छसि ।

रामोऽप्युवाच सुग्रीवं सीतान्वेषणहेतवे । प्रयतस्व किमेताभिरपरेणापि वस्तुना ॥ ११७ ॥
इत्युक्त्वा बहिरुद्याने गत्वा तस्थौ रघूद्वहः । सुग्रीवोऽपि तदादेशात्प्रविवेश निजां पुरीम् ॥ ११८ ॥
इतश्च पुर्यां लङ्कायां रावणान्तःपुरस्त्रियः । खरादिहननोदन्तान्मन्दोदर्यादयोऽरुदन् ॥ ११९ ॥
रुदती सह सुन्देन स्वसा चन्द्रणखापि च । प्राविशद्रावणगृहं पाणिभ्यां कुट्टयन्त्युरः ॥ १२० ॥
दृष्ट्वा च रावणं कण्ठे लगित्वोच्चतरस्वरम् । रुदती निजगादैवं दैवेन निहतास्मि हा ॥ १२१ ॥
हतः पुत्रो हतो भर्ता हतौ च मम देवरौ । चतुर्दश सहस्राणि हताश्च कुलपत्तयः ॥ १२२ ॥
पातालल‍ङ्का चाच्छिन्ना राजधानी त्वदर्पिता । दर्पवञ्चिविंद्विपञ्चिर्बन्धो जीवत्यपि त्वयि ॥ १२३ ॥
जीवग्राहं प्रणश्याहं सुन्देन सह सूनुना । त्वां शरण्यमिहायाता ब्रूत तिष्ठामि शाधि माम् ॥ १२४ ॥
अवोचयद्दशास्योऽपि रुदन्तीं ता ससौष्ठवः । त्वद्भर्तृपुत्रहन्तारं हनिष्याम्यचिरादपि ॥ १२५ ॥
शोकेन तेन [1]वैदेहीविप्रलम्भरुजापि च । कालच्युत इव द्वीपी तल्पे तस्थौ निपत्य सः ॥ १२६ ॥
अथ मन्दोदरी देवी तमुपेत्याभ्यधादिति । कथं प्राकृतवत् स्वामिन्निश्चेष्ट इव तिष्ठसि ॥ १२७ ॥
रावणोऽप्यब्रवीदेवं वैदेहीविरहज्वरात् । न चेष्टितुं न वक्तुं च न चालोकयितुं क्षमः ॥ १२८ ॥
मया चेज्जीवता तेऽर्थस्तन्मानं [2]प्रोज्झ्य मानिनि । गत्वानुनय वैदेहीं यथा मयि रिरंसते ॥ १२९ ॥
नान्यनारीमनिच्छन्तीं भुञ्जे जातुचिदप्यहम् । अर्गलानियमो ह्यत्र ममास्ति गुरुसाक्षिकः ॥ १३० ॥
पीडिता पीडया पत्युः कुलीना सापि तत्क्षणम् । जगाम देवरमणोद्याने सीतामुवाच च ॥ १३१ ॥

१ सीताविरहपीडया । २ त्यक्त्वा

एषा मन्दोदरी नाम दशाननमहिष्यहम् । अ॑पत्स्ये त्वयि दासीत्वं भजस्व दशकन्धरम् ॥ १३२ ॥
सीते त्वमेव धन्यासि यां सिसेविषते॑ऽनिशम् । विश्वसेव्याङ्घ्रिकमल पतिर्मम महाबल ॥ १३३ ॥
अद्यापि तव रामण भूचरेण तपस्विना । पश्चिमाङ्गेण किं पत्या प्राप्यते चेद्दशानन ॥ १३४ ॥
इत्या बभाषे सीतव क सिंह क च जम्बुक । क सुपर्ण क वा काक क राम क्व च ते पति ॥ १३५ ॥
दम्पतित्वमहो युक्त तव तस्य च पाप्मन । रिरंसुरेकोऽन्यस्त्रीषु दूतीभवति चापरा ॥ १३६ ॥
द्रष्टुमप्युचिता नासि किमु सम्भाषितु हले । स्थानादितो गच्छ गच्छ त्यज दृष्टिपथं मम ॥ १३७ ॥
रावणोऽपि तदा तत्राजगाम निजगाद च । कुपितासि कुत सीते दासी मन्दोदरी तव ॥ १३८ ॥
दासस्ते स्वयमप्यस्मि प्रसाद कुरु देवि मे । जानकि त्व जनमम प्रीणासि न दृशापि किम् ॥ १३९ ॥
सीता पराङ्मुखीभूयेत्यभाषत महासती । कृतान्तदृष्ट्या दृष्टोऽसि हर मा रामगेहिनीम् ॥ १४० ॥
धिगाशां ते हताशस्याप्रार्थितप्रार्थकस्य रे । जीविष्यसि कियद्रामे सानुजे द्विपदन्तके ॥ १४१ ॥
तयेत्याक्रुश्यमानोऽपि भूयो भूयो दशानन । तथैवोवाच धिगहो कामावस्था बलीयसी ॥ १४२ ॥
अत्रान्तरे विपन्मग्ना सीता द्रष्टुमिवाक्षम । निममज्ज निधिर्भासां पश्चिमे लवणाम्बुधौ ॥ १४३ ॥
प्रावर्तत निशा घोरा घोरबुद्धिश्च रावण । सीतायै क्षोभकामा च उपसर्गान् प्रचक्रमे ॥ १४४ ॥
घूत्कारिणो महाघूका फेत्कुर्वाणाश्च फेरव । वृका विचित्र क्रन्दन्त ओतवोऽन्योऽन्ययोधिन ॥ १४५ ॥
पुच्छाच्छोटकृतो व्याघ्रा फूत्कुर्वाणा फणाभृत । पिशाचप्रेतवेतालभूताश्चात्तकर्त्रिका ॥ १४६ ॥

१ प्राप्स्यामि । २ सेवितुमिच्छति । ३ कर्त्री कतरी ।

उल्ललन्तो दुर्ललिता यमस्येव समासदः । विकृता रावणेनेयुरुत्पसीतं भयङ्कराः ॥ १४७ ॥

॥ त्रिभिर्विशेषकम् ॥

ध्यायन्ती मनसा पञ्चपरमेष्ठिनमस्क्रियाम् । सीता तस्थावभीतेव न तु भेजे दशाननम् ॥ १४८ ॥
विभीषणः प्रभाते तु निशावृत्त निशम्य तत् । आगादुपदशग्रीवं सीतां चैवमवोचत ॥ १४९ ॥
भद्रे का त्वं कुतः स्थानात्कस्य चासि किमत्र च । मा भैषीः सर्वमाख्याहि परस्त्रीसोदरस्य मे ॥ १५० ॥
तं मध्यस्थं परिज्ञाय सीताप्याख्यदधोमुखी । अहं जनकपुत्र्यस्मि सीता भामण्डलस्वसा ॥ १५१ ॥
गृहिणी रामभद्रस्य स्नुषा दशरथस्य च । समं पत्या सानुजेन दण्डकारण्यमागमम् ॥ १५२ ॥
तत्रैकदा देवरो मे क्रीडयेतस्ततो भ्रमन् । खे महासिं ददर्शैकं जग्राह च कुतूहलात् ॥ १५३ ॥
अभ्यर्णस्थां वंशजालीं तेन चिच्छेद सोऽसिना । अज्ञानाच्च तदन्तःस्थतत्साधकशिरोऽच्छिदत् ॥ १५४ ॥
अयुध्यमानोऽनागस्कः कोप्ययं हा हतो मया । सानुताप इव भ्रातुः समीपं स उपागमत् ॥ १५५ ॥
तस्यासिसाधकस्यैव काचिदुत्तरसाधिका । मद्देवरस्यानुपद तत्र कोपादुपागमत् ॥ १५६ ॥
भर्तारं मम दृष्ट्वा चाद्भूतरूपपुरन्दरम् । अयाचीद्रन्तुकामार्ताविज्ञासीत्तां च मत्पतिः ॥ १५७ ॥
सागच्छदागमदथ रक्षसां बलमुल्बणम् । क्ष्वेडां वैधुर्यसङ्केतीकृत्यागाल्लक्ष्मणो युधि ॥ १५८ ॥
मायाक्ष्वेडामथो कृत्वा दूरं नीत्वा च मत्पतिम् । दुराशोऽहृत मामेष स्वच्छायेव राक्षसः ॥ १५९ ॥
तच्छ्रुत्वा रावणं नत्वा बभाषे च विभीषणः । कुलस्य दूषणमिदं स्वामिन् कर्म त्वया कृतम् ॥ १६० ॥

---

१ उच्छलन्तः । २ दुर्विनीता । ३ निरपराधी । ४ वैधुर्ये सङ्कटे सङ्केतभूतां कृत्वा ।

न यावदिह हन्तु न काकुत्स्थोऽभ्येति सानुज । मुच्यतां तावदाश्वेव नीत्वा सीता तदन्तिके ॥ १६१ ॥
इत्युक्त रावण क्रोधारुणाक्षोऽप्यब्रवीदिति । किमिद भाषसे भीरो व्यस्मार्षीर्मम पौरुषम् ॥ १६२ ॥
सीतानुनीतावश्य हि मम भार्या भविष्यति । तौ चायातौ हनिष्यामि वराकौ रामलक्ष्मणौ ॥ १६३ ॥
ऊचे विभीषणो भ्रात सत्य तज्ज्ञानिनो वच । यद्रामपत्न्या सीताया कृते न कुलसक्षय ॥ १६४ ॥
भक्तस्य च घोर्मे धाम्न मन्यसे नान्यथा कथम् । मया हतो दशरथ स तावज्जीवित कथम् ॥ १६५ ॥
न यद्यप्यन्यथाभावि भावि वस्तु महाभुज । तथापि प्रार्थ्यसे मुञ्च सीता न कुलघातिनीम् ॥ १६६ ॥
अनाकर्णितकल्पेव विभीषणगिरामथ । आरोप्य पुष्पके सीता भ्रमन्नेवमदर्शयत् ॥ १६७ ॥
अमी क्रीडाद्रयो रत्नसानव स्वादुनिर्झरा । नन्दनोद्यानसोदर्याण्यमून्युपवनानि च ॥ १६८ ॥
यथाकामीनदीनि धारावेश्मान्यमूनि च । अमूष केलिकुल्य सहसा हसगामिनि ॥ १६९ ॥
एतानि रतिधेर्मानि स्वर्गलब्धोपमानि च । मया सह रमस्वैषु सुभ्रु यत्र रतिस्तव ॥ १७० ॥
ध्यायन्ती रामपादाने हसीव जनकात्मजा । वसुधरेव धैर्येण चुक्षोभ न हि वक्षिरा ॥ १७१ ॥
सर्वेषु रम्यस्थानेषु भ्रान्त्वा भ्रान्त्वा दशानन । मुमोचाशोकवनिकामध्ये भूयोऽपि जानकीम् ॥ १७२ ॥
प्रक्ष्योन्मत्तमिव ज्येष्ठ वाचोयुक्तगोचरम् । विभीषणो मन्त्रयितु कुलामात्यानथाह्वयत् ॥ १७३ ॥
ऊचे च भो कुलामात्या कामाद्या ह्यान्तरद्विष । मूता इवैते तेष्वेकोऽप्यु मथ्नाति प्रमादिनम् ॥ १७४ ॥

१ रत्नशिखरा । २ नम्नायवनसत्वानि । ३ यथेच्छनृथीनि ।

कामं कामातुरः स्वामी कामस्त्वेको हि दुर्जयः । किं पुनः कृतसाहाय्यः परनारीरिरंसया ॥ १७५ ॥
तदतः परमत्यन्तं महति व्यसनार्णवे । पतिष्यति पतिर्लङ्कापुर्यां दोष्मानपि द्रुतम् ॥ १७६ ॥
अथ ते मन्त्रिणः प्रोचुर्वयं नाम्नैव मन्त्रिणः । त्वमेव मन्त्री मन्त्रात्तु यस्येदृग्दूरदर्शिता ॥ १७७ ॥
किं करोति पर मन्त्रः प्रभौ कामवशंवदे । मिथ्यादृष्टौ जने जैनधर्मस्येवोपदेशनम् ॥ १७८ ॥
सुग्रीवहनुमन्मुख्या मिलिता राघवस्य ते । महात्मनां न्यायभाजां कः पक्षं नावलम्बते ॥ १७९ ॥
सीतानिर्मित्तो इक्ष्वाकाज्ञान्मुक्तो नः कुलक्षयः । तथापि पुरुषाधीनं कर्तव्यं समयोचितम् ॥ १८० ॥
ततो बिभीषणश्चक्रे यन्त्रे यन्त्रादिरोपणम् । अनागतं हि पश्यन्ति मन्त्रिणो मन्त्रचक्षुषा ॥ १८१ ॥
इतश्च कालं कमपि कथमप्यत्यवाहयत् । सौमित्रिणाश्वास्यमानो रामो विरहपीडितः ॥ १८२ ॥
अनुशिष्याथ रामेण प्रेषितो लक्ष्मणः स्वयम् । प्रतस्थे प्रति सुग्रीवं तूणचापकृपाणभृत् ॥ १८३ ॥
दलयन् क्ष्मां पदन्यासैः कम्पयस्तं च पर्वतम् । वेगान्दोलितदोःस्पर्शान्मार्गवृक्षांश्च पातयन् ॥ १८४ ॥
उत्कटभ्रुकुटीभीमललाटोऽरुणलोचनः । भीतैर्द्वाःस्थैर्मुक्तमार्गः प्राप सुग्रीववेश्म सः ॥ १८५ ॥
॥ युग्मम् ॥
आयातं लक्ष्मणं श्रुत्वा निर्गत्यान्तःपुराद्द्रुतम् । उपतस्थे कपिराजः कम्पमानवपुर्भयात् ॥ १८६ ॥
ऊचे च लक्ष्मणः क्रुद्धः कृतकृत्योऽसि वानर । सुखं तिष्ठसि निःशङ्कः स्वान्तःपुरसमावृतः ॥ १८७ ॥
स्वामी तरुतलासीनो दिवसानब्दसन्निभान् । यथात्येति न तद्वेत्सि प्रतिपन्नं च विस्मृतम् ॥ १८८ ॥

---

१ परनारीरिरंसया कृतं साहाय्यं यस्यैतादृशः कामो दुर्जयस्तत्र किं वक्तव्यमित्यर्थः । २ पृथ्वीम् ।

सीताप्रवृत्तिमानेतुमुपेक्षिष्टस्त्वाधुनापि हि । मा साहसगतेर्मार्गे गम सङ्कुचितो न स ॥ १८९ ॥
पतित्वा पादयोस्तस्य सुग्रीवोऽथाब्रवीदिति । प्रसीदैक प्रमाद मे सहस्वासि प्रभुर्यत ॥ १९० ॥
एवमाराध्य सौमित्रिमग्रे कृत्वा कपीश्वर । द्रुत ययौ रामभद्र नमश्चक्रे च भक्तित ॥ १९१ ॥
इत्यादिशच्च स्वान् सैन्यान् भो भो सर्वेऽपि दोर्भृत । सर्वत्रास्खलिता यूय गवेषयत मैथिलीम् ॥ १९२ ॥
इत्युक्तास्तेन ते सैन्या द्वीपष्वद्रिषु सिन्धुषु । भूमिरन्ध्रेष्वथान्यत्र त्वरितत्वरित ययु ॥ १९३ ॥
सीताहरणमाकर्ण्य तदा भामण्डलोऽपि हि । आगमद्राममस्थाच्च म हृात्यन्तदु खित ॥ १९४ ॥
विराधोऽपि समं सैन्यै स्वामिव्यसनपीडित । एत्य शुश्रूषमाणोऽस्थात्तत्रैव चिरपत्तिवत् ॥ १९५ ॥
सुग्रीवोऽपि स्वय गच्छन् कम्बुद्वीपमुपाययौ । तं च रत्नजटी दृष्ट्वा दूरादेवमचिन्तयत् ॥ १९६ ॥
सस्मृत्य किं समागमत्सप्रेष्यम दशमौलिना । मद्वधाय महाबाहु सुग्रीवो वानरेश्वर ॥ १९७ ॥
हृता विद्या दशास्येन पुरा तावन्महौजसा । इदानीमपि मे प्राणान् हरिष्यति हरीश्वर ॥ १९८ ॥
इति चिन्तापर त प्राक् सुग्रीवोऽगादुवाच च । माम्युदस्था कथ मा त्व व्योमयानेऽलसोऽसि किम् ॥१९९॥
सोऽप्यभ्यधाद्दशास्येन विद्या मे सर्वतो हृता । जानकीं हरतस्तस्य युद्धे ह्यहमुपस्थित ॥ २०० ॥
ततश्च रामपादान्ते स नीत कपिकेतुना । तेन विज्ञापित सीतोदन्तमेव व्यजिज्ञपत् ॥ २०१ ॥
देव देवी नृशसेन सती सीता दुरात्मना । हृता लङ्कापुरीशेन विद्या च मम कुप्यत ॥ २०२ ॥
हा राम वत्स सौमित्रे भ्रातर्भामण्डलेति च । देव्यां रुदत्यां सीतायामकृष्य दशमौलये ॥ २०३ ॥

१ स साहसगतेर्मार्गो मृत्युरूपो न सङ्कुचित तथापि मरण भविष्यतीति ध्वनि । २ राम इव ।

सीतोदन्तेन तेनाथ मुदितो रघुपुङ्गवः । सुसङ्गीतपुरेशं रत्नजटिनमाश्लिषत् ॥ २०४ ॥
भूयो भूयोऽपि पप्रच्छ सीतोदन्तं रघूद्वहः । भूयो भूयोऽपि सोऽप्याख्यत्तन्मनःप्रीतिहेतवे ॥ २०५ ॥
अपृच्छद्रामभद्रस्तान् सुग्रीवादीन्महाभटान् । इतः कियति दूरे सा लङ्कापूस्तस्य रक्षसः ॥ २०६ ॥
तेऽप्यूचुः किं तया पुर्यासन्नयाथ दविष्ठया । रावणस्य जगज्जिष्णोर्यत्सर्वे तृणवद्वयम् ॥ २०७ ॥
रामोऽप्यूचे कृतं तस्य जय्याजय्यविचिन्तया । दर्शनप्रतिभूकल्पंस्तं दर्शयत केवलम् ॥ २०८ ॥
तस्य दर्शितमात्रस्य सामर्थ्यं ज्ञास्यथाचिरात् । सौमित्रिमुक्तनाराचपीयमानगलासृजः ॥ २०९ ॥
बभाषे लक्ष्मणोऽप्येवं क एष ननु रावणः । सारमेय इवासारच्छलेनैव चकार यः ॥ २१० ॥
क्षत्राचारेण तस्याहं छेत्स्यामि च्छलिनः शिरः । सङ्ग्रामनाटकं यूयं सभ्यीभूयैव पश्यत ॥ २११ ॥
जाम्बवान् व्याजहाराथ सर्वं वो युज्यते परम् । यो हि कोटिशिलोत्पाटी स हनिष्यति रावणम् ॥ २१२ ॥
साधुनानन्तवीर्येणाख्यातं ज्ञानवता इदः । अस्मत्प्रत्ययहेतोस्तत्समुत्पाटय तां शिलाम् ॥ २१३ ॥
एवमस्त्वित्युक्तवन्तं ते नयन्ति स्म लक्ष्मणम् । सपदि व्योमयानेन यत्र कोटिशिलास्ति सा ॥ २१४ ॥
उच्चिक्षेप शिलां दोष्णा लक्ष्मणस्तां लतामिव । साधु साध्वित्युच्यमानस्त्रिदशैः पुष्पवर्षिभिः ॥ २१५ ॥
सञ्जातप्रत्ययास्तेऽपि व्योमयानेन पूर्ववत् । किष्किन्धाया समानिन्युर्लक्ष्मणं रामसन्निधौ ॥ २१६ ॥
कपिवृद्धास्ततः प्रोचुर्युष्मत्तो रावणक्षयः । आदौ प्रेष्यो द्विषां दूत इति नीतिमतां स्थितिः ॥ २१७ ॥

१ समीपस्थया । २ दर्शने प्रतिभूवत् साक्षिवत् । ३ नोऽस्माकम् । ४ लक्ष्मणेन मुक्तेन नाराचेन पीयमान कण्ठशोणितं यस्य सः ।

सन्देशहारकेणापि यदि सिध्येत्प्रयोजनम् । पर्याप्तं स्वयमुद्योगकर्मणा भूभुजां तदा ॥ २१८ ॥
समर्थः प्रेष्यतां तत्र कोऽपि दूतो महाभुजः । सा तु प्रवेशनिष्काशा लङ्का हि श्रूयते क्षितौ ॥ २१९ ॥
गत्वा दूतः स लङ्कायां भणिष्यति विभीषणम् । सीतार्पणकृते रक्षःकुले स खलु नीतिवान् ॥ २२० ॥
सीतां मोचयितुं सोऽपि रावणं बोधयिष्यति । रावणेन त्वदज्ञातस्त्वामेष्यति तदैव हि ॥ २२१ ॥
एवं वचसि तेषां तु रामेणानुमते सति । श्रीभूर्तिं प्रेष्य सुग्रीवो हनूमन्तमथाहृत ॥ २२२ ॥
अथ रामं समासीनं सुग्रीवादिसमावृतम् । नमश्चकार हनुमान् भानुमानिव तेजसा ॥ २२३ ॥
ततो रामाय सुग्रीवः शशंसेषमयं हि नः । विधुरे परमो बन्धुर्विनयी पावनञ्जयिः[1] ॥ २२४ ॥
नास्य तुल्यो द्वितीयोऽस्ति सर्वविद्याधरेष्वपि । सीताप्रवृत्तिलाभार्थं स्वामिन्नेनं तदादिश ॥ २२५ ॥
हनुमानप्युवाचैवं कपयः सन्त्यनेकशः । मत्प्राया[2] स्नेहतस्त्वेतद्वक्ति सुग्रीवभूपतिः ॥ २२६ ॥
गवो गवाक्षो गवयः शरभो गन्धमादनः । नीलो द्विविदमैन्दौ च जाम्बवानङ्गदो नलः ॥ २२७ ॥
अन्येऽपि बहवः स्वामिन् सन्तीह कपिकुञ्जराः । तेषां सङ्ख्यापूरणोऽहमपि त्वत्कार्यसिद्धये ॥ २२८ ॥
लङ्कां सराक्षसद्वीपामुत्पाट्येह किमानये । बद्ध्वा सनाधनमथानयामि दशकन्धरम् ॥ २२९ ॥
सकुटुम्बं दशग्रीवं हत्वा तत्रैव वा द्रुतम् । देवीं जनकजामेवानयामि निरुपद्रवाम् ॥ २३० ॥
रामो पि निजगादैवं सर्वं सम्भवति त्वयि । तद्गच्छ पुर्यां लङ्कायां सीतां तत्र गवेषये ॥ २३१ ॥
मैद्रूर्मिकामिमां[3] देव्या मदभिज्ञानमर्पये । तस्याश्चूडामणिं चाभिज्ञानमत्र समानये ॥ २३२ ॥

---

१ पवनञ्जयस्यापत्यं पुमान् पावनञ्जयिः हनुमान् । २ मत्सदृशाः । ३ ममाङ्गुलीयकम् ।

इदं मेद्वाचिकं शंसेर्देवि यल्लक्ष्मणाग्रजः । त्वद्वियोगानुरोऽत्यन्तं ध्यायंस्त्वामेव तिष्ठति ॥ २३३ ॥
भात्याक्षीर्मद्वियोगेन जीवितं जीवितेश्वरि । लक्ष्मणेन हतं द्रक्ष्यस्यचिरादेव रावणम् ॥ २३४ ॥
हनुमानप्युवाचैव यावदाज्ञां विधाय ते । लङ्कायाः पुनरायामि तिष्ठेस्तावदिह प्रभो ॥ २३५ ॥
इत्युक्त्वा राघवं नत्वा मारुतिः सपरिच्छदः । लङ्कापुरीं प्रत्यचालीद्विमानेनातिरंहसा ॥ २३६ ॥
स गच्छन्नभसापश्यन्महेन्द्रगिरिसानुनि । मातामहमहेन्द्रस्य महेन्द्रपुरपत्तनम् ॥ २३७ ॥
एवं च दध्यौ हनुमान्महेन्द्रस्य पुरं ह्यदः । येन मेऽनपराधापि माता निर्वासिता तदा ॥ २३८ ॥
इति संस्मृत्य सङ्क्रुद्धो रणतूर्यमवादयत् । ब्रह्माण्ड स्फोटयदिव दिङ्मुखप्रतिशब्दितैः ॥ २३९ ॥
दृष्ट्वा परबलं राजा महेन्द्रोऽपीन्द्रविक्रमः । सम सैन्यैर्निरगमत् सपुत्रो रणकर्मणे ॥ २४० ॥
महेन्द्रहनुमत्सैन्योरजायत महारणः । व्योमन्युत्पातजीमूत इवास्त्रवृष्टिभीषणः ॥ २४१ ॥
प्रभञ्जन निर्बभञ्जाथ प्रभञ्जन इव द्रुमान् । परसैन्यान् क्षणेनापि भ्रमन् वेगेन सङ्गरे ॥ २४२ ॥
प्रसन्नकीर्तिर्माहेन्द्रिरयुध्यत हनूमता । निघ्नन्नशङ्कं जामेयसम्बन्धमविदन्नथ ॥ २४३ ॥
उभावपि महाबाहू उभावप्यत्यमर्षणौ । अन्योऽन्यं द्वन्द्वयुद्धेन जनयामासतुः श्रमम् ॥ २४४ ॥
अथैव चिन्तयामास युध्यमानोऽपि पावनिः । आरम्भि धिग्मया युद्धं स्वामिकार्यविलम्बकृत् ॥ २४५ ॥
ये जीयन्ते क्षणात्तेऽन्ये मम मातुकुलं ह्यदः । तथाप्यारब्धनिर्वाहकृते जेतव्यमेव हि ॥ २४६ ॥
ध्यात्वेति हनुमान् क्रुद्धः प्रहारैर्मोहयन् क्षणात् । प्रसन्नकीर्तिं जग्राह भग्नास्त्ररथसारथिम् ॥ २४७ ॥

---

१ मम सन्देशम् । २ दिङ्मुखाना प्रतिध्वाने । ३ जीमूतो मेघ- । ४ महेन्द्रपुत्र- ।

अग्रहीद्युद्धमायोध्य महेन्द्रमपि मारुति । नत्वा चैव समाचख्यौ नप्ता तेऽस्म्यञ्जनासुत ॥ २४८ ॥
रामाज्ञया च वैदेहीशुद्धये लङ्का व्रजाम्यहम् । अत्रायात समस्माप मातृनिर्वासन चिरात् ॥ २४९ ॥
जातामर्षेण तत्तात योधितोऽसि सहस्व मे । स्वामिकार्याय यास्यामि याहि न स्वामिसंनिधौ ॥ २५० ॥
महेन्द्रोऽपि समालिङ्ग्य तमित्यूचे महाभुजम् । आकर्णितोऽसि जनश्रुत्या दिष्ट्या दृष्टोऽद्य विक्रमी ॥ २५१ ॥
गच्छ स्वस्वामिकार्याय पन्थान सन्तु ते शिवा । इत्युदित्वा महेन्द्रोऽगात् ससैन्यो राघवान्तिके ॥२५२॥
व्योम्नाथ हनुमान् गच्छन् द्वीपे दधिमुखाभिधे । कायोत्सर्गे तस्थिवांसौ प्रेक्षाञ्चक्रे महामुनी ॥ २५३ ॥
तयोरनतिदूरे चापश्यत्तिस्र कुमारिका । ध्यानस्था निरवद्याङ्गीर्विद्यासाधनतत्परा ॥ २५४ ॥
दवानलस्तदा द्वीपे मज्ज्वालालिलेऽपि हि । तौ साधू ता कुमार्यश्च निपेतुर्दवसङ्कटे ॥ २५५ ॥
तदात्तसल्यन हनुमान विद्ययादाय सागरात् । त दवाग्नि मेघ इव शमयामास वारिभि ॥ २५६ ॥
तदैव सिद्धविद्यास्ता कन्या ध्यानस्थितौ तु तौ । मुनी प्रदक्षिणीकृत्य हनूमन्त बभाषिरे ॥ २५७ ॥
साधूपसर्गे साधनामरक्ष परमार्हत । त्वत्साहाय्येन विद्या न सिद्धा काल विनापि हि ॥ २५८ ॥
का यूयमिति तेनोक्ता कन्यास्ता एवमब्रुवन् । अस्मिन् गन्धर्वराजोऽस्ति राजा दधिमुखे पुरे ॥ २५९ ॥
स्मस्तस्य कन्या कुसुममालाकुक्षिभवा वयम् । तात ययाचिरेऽस्मासु बहव खेचरेश्वरा ॥ २६० ॥
खेचरोऽङ्गारको नामो मत्तश्चास्मत्कृतेऽभवत् । ततस्तस्मै न चान्यस्मै ददौ तातस्त्वरोचकी ॥ २६१ ॥
मत्पुत्रीणा पति क स्यादित्यपृच्छत्पिता मुनिम् । य साहसगतेर्हन्ता स स्यादिति च सोऽवदत् ॥२६२॥

---

१ दौहित्र । २ सर्वाविधान ।

तद्गिरान्वेषयंस्तातो नोपलेभे तु तं क्वचित् । विद्यासाधनमस्माभिस्त्वं ज्ञातुं च प्रचक्रमे ॥ २६३ ॥
विद्याभ्रंशनिमित्तं चाङ्गारकेण कृतो दवः । त्वया च शमितः साधु भो निष्कारणबन्धुना ॥ २६४ ॥
मासैः सिध्यति या षड्भिस्त्वत्साहाय्यात् क्षणादपि । सा मनोगामिनी नाम विद्या नः सिद्धिमाययौ ॥२६५॥
आमूलात्साहसगतेर्वधं रामेण निर्मितम् । शशंस हनुमांस्तासां लङ्कायां चात्मनो गतिम् ॥ २६६ ॥
मुदितास्ताः पितुर्गत्वा शशंसुस्तदशेषतः । सोऽपि ताभिः समं सद्यः ससैन्योऽगाद्रघूद्वहम् ॥ २६७ ॥
उत्पपाताथ हनुमानुपलङ्कं गतश्च सन् । ददर्शाशालिकां विद्यां घोरां कालनिशामिव ॥ २६८ ॥
अरे कपे क यातासि यातोऽसि मम भोज्यताम् । इति ब्रुवाणा साक्षेपं व्याददाति स्म सा मुखम् ॥२६९॥
हनूमांश्च गदापाणिः प्रविवेश तदाननम् । अभ्रमध्यमिवादित्यस्तां विदार्य च निर्ययौ ॥ २७० ॥
तया कृतं च प्राकारं लङ्कापुर्यां मरुत्सुतः । विद्यासामर्थ्यतोऽभाङ्क्षीन्मङ्क्षु कर्परलीलया ॥ २७१ ॥
तद्वप्ररक्षसप्युग्रैः क्रुद्धं वज्रमुखाभिधम् । सोऽवधीत्सहयुध्वानं युद्धाध्वन्यधुरन्धरः ॥ २७२ ॥
हते वज्रमुखे लङ्कासुन्दरी तस्य कन्यका । विद्याबलवती कोपाद्युद्धायाह्वास्त मारुतिम् ॥ २७३ ॥
व्योमनीव तडिल्लेखा सञ्चारीचतुरं रणे । प्रहरन्ती मुहुः सानुमतीव हि हनूमति ॥ २७४ ॥
तदस्त्राणि निजैरस्त्रैश्छिदानः पावनञ्जयिः । तां निरस्त्रीचकाराशु निष्पत्रामिव वीरुधम् ॥ २७५ ॥
क एष इति साश्चर्यादाञ्जनेयमुदीक्षितुम् । सम्प्रवृत्ता च कामेन ताडिता च शिलीमुखैः ॥ २७६ ॥
सा हनूमन्तमित्यूचे मया पितृवधोत्थया । अविचार्य क्रुधा वीर योधितोऽसि मुधैव हि ॥ २७७ ॥

---

१ गमनम् । २ गच्छन्नसि । ३ कर्परो मृन्मय जीर्णपात्रम् । ४ लताम् । ५ बाणैः ।

आख्यात साधुना पूर्व यस्ते जनकघातकः । भावी मर्तेति तन्नाथ मामुद्वह वशंवदाम् ॥ २७८ ॥
सकलेऽपि जगत्यस्मिन् कोऽन्यस्तव समो भट । तव स्वास्यामि नारीषु त्वया पत्यातिगर्विता ॥२७९॥
एवं विनीतां तां कन्यां मुदितो हनुमानपि । गान्धर्वेण विवाहेन सानुरागमुपायत ॥ २८० ॥
स्नातुकाम [illegible] व्योमाटवीपर्यटनश्रमात् । तदा त्विषामधिपतिर्ममज्जापरवारिधौ ॥ २८१ ॥
प्रतीचीमुपसन्ध्याशां गच्छता भानुमालिना । सन्ध्याभ्रच्छद्मना तस्या वासांसीवापनिन्यिरे ॥ २८२ ॥
पक्वाशे विधि सौरुण्यामरुणाभ्रपरम्परा । अस्तकाले रविं त्यक्त्वा तेजः पृथगिव स्थितम् ॥ २८३ ॥
नवरागो नवरागां सिषेवे वारुणीमसौ । मा हित्वेत्यपमानेन म्लानास्या प्राच्यभूद्ध्रुवम् ॥ २८४ ॥
क्रीडास्थानद्रुमा तासां पतित्यागभुवा रुजा । खगैः कोलाहलमिषादाक्रन्दस्तत्र निर्ममे ॥ २८५ ॥
म्लानिमासादयामास चक्रवाकी वराकिका । दूरीभूतप्रियतमा ललनेव स्वसम्मता ॥ २८६ ॥
पद्मिनी कलयामास मुखसङ्कोचमुच्चकैः । पतिभक्तामतेवास्तङ्गते पत्यावहर्पतौ ॥ २८७ ॥
तर्णकोत्कण्ठितास्तूर्णं गावो व्याजुघुटुर्वनात् । वायव्यस्नानसम्प्राप्तिमुदितैर्वन्दिता द्विजैः ॥ २८८ ॥
अस्तकाले त्विषामीशो निजं तेजो हविर्भुजे । राजेव युवराजाय राज्यसम्पदमार्पयत् ॥ २८९ ॥
नागरीभिः प्रतिपदमदीप्यन्त प्रदीपकाः । दिवोऽवतीर्णनक्षत्रश्रेणिश्रीपरिमोषिणः ॥ २९० ॥
अस्तमीयुषि चण्डांशौ शशिन्यनुदिते सति । तमो जृम्भितुमारेभे छलच्छेका खला खलु ॥ २९१ ॥

१ परिपीतवान् । २ आकाशाटव्यां यद्भ्रमणं तस्य श्रमात् । ३ प्रतीच्या वस्त्राणि सूर्योऽपजह्रे । ४ प्रतीच्याम् । ५ पतिमरणात्मा मत यस्या सेव । ६ सूर्ये । ७ वत्सेषूत्कण्ठिताः । ८ प्रतिनिववृतिरे ।

किमञ्जनाद्रेश्चूर्णेन पूर्णमेतद्यथाञ्जनैः । रोदसीभाण्डमभितस्तमःपूर्णमलक्ष्यत ॥ २९२ ॥
न हि स्थलं न हि जलं न दिशो न नभो न भूः । तदानीं किं बहूक्तेन स्वहस्तोऽपि न लक्ष्यते ॥ २९३ ॥
तारा व्योमन्यसिश्यामे तमोलिप्ते विशेषतः । चिरं व्यडम्बयन् धूतकरित्रस्थवराटिकाः ॥ २९४ ॥
व्यंक्तोडु कलयामास कज्जलश्यामलं नभः । उत्पुण्डरीककालिन्दीह्रदसब्रह्मचारिताम् ॥ २९५ ॥
एकाकारकरे विष्वक् तमःपूरे प्रसर्पति । विश्वं विश्वमनालोकमभूत्पातालसन्निभम् ॥ २९६ ॥
स्फीतेऽन्धकारे निःशङ्काः कामिसङ्गमनोत्सुकाः । स्वैरं जजृम्भिरे दूत्यो ह्रदे शफरिका इव ॥ २९७ ॥
आजानूत्क्षिप्तमञ्जीरास्तमालश्यामलांशुकाः । मृगनाभिविलिप्ताङ्ग्योऽभिससुरभिसारिकाः ॥ २९८ ॥
अथोदयाद्रिप्रासादे सुवर्णकलशोपमः । कराङ्कुरमहाकन्द उदियाय निशाकरः ॥ २९९ ॥
नैसर्गिकेण वैरेण लक्ष्मव्याजात्सहेन्दुना । नियुद्धमिव तन्वानमन्धकारमलक्ष्यत ॥ ३०० ॥
विपुले गोकुल [illegible] क्रीडन्ति स्म नभस्तले । स्वैरं गोष्विव तारासु गवेन्द्र इव चन्द्रमाः ॥ ३०१ ॥
व्यक्तमन्तःस्फुरल्लक्ष्मा मृगलक्ष्मा व्यराजत । मृगनाभिद्रवाधाररौप्यभाजनसन्निभः ॥ ३०२ ॥
स्खलयमाना विरहिभिरन्तरा दत्तपाणिभिः । प्रसस्रुः शीतगुकराः शरा इव मनोभुवः ॥ ३०३ ॥
चिरभुक्तामपि प्रोज्झ्य पद्मिनीं प्राप्तदुर्दशाम् । भृङ्गाः कुमुद्वतीं भेजुर्धिगहो नीचसौहृदम् ॥ ३०४ ॥

---

१ खड्गवच्छ्यामे । २ धूतपट्टस्थितकपर्दिका । ३ स्पष्टनक्षत्रम् । ४ अधिकानि पुण्डरीकाणि यस्मिंस्तस्य कालिन्दीह्रदस्य समानताम् । ५ समग्रम् । ६ जानुपर्यन्तं धारितानि मञ्जीराणि याभिस्ताः । ७ कलङ्कमिषात् । ८ बाहुयुद्धम् । ९ मृगमदस्य श्यामत्वात्कलङ्कसादृश्यं रौप्यपात्रस्य च श्वैत्याच्चन्द्रसादृश्यम् । १० शीता गावः किरणा यस्य तस्य चन्द्रस्य कराः किरणाः ।

शेफाल्या कुसुमानीन्दु करपातैरपातयत् । प्रियमित्रस्य पुष्पेषो सज्जीकर्तुमिषूनिव ॥ ३०५ ॥
प्रवपयन्नि दुकान्तान् कुर्वाण सरसीर्नवा । स्वानि शीतरुचि पूर्वकीर्तनानीव निर्ममे ॥ ३०६ ॥
कुलटानामटन्तीनां पद्मिनीनामिवोषके । विततान मुखम्लानिं सा ज्योत्स्ना धौतदिङ्मुखा ॥ ३०७ ॥
सम च लङ्कासुन्दर्या पवनञ्जयनन्दन । रममाणो निराशङ्कस्तामतीयाय यामिनीम् ॥ ३०८ ॥
अथोदियाय किरणै स्वर्णच्छत्रसहोदरै । मार्तण्डो मण्डयन्नाशां प्रियां प्राचीनबर्हिष ॥ ३०९ ॥
अभ्याहत निष्पतत्यो रुचयश्चण्डरोचिष । कुमुद्वतीषु स्मेरासु ययु प्रस्वापनाक्षताम् ॥ ३१० ॥
त्यक्तानि मौलिमाल्यानि प्रयुद्धामि पुरन्ध्रिभिं । केशपाशनियोगेनालिनादैरुदन्निव ॥ ३११ ॥
रात्रिजागरणायासकषायितविलोचना । निवर्तन्ते स्म गणिका कामुकाना निकेतनात् ॥ ३१२ ॥
स्मेरपङ्कजकोशेभ्यो निर्ययुर्भृङ्गराजय । खण्डिता मुखपद्मेभ्य इव नि श्वासवल्लय ॥ ३१३ ॥
उदितादित्यतेजोभिर्लुण्ठितप्रतिवैभव । अभवद्रजनीजानिर्लूतातन्तुपुटोपम ॥ ३१४ ॥
यत्प्रबुद्धाम्बुजैर्जप भाव न तत्तमश्चण्डरोचिषा । मयश्चण्डानिलेनेव निर्धूय क्षप्यनीयत ॥ ३१५ ॥
रात्रिविरानुवद्धाया निद्राया अपसर्पणात् । स्वस्वकर्माणि निर्मातु प्रावर्तत पुरीजन ॥ ३१६ ॥
तदा च हनुमाल्लँङ्कासुन्दरीं सुन्दरोक्तिभि । आपृच्छ्य प्राविशल्लङ्कानगरीं गुरुविक्रम ॥ ३१७ ॥

---

१ कामस्य । २ पीतत्वात् सुवर्णच्छत्रसदृशी । ३ इन्द्रस्य भिया दिशा पूर्वाम् । ४ कुट्टिनीभि स्त्रीभि । ५ या स्वपतिमन्यया सह रममाणं दृष्ट्वेर्ष्यां करोति सा खण्डितेत्युच्यते । ६ लूता ऊर्णनाभ तस्य मुखाद्वि गताना तन्तूनां पुट पात्र त सदृश ।

विभीषणस्य सदनं द्विषड्ढट्टविभीषणः । जगाम स्थामधामाय पवनञ्जयनन्दनः ॥ ३१८ ॥
विभीषणेन सत्कृत्य पृष्टश्चागमकारणम् । अवोचदञ्जनासूनुः सारगम्भीरगीरिदः ॥ ३१९ ॥
यद्भ्राता रावणस्यासि शुभोदर्कं विचिन्त्य तत् । रामपत्नीं हृतां सीतां सती मोचय रावणात् ॥ ३२० ॥
दुःखाकृदिहलोकेऽपि परलोके न केवलम् । काकुत्स्थपत्नीहरणं त्वद्भ्रातुर्बलिनोऽपि हि ॥ ३२१ ॥
विभीषणोऽप्यभाषिष्ट साधूक्तं हनुमंस्त्वया । सीतां मोचयितुं पूर्वमप्युक्तः स्वाग्रजो मया ॥ ३२२ ॥
भूयोऽपि हि सनिर्बन्धं प्रार्थयिष्ये स्वबान्धवम् । सीतां यदि पुनर्मुञ्चत्येष सम्प्रति मद्गिरा ॥ ३२३ ॥
एवं विभीषणेनोक्ते समुत्पत्याञ्जनासुतः । जगाम देवरमणोद्याने वैदेह्यधिष्ठिते ॥ ३२४ ॥
तत्राशोकतरोर्मूले कपोलल्लुलितालकाम् । सन्तताश्रुपयोधारापल्वलीकृतभूतलाम् ॥ ३२५ ॥
प्रम्लानवदनाम्भोजा हिमार्तां पद्मिनीमिव । अत्यन्तक्षामवपुषं प्रथमेन्दुकलामिव ॥ ३२६ ॥
उष्णनिश्वाससन्तापविधुराधरपल्लवाम् । ध्यायन्तीं राम रामेति निःस्पन्दां योगिनीमिव ॥ ३२७ ॥
मलिनीभूतवसनां निरपेक्षां वपुष्यपि । ददर्श देवीं वैदेहीं पवनञ्जयनन्दनः ॥ ३२८ ॥

॥ चतुर्भिः कलापकम् ॥

एवं च दध्यौ हनुमानहो सीता महासती । अस्या दर्शनमात्रेण पवित्रीभूयते जनैः ॥ ३२९ ॥
अस्याश्च विरहे रामः स्थाने स खलु खिद्यते । रूपवच्छीलवच्चेदृक्कलत्रं यस्य पावनम् ॥ ३३० ॥

---

१ शत्रुभटभयङ्कर । २ शुभपरिणामम् । ३ निश्चलाम् । ४ स्थाने इति युक्तार्थेऽव्ययम् ।

द्विधापि हि वराकोऽयं पतिष्यत्येव रावणः । रघूद्वहप्रतापेन स्वपापेन च भूयसा ॥ ३३१ ॥
ततो विद्यातिरोभूत सीतोत्सङ्गेऽङ्गुलीयकम् । हनुमान् पातयामास तद्दृष्ट्वा मुमुदे च सा ॥ ३३२ ॥
तदैव गत्वा त्रिजटा दशकण्ठं व्यजिज्ञपत् । इयत्कालं विषण्णासीत् सानन्दा त्वद्य जानकी ॥ ३३३ ॥
मन्ये विस्मृतरामेयं रिरंसुर्मयि सम्प्रति । तदुक्त्वा बोध्यतामेवमूचे मन्दोदरीं स तु ॥ ३३४ ॥
ततश्च पत्युर्दौत्येन पुनर्मन्दोदरी ययौ । प्रलोभनकृते सीता विनीता सेत्यवोचत ॥ ३३५ ॥
अद्वैतैश्वर्यसौन्दर्यपर्यस्तावद्दशाननः । त्वमप्यप्रतिरूपैव रूपलावण्यसम्पदा ॥ ३३६ ॥
यद्यप्यज्ञेन दैवेन युवयोरुभयोरपि । न व्यधाय्युचितो योगस्तथापि ह्यस्तु सम्प्रति ॥ ३३७ ॥
उपेत्य भजनीयं तं भजन्तं भज जानकि । अहमन्याश्च तत्तल्पस्त्वदाज्ञां मुमु बिभ्रतु ॥ ३३८ ॥
सीताप्यवोचद्धा पापे पतिदौत्यविधायिनि । त्वद्भर्तुरिव वीक्षेत मुखं दुर्मुखि कस्तव ॥ ३३९ ॥
रामस्य पार्श्वे मां विद्धि सौमित्रिमिह चागतम् । खरादीनिव हन्तुं द्राग्धवं तव सबान्धवम् ॥ ३४० ॥
उत्तिष्ठोत्तिष्ठ पापिष्ठे यद्भिन्नं नातः परं त्वया । सीतया तर्जितैवं सा सकोपा प्रययौ ततः ॥ ३४१ ॥
अथाविर्भूय हनुमान् सीतां नत्वा कृताञ्जलिः । इत्यूचे देवि जयति दिष्ट्या रामः सलक्ष्मणः ॥ ३४२ ॥
त्वत्प्रवृत्तिकृते रामेणादिष्टोऽहमिहागमम् । मयि तत्र गते राम ईहिष्यति रिपुच्छिदे ॥ ३४३ ॥
बाष्पायितेक्षणा सीताप्यृच्छत्त्वमसि को ननु । दुर्लङ्घ्यमर्णवं चेत कथं लङ्घितवानसि ॥ ३४४ ॥
कच्चित्प्राणिति मे प्राणनाथः सौमित्रिणा सह । क वा स्थाने त्वया दृष्टः कालं नयति वा कथम् ॥ ३४५ ॥

---

१ विस्मृतो रामो यया सा । २ पतिम् । ३ त्वया सह । ४ सत्वरम् ।

आख्यच्च हनुमानस्मि पवनाञ्जनयोः सुतः । विद्यया व्योमयानेन लङ्घितो जलधिर्मया ॥ ३४६ ॥
समस्तवानराधीशं सुग्रीवं विद्विषद्वधात् । पत्तीकृत्याधिकिष्किन्धमस्ति रामः सलक्ष्मणः ॥ ३४७ ॥
रामोऽस्ति त्वद्वियोगेन तप्यमानो दिवानिशम् । गिरिर्दवानलेनेव तापयन्नपरानपि ॥ ३४८ ॥
गवेव वत्सो रहितस्त्वया स्वामिनि लक्ष्मणः । न जातु लभते सौख्यं शून्याः पश्यन्दिशोऽनिशम् ॥ ३४९ ॥
क्षणं सशोकौ सक्रोधौ क्षणं ते पतिदेवरौ । सुग्रीवेणाश्वास्यमानावपि न प्राप्नुतः सुखम् ॥ ३५० ॥
भामण्डलो विराधश्च महेन्द्राद्याश्च खेचराः । पत्तीभूयोपासते तौ शक्रेशानाविवामराः ॥ ३५१ ॥
तव प्रवृत्तिमानेतुमहं सुग्रीवदर्शितः । रामेण प्रेषितो देवि समर्प्य स्वाङ्गुलीयकम् ॥ ३५२ ॥
चूडामणिरभिज्ञानं त्वत्त आनायितो मया । तद्दर्शनेन मामत्रायातं प्रत्येष्यति प्रभुः ॥ ३५३ ॥
हनुमदुपरोधेन रामोदन्तमुदा च सा । एकविंशत्यहोरात्रप्रान्ते व्यधित भोजनम् ॥ ३५४ ॥
प्रोवाचैवमभिज्ञानं चूडामणिमिमं मम । गृहीत्वा वत्स गच्छाशु तिष्ठतः स्यादुपद्रवः ॥ ३५५ ॥
अत्र त्वामागतं ज्ञात्वा क्रूरकर्मैष राक्षसः । हन्तुमन्तकवन्नूनं समुपस्थास्यते बली ॥ ३५६ ॥
स्मित्वा सप्रश्रयं सोऽपि जगादेति कृताञ्जलिः । त्वं मातर्मयि वात्सल्यादेव वदसि कातरा ॥ ३५७ ॥
रामलक्ष्मणयोः पत्तिस्त्रिजगज्जत्रयोरहम् । तपस्वी रावणः कोऽयं ससैन्योऽपि ममाग्रतः ॥ ३५८ ॥
त्वामपि स्कन्धमारोप्य स्वामिनि स्वामिनोऽन्तिके । नयामि परिभूयैनं ससैन्यमपि रावणम् ॥ ३५९ ॥
स्मित्वा सीताप्युवाचैवं न हि ह्रेपयसि स्वकम् । रामभद्रं प्रभुं भद्र वदन्नेवं ससौष्ठवम् ॥ ३६० ॥

---

१ तव तिष्ठत सतः ।

त्वयि सम्भाव्यते सर्वं पदातौ रामशार्ङ्गिणो । परन्तु परपुंस्पर्शो न मेऽर्हति मनागपि ॥ ३६१ ॥
तद्गच्छ शीघ्रमेवैष सति सर्वं कृतं त्वया । गते त्वयि यदुद्योगमार्यपुत्रः करिष्यति ॥ ३६२ ॥
अथेत्थं स्माह हनुमानेष गच्छाम्यहं परम् । रक्षसां दर्शयिष्यामि किञ्चिद्विक्रमचापलम् ॥ ३६३ ॥
जितकाशी दशास्योऽयं परवीर्यं न मन्यते । जानातु राममद्वीयपत्तेरपि पराक्रमम् ॥ ३६४ ॥
आमेत्युक्त्वार्पयत्तस्य सीता चूडामणिं निजम् । नत्वा सोऽपि चचालोर्वीं पादन्यासैर्धुवन् धराम् ॥ ३६५ ॥
तदथ देवरमणोद्यानं मङ्क्षु प्रचक्रमे । स वनं वनद्विपवत् प्रसरत्करविक्रमः ॥ ३६६ ॥
रक्ताशोकेषु निःशूको बकुलेषु वनाकुलः । सहकारेष्वकारुण्यो निष्कम्पश्चम्पकेष्वपि ॥ ३६७ ॥
अमन्दरोषो मन्दारेष्वदयः कदलीष्वपि । अन्येष्वपि रम्येषु भङ्गलीलां चकार सः ॥ ३६८ ॥
तदुद्याने चतुर्द्वारि द्वारपाला क्षपाचरा । अधावन्त निहन्तुं तं तदा मुद्गरपाणयः ॥ ३६९ ॥
हनूमति स्खलन्ति स्म तेषां प्रहरणानि तु । महाम्भोनिधिकल्लोला इव तीरमहीधरे ॥ ३७० ॥
पावनिः कुपितस्तेभ्यस्तैरेवोद्यानपादपैः । प्रजहार निरायासं सर्वमस्त्रं बलीयसाम् ॥ ३७१ ॥
मङ्क्षु वृक्षानिवाभाङ्क्षीत्तानारक्षक्षपाचरान् । क्षुद्रानैरक्षाकुपथि स समीरण इवास्खलन् ॥ ३७२ ॥
हनूमता क्रियमाणमुद्यानारक्षसङ्क्षयम् । गत्वाचचक्षिरे केचित्क्षपाचरपतेस्तदा ॥ ३७३ ॥
ततः सह बलैरक्षकुमारं राक्षसेश्वरः । समादिशद्धनुमतो घातनायारिघातनम् ॥ ३७४ ॥
आक्षिपन्तं रणायाक्षं बभाषे पावनञ्जयिः । भोजनादौ फलमिव रणादौ मे त्वमापतः ॥ ३७५ ॥

---

१ जितेन जयेन काशते शोभते इति जीतकाशी । २ निशाचरा । ३ हनुमान् ।

मुधा कपे गर्जसीति तर्जयन् रावणात्मजः । ववर्ष विशिखैस्तीक्ष्णैरक्ष्णोः प्रसररोधिभिः ॥ ३७६ ॥
श्रीशैलोऽपीषुवर्षेण समकर्षेण रावणिम् । पिदधे वारिभिर्द्वीपमुद्वेल इव वारिधिः ॥ ३७७ ॥
शस्त्राशस्त्रि चिरं कृत्वा कौतुकादञ्जनासुतः । रणपारपरिप्रेप्सुरक्षं पशुमिवावधीत् ॥ ३७८ ॥
ततो भ्रातृवधामर्षादाययौ द्रुतमिन्द्रजित् । मारुते तिष्ठ तिष्ठेति ससौष्ठवमुदीरयन् ॥ ३७९ ॥
द्वयोरपि महाबाह्वोः कल्पान्त इव दारुणः । विश्वविक्षोभकरणश्चिरं प्रववृते रणः ॥ ३८० ॥
वर्षन्तौ वारिधाराँवच्चीरन्ध्रा· शस्त्रधोरणीः । व्योमस्थौ तावलक्ष्येतां पुष्करावर्तकाविव ॥ ३८१ ॥
अन्तरीक्षं तयोरस्त्रैरास्फलद्भिर्निरन्तरैः । क्षणादजनि दुःप्रेक्ष्यं यादोभिरिव वारिधिः ॥ ३८२ ॥
मुमोच यावन्त्यस्त्राणि दुर्वारो रावणात्मजः । तदनेकगुणैरस्त्रैस्तानि चिच्छेद मारुतिः ॥ ३८३ ॥
हनूमदस्त्रक्षुण्णाङ्गाः सर्वेऽपीन्द्रजितो भटाः । अनश्यन् रक्तहृदिनीपर्वता इव जङ्गमाः ॥ ३८४ ॥
दृष्ट्वा नष्टं निजं सैन्यं स्वं च मोघीकृतायुधम् । अमुञ्चन्नागपाशास्त्रं श्रीशैलाय दशास्यसूः ॥ ३८५ ॥
नागपाशैर्द्रढीयोभिस्तदैवापादमस्तकम् । अबन्धि चन्दन इवाभितः पवननन्दनः ॥ ३८६ ॥
स नागपाशबन्धोऽपि समसाहि हनूमता । कौतुकाद्धि क्षणं दत्ते शक्तो जयमपि द्विषाम् ॥ ३८७ ॥
हृष्टेनेन्द्रजिता निन्ये हनूमाननुरावणम् । निरीक्ष्यमाणः फुल्लाक्षैः राक्षसैर्जयसाक्षिभिः ॥ ३८८ ॥

---

१ बाणैः । २ हनुमान् । ३ युद्धस्य पारं प्राप्तुमिच्छुः । ४ अन्तररहिता । ५ शस्त्रपरम्परा शस्त्रसमूहा निति यावत् । ६ शोणितनदीनां पर्वताः । ७ विफलीकृतान्यायुधानि यस्य तम् । ८ असह्यत । ९ समर्थ पुरुषः कौतुकात् क्षणं यावत् शत्रूणां जयमपि दत्ते पराजयं तु दत्त एव ।

मारुतिं रावण स्माह दुर्मते किं कृतं त्वया । आवां मम मामकीनेनाभितौ यत्तौ तपस्विनौ ॥ ३८९ ॥
वनेवासौ फलाहारौ मलिनौ मलिनांशुकौ । किरातविव तौ दुष्टौ तुभ्य का दास्यतः श्रियम् ॥ ३९० ॥
तत्रापि मद्वुद्धे त्वं तद्वाचा किमिहागम । येनेहायातमात्रोऽपि प्राप्तोऽसि प्राणसंशयम् ॥ ३९१ ॥
दक्षौ भूचारिणौ तौ तु यत्ताभ्यां कारितोऽस्यद । अङ्गारान् परहस्तेन कर्षयन्ति हि धूर्तका ॥ ३९२ ॥
मत्सेवकवरो मे त्वमभूः दूत परस्य च । तद्वध्योऽसि रे शिक्षामात्राय तु विडम्ब्यसे ॥ ३९३ ॥
हनुमानप्युवाचैवं कदाहं तव सेवक । कदा ममाभूस्त्वं स्वामी वदन्नेव न लज्जसे ॥ ३९४ ॥
एकदा युधि सामन्तो वद्धुम्भन्य स्वर स ते । त्वमेभ्या वरुणभ्यामत्पित्रा मोचितः पुरा ॥ ३९५ ॥
साहाय्यार्थं त्वयाहूतोऽहमप्यम्यामम पुरा । रणे वरुणपुत्रेभ्यस्त्वामरक्ष च सङ्कटे ॥ ३९६ ॥
साहाय्यस्य न योग्योऽसि साम्प्रतं पापतत्पर । सम्भाषोऽपि हि पापाय परस्त्रीहारिणस्तव ॥ ३९७ ॥
त्वदीये तं न पश्यामि यो हि त्वां त्रास्यतेऽधुना । एकस्मादपि सौमित्रेर्दूरे रामस्तदग्रजः ॥ ३९८ ॥
तद्गिरा कुपितो भालाहितभ्रूकुटिभीषण । दशाननो दष्टनोष्ठं दशनैरिदमभ्यधात् ॥ ३९९ ॥
मदरी यच्छ्रितोऽसि त्वं मां चाराकृतवानसि । तन्नूनं मर्तुकामोऽसि वैराग्यं तत्र किं तव ॥ ४०० ॥
यथा कुष्टविशीर्णाङ्गं मुमूर्षुमपि कोऽपि न । हत्याभयान्निहन्त्येवं हन्यात् को दूतमप्यरे ॥ ४०१ ॥
आरोप्य रासभे पञ्चशिखीकृत्य च सम्प्रति । अन्तर्लङ्कं प्रतिपथं भ्राम्यसे लोकवेष्टित ॥ ४०२ ॥
इत्युक्तो मारुतिः क्रुद्धोऽत्रोटयत् पाशपन्नगान् । बद्धो हि नलिनीनाले कियत्तिष्ठति कुञ्जरः ॥ ४०३ ॥
तडिद्दण्ड इवोत्पत्य किरीटं राक्षसप्रभोः । कमलमचूर्णयामास पादघातेन मारुतिः ॥ ४०४ ॥

---

१ घने वासो ययोस्तावलुक्समास । २ आलापोऽपि । ३ तव परिवारे । ४ मामन्यथा यद्दृष्टं कृतवान् च्वि ।

हन्यता गृह्यता चैष इति जल्पति रावणे । अनाथामिव सोऽभाङ्क्षीत्तत्पुरीं पादर्दरैः ॥ ४०५ ॥
क्रीडां कृत्वैवमुत्पत्य सुपर्ण इव पावनिः । राममेत्यानमत्सीताचूडारत्नं समर्पयन् ॥ ४०६ ॥
सीताचूडामणिं तं तु साक्षात्सीतामिवागताम् । आरोपयामास हृदि स्पृशन् रामो मुहुर्मुहुः ॥ ४०७ ॥

आलिङ्ग्य दाशरथिना सुतवत्प्रसादात् पृष्टः शशंस दशवक्त्रविमाननां ताम् ।
सीताप्रवृत्तिमखिलां हनुमान् यथावदाकर्ण्यमानभुजविक्रमसम्पदन्यैः ॥ ४०८ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि

## ॥ अथ सप्तम सर्ग ॥

अथ राम ससौमित्रि सुग्रीवाद्यैर्वृतो भटै । लङ्काविजययात्रायै प्रतस्थे गगनाध्वना ॥ १ ॥
भामण्डलो नलो नीलो महेन्द्र पावनश्चपि । विराधश्च सुषेणश्च जाम्बवानङ्गदोऽपि च ॥ २ ॥
महाविद्याधराधीशा कोटिशोऽन्येऽपि तत्क्षणम् । येयु राम समावृत्य स्वसैन्यैश्छन्नदिङ्मुखा ॥ ३ ॥
॥ युग्मम् ॥

विद्याधरैराहतानि यात्रातूर्याण्यनेकश । नादैरत्यन्तगम्भीरैर्बिभराश्चक्रुरम्बरम् ॥ ४ ॥
विमाने स्यन्दनैरश्वैर्गजैरन्यैश्च वाहनै । ते जग्मु खेचरा स्वामिकार्यसिद्धावहर्यव ॥ ५ ॥
उपर्युदन्वतो गच्छन् ससैन्यो राघव क्षणात् । वेलन्धरपुर प्राप वेलन्धरमहीधरे ॥ ६ ॥
समुद्रसेतू राजानौ समुद्राविव दुर्धरौ । तत्र रामाग्रसैन्येनारेभाते योद्धमुद्धतौ ॥ ७ ॥
नल समुद्र सेतु च नीलोऽबध्नान्महाभुज । उपराममनैषीच मनीषी स्वामिकर्मणि ॥ ८ ॥
काकुत्स्थ स्थापयामास तथैव पुनरेव तौ । रिपावपि पराभूते महान्तो हि कृपालव ॥ ९ ॥
समुद्रोऽपि हि रूपाभिरामा रामानुज मने । रामामतल्लिकास्तिस्र प्रददौ निजकन्यका ॥ १० ॥
उषित्वा ता निशा सेतुसमुद्रानुगत प्रगे । क्षणादासादयामास सुवेलाद्रिं रघूद्वह ॥ ११ ॥
सुवेल नाम राजान जित्वा तत्रापि दुर्जयम् । उवासैका निशा राम प्रातर्भूयश्चचाल च ॥ १२ ॥

---

१ गर्विष्ठा । २ मनीषा बुद्धिरस्यास्तीति तथा । ३ रामासु स्त्रीषु मतल्लिका श्रेष्ठा ।

उपलक्ष्मथो हसद्वीपे हंसस्थं नृपम् । जित्वा तस्थौ कृतावासस्तत्रैव रघुपुङ्गवः ॥ १३ ॥
आसन्नरथे-थ काकुत्स्थे मीनस्थित इवार्कजे । लङ्का क्षोभमुपेयाय विष्वक् प्रलयशङ्किनी ॥ १४ ॥
सन्नह्यन्ति स्म युद्धाय सामन्ता रावणस्य ते । प्रहस्तप्रहस्तमारीचसारणाद्याः सहस्रशः ॥ १५ ॥
रावणो रणतूर्याणि दारुणान्यथ कोटिशः । किङ्करैरताडयामास द्विषत्ताडनपण्डितः ॥ १६ ॥
तदा दशास्यमभ्येत्य नत्वावोचद्विभीषणः । क्षणं प्रसीद विमृश शुभोदर्कं वचो मम ॥ १७ ॥
अविमृश्य पुरा चक्रे लोकद्वितयघातकम् । परदारापहरणं लज्जितं तेन ते कुलम् ॥ १८ ॥
निजभार्यां समानेतु काकुत्स्थोऽयमुपस्थितः । आतिथ्यमिदमेवास्मै तत्कलत्रार्पणं कुरु ॥ १९ ॥
सीतां त्वत्तोऽन्यथाकारमपि रामो ग्रहीष्यति । निग्रहीष्यति चाशेषं त्वया सह कुलं तव ॥ २० ॥
दूरे स्तां रामसौमित्री तौ साहसस्वरान्तकौ । तत्पत्तिरेको हनुमान् दृष्टो देवेन किं न हि ॥ २१ ॥
इन्द्रश्रियोऽधिका श्रीस्ते ता सीताकारणेन मा । परिहार्यभिर्वेदेवमुभयभ्रष्टता तव ॥ २२ ॥
अथेन्द्रजिदुवाचैवं त्वया ह्याजन्मभीरुणा । दूषितं नः कुलं सर्वं नासि तातस्य सोदरः ॥ २३ ॥
इन्द्रस्यापि विजेतारं नेतारं सर्वसम्पदाम् । तातं सम्भावयन्नेवं नूनं मूर्ख मुमूर्षसि ॥ २४ ॥
पुरापि [2]छलितस्तातस्त्वया ह्यनृतभाषिणा । प्रतिज्ञाय दशरथवधं यदकृथा न हि ॥ २५ ॥
इहायातं दाशरथिं ताताद्रक्षितुमिच्छसि । दर्शयन् भयमुत्पाद्य भूचरेभ्योऽपि निस्त्रप ॥ २६ ॥
तन्मन्ये रामगृह्योऽसि मन्त्रेऽप्यधिकरोषि न । आप्तेन मन्त्रिणा मन्त्रः शुभोदर्को हि भूभुजाम् ॥ २७ ॥

---

१ शनौ मीनराशिस्थिते । २ रामपक्षपाती ।

विभीषणोऽप्युवाचैव ह्यनुगृह्णो न खल्वहम् । पुत्ररूपस्तु शत्रुस्त्वमुत्पन्न कुलनाशकृत् ॥ २८ ॥
अयमैश्वर्यकामाभ्याम धस्तावत् पिता तव । जमाय इव रे मुग्ध दुर्गावस्य त्व तु वेत्सि किम् ॥ २९ ॥
राजननेन पुत्रेण चरित्रेण निजेन च । पतिष्यस्यचिरादेव ताम्यामि त्वत्कृते मुधा ॥ ३० ॥
रावणोऽप्यधिक क्रुद्ध खड्गमाकृष्य भीषणम् । विभीषणवधायोच्चैरुदस्थाद्दैवदूषित ॥ ३१ ॥
विभीषणोऽपि भ्रुकुटीभीषण स्तम्भमायतम् । उत्पाट्य गजवद्योद्धुमुत्तस्थावभिरावणम् ॥ ३२ ॥
कुम्भकर्णेन्द्रजिद्भ्यां तौ पतित्वा द्रुतमन्तरा । युद्धान्निषिध्य नीतौ स्व स्थान शालामिव द्विपौ ॥ ३३ ॥
अरे निर्याहि मत्पुर्या आश्रयाशोऽसि वह्निवत् । इत्युक्तो रावणेनागाद्रामाभ्यर्णे विभीषण ॥ ३४ ॥
रक्षोविद्याधराणां चाक्षौहिण्यस्त्रिंशदुत्कटा । हित्वा लङ्काधिप सद्योऽप्यनुजग्मुर्विभीषणम् ॥ ३५ ॥
आपतन्त च त प्रेक्ष्य सुग्रीवाद्या प्लवङ्गमा । यथा तथा हि विश्वास शाकिन्यामिव न द्विषि ॥ ३६ ॥
आदौ स पुरुष प्रेष्य रामाय स्वमजिज्ञपत् । विश्वासपात्रसुग्रीवमुख रामोऽप्युदैक्षत ॥ ३७ ॥
सुग्रीवोऽप्यब्रवीदेते यद्यप्याजन्ममायिन । प्रकृत्या राक्षसा क्षुद्रास्तथाप्यायात्वसाविह ॥ ३८ ॥
ज्ञास्याम प्रेष्यैरेव भावमस्य शुभाशुभम् । तद्भावानुरूप च करिष्याम इह प्रभो ॥ ३९ ॥,
तदभिज्ञोऽभ्यधादेव विशालो नाम खेचर । महात्मा धार्मिकश्चैष रक्ष स्वेको विभीषण ॥ ४० ॥
सीतामोक्षाय जल्पश्चानल्परोषेण रावणेन । निर्वासित शरण्य त्वामागान्नैवैतदन्यथा ॥ ४१ ॥
श्रुत्वेति रामो द्वा स्थेन विभीषणमवीविशत् । पादयो क्षिप्तमूर्धान परिरेभे च सम्भ्रमात् ॥ ४२ ॥

१ श्रीरकण्ठ । २ आत्मवशाति भक्षयतीति तथा । ३ गूढपुरुषै ।

विभीषणोऽप्युवाचैव हित्वा दुर्नयमग्रजम् । त्वामागतोऽस्मि भक्तं मां तत्सुग्रीववदादिश ॥ ४३ ॥
लङ्काराज्यं तदा तस्मै प्रत्यपद्यत राघवः । न मुधा भवति क्वापि प्रणिपातो महात्मसु ॥ ४४ ॥
हंसद्वीपे दिनान्यष्टावतिवाह्य रघूद्वहः । कल्पान्तवातवल्लङ्कां प्रत्यचालीच्चमूवृतः ॥ ४५ ॥
चम्वा रुद्धया पृथुत्वेन पृथ्व्या विंशतियोजनीम् । रणाय सज्जो काकुत्स्थोऽवतस्थे स्थेमपर्वतः॥ ४६ ॥
रामसेनाकलकलो वेलाध्वनिरिवोदधेः । लङ्का बधिरयामास स्फुटद्ब्रह्माण्डभूरिव ॥ ४७ ॥
दशकन्धरसेनान्योऽनन्यसाधारणौजसः । सद्यः संवर्मयामासुः प्रहस्ताद्या उदायुधाः ॥ ४८ ॥
केचिन्मतङ्गजोद्वाहैरपरे वाहवाहनैः । शार्दूलवाहैरन्ये तु खरवाहै रथैः परे ॥ ४९ ॥
कुबेरवन्नरैः केचिन्मेषैः केचित्तु वह्निवत् । यमवन्महिषैः केचित्केचिद्रेवन्तवद्धयैः ॥ ५० ॥
विमानैर्देववत्केचित्प्रौढाः समरकर्मणे । उत्पत्य युगपद्वीराः परिवव्रुर्दशाननम् ॥ ५१ ॥
॥ त्रिभिर्विशेषकम् ॥
रोषारुणाक्षः सन्नह्य विविधायुधपूरितम् । अध्यास्त स्यन्दनं रत्नश्रवःप्रथमनन्दनः ॥ ५२ ॥
भानुकर्णः शूलपाणिर्दण्डपाणिरिवापरः । उपेत्य दशकण्ठस्य समभूत्पारिपार्श्वकः ॥ ५३ ॥
कुमाराविन्द्रजिन्मेघवाहनावपराविव । दोर्दण्डौ दशकण्ठस्य पार्श्वयोरेत्य तस्थतुः ॥ ५४ ॥
सूनवोऽन्येऽपि दोष्मन्तः सामन्ताः कोटिशोऽपि च । शुकसारणमारीचमयसुन्दादयोऽभ्ययुः ॥ ५५ ॥
अक्षौहिणीनां सहस्रैरसङ्ख्यैः सङ्ख्यकर्मठैः । दिशः प्रच्छादयन् पुर्याः प्रचचाल दशाननः ॥ ५६ ॥

---

१ वलपर्वतः । २ उष्ट्रवाहनै । ३ अश्वैः । ४ शका । ५ युद्धचतुरैः ।

शार्दूलकेतव केचित्केचिच्छरभकेतव । चमूरुकेतव केचित्केचित्करटिकेतव ॥ ५७ ॥
मयूरकेतव केचित्केचित्पन्नगकेतव । मार्जारकेतव केचित्केचित्कुक्कुटकेतव ॥ ५८ ॥
कोदण्डपाणय केचित्केचिन्निस्त्रिंशपाणय । भुशुण्डीपाणय केचित्केचिन्मुद्गरपाणय ॥ ५९ ॥
त्रिशूलपाणय केचित्केचित्परिघपाणय । कुठारपाणय केचित्केचिच्च पाशपाणय ॥ ६० ॥
विपक्षवीरान् पृच्छन्तो नामग्राहं मुहुर्मुहु । दशास्यवीराश्चतुर विचेरू रणकर्मणि ॥ ६१ ॥

॥ पञ्चभि कुलकम् ॥

शताक्षस्येव सैन्यस्य प्रथिम्नाच्छाद्य मेदिनीम् । पञ्चाशद्योजनान्यस्थाद्रावणो रणकर्मणे ॥ ६२ ॥
स्वनायकान् प्रशंसन्तो निन्दन्त परनायकान् । परस्पर चाक्षिपन्त कथयन्तो मिथोऽभिधा ॥ ६३ ॥
अस्त्राण्यवैर्वादयन्त करास्फोटपुर सरम् । रामरावणयो सैन्या मिमिलु कांस्यतालवत् ॥ ६४ ॥

॥ युग्मम् ॥

गच्छ गच्छ तिष्ठ तिष्ठ मा भैषीस्त्यजायुधम् । कुरुष्वायुधमित्याजौ भटाना तत्र वागभूत् ॥ ६५ ॥
शल्यानि शङ्कवो बाणाश्चक्राणि परिघा गदा । समुत्पेतुर्द्वयोश्चम्वोर्वनान्तविहगा इव ॥ ६६ ॥
खड्गैर्मिथो घातमर्मैर्वेगात् कृत्तैश्च मौलिभि । उच्छलच्छिरपूर्णानाकेतुराड्विव स तदा ॥ ६७ ॥
सुभटा मुद्गराघातैर्लोठयन्तो द्विपान् मुहु । दण्डकन्दुकिनीं क्रीडा तन्वाना इव रेजिरे ॥ ६८ ॥

---

१ शरभो-श्वापदमृग स केतो येषां ते तथा । २ चमूरुर्मृगविशेषः । ३ करटी गज । ४ नाना केशयो राहवश्च यस्मिंस्तत् ।

कुठारघातैराच्छिन्ना भटानामपरैर्भटैः । पंञ्चशाखाः पतति स्म शाखाः शाखावतामिव ॥ ६९ ॥
वीराः शिरांसि वीराणां छित्वा भूमौ प्रचिक्षिपुः । बुभुक्षिताय कीनाँशायोच्चितान् कवलानिव ॥ ७० ॥
रक्षसां वानराणां च युद्धे तस्मिन्महौजसाम् । दायादानां धनमिव जयः साध्योऽभवच्चिरम् ॥ ७१ ॥
चिरं प्रवर्तमाने च समरे तत्र वानरैः । अभञ्जि राक्षसबलं काननवन्महाबलैः ॥ ७२ ॥
भग्ने रक्षोबले हस्तप्रहस्तौ योद्धुमुद्यतौ । वानरैः सह लङ्केशजयप्रतिभुवौ सदा ॥ ७३ ॥
द्वयोरपि तयोर्युद्धाध्वरदीक्षितयोरथ । सम्मुखीनावुदस्थाता नलनीलौ महाकपी ॥ ७४ ॥
हस्तो नलश्चादितोऽपि सम्मुखीनौ महाभुजौ । रथारूढावमिलतां चक्राचक्रग्रहाविव ॥ ७५ ॥
आस्फालयामासतुस्तावधिज्यीकृत्य धन्वनी । ज्यानादेन मिथो युद्धनिमन्त्रणपराविव ॥ ७६ ॥
तथा ववृषतुर्बाणांस्तौ द्वावपि परस्परम् । शरशूलैर्यथाभूतां रथौ श्वाविन्निभौ तयोः ॥ ७७ ॥
क्षणं नले क्षणं हस्तेऽभूतां जयपराजयौ । तद्बलान्तरमज्ञायि न तत्र निपुणैरपि ॥ ७८ ॥
सभ्यीभूतस्ववीराणामग्रे ह्रीणो नलो बली । अविहस्तो हस्तशिरः क्षुरप्रेणाच्छिदत्क्रुधा ॥ ७९ ॥
सद्यः प्रहस्तं नीलोऽपि हस्तं नल इवावधीत् । दिवोऽभूत् पुष्पवृष्टिश्चोपरिष्टान्नलनीलयोः ॥ ८० ॥
हस्तप्रहस्तनिधनाद्दशाननबले क्रुधा । मारीचः सिंहजघनः स्वयम्भूः सारणः शुकः ॥ ८१ ।

१ हस्तौ पादौ मस्तकं चेति पञ्चशाखाः । २ यमाय । ३ प्रतिभूः साक्षी । ४ ववृषी । ५ श्वाविच्छल्यकः भाषायां "शाहुडी" इति ख्यातम् । ६ अव्याकुलः ।

चन्द्रार्कोद्दामबीभत्सा कामाक्षो मकरो ज्वर । गम्भीर सिंहरथाद्यास्त्या अन्येऽप्युपासरन् ॥ ८२ ॥
॥ युग्मम् ॥

मदनाङ्कुरसन्तापप्रथिताक्रोशनन्दना । दुरितानघपुष्पास्त्रविघ्नप्रीतिकरादय ॥ ८३ ॥
कपयो राक्षसै सार्धमयुध्यन्त पृथक् पृथक् । उत्पतन्त पतन्तश्च कुक्कुटैरिव कुक्कुटा ॥ ८४ ॥
॥ युग्मम् ॥

मारीचश्च सन्ताप नन्दनो ज्वरराक्षसम् । उद्दामराक्षसो विघ्न शुक दुरितवानर ॥ ८५ ॥
राक्षस सिंहजघन प्रथित नाम वानरम् । योधयित्वा स्व अभ्युर्ययावस्त च भास्कर ॥ ८६ ॥
॥ युग्मम् ॥

द्वयोरपि हि सैन्यानि रामरावणयोस्ततः । निवृत्यास्तु शोधयन्त स्वान् हतानहतानपि ॥ ८७ ॥
विभातायां विभावर्यां प्रत्यक्ष दानवा इव । प्रति रामबल रक्षोयोधा योद्धु दुढौकिरे ॥ ८८ ॥
मध्येसैन्य दशास्यो भूमध्ये मेरुरिवाचल । गजरथ्यरथारूढश्चचाल रणकर्मणे ॥ ८९ ॥
बिभ्राणो विविधान्यस्त्राण्यन्तकादपि भीषण । तत्कालालग्नया शत्रून् दृशापि हि दहन्निव ॥ ९० ॥
पश्यन् प्रत्येकमप्यात्मसेनाग्र्य क्षतमन्युवत् । स यमास्त्रणायारीन् रावणोऽगाद्रणावनिम् ॥ ९१ ॥
॥ युग्मम् ॥

---

१ रामपक्षीयाणां नामानि । २ प्रभाते । ३ प्रात सूर्योदयात्प्राक् सूर्यं प्रति दानवा असुरा योद्धुमायान्तीति लौकिकशास्त्रे प्रसिद्धम् । ४ गजा रथयोढारो यस्यैतादृश रथमारूढ । ५ इन्द्रवत् ।

तेऽपि राघवसेनान्यः सैन्यैः सह महौजसः । वीक्ष्यमाणा दिव्यमरैः समरायोपतस्थिरे ॥ ९२ ॥
सनदीकमिव क्वापि रक्तवारिभिरद्भुतैः । उत्पर्वतमिव क्वापि पतितैः कपिकुञ्जरैः ॥ ९३ ॥
कचिचोन्मकरमिव मेकरास्यै रथच्युतैः । उद्दन्तमिव च क्वापि सामिभग्नैर्महारथैः ॥ ९४ ॥
उत्ताण्डवैः कबन्धैश्च नृत्तस्थानमिव क्वचित् । अजायत क्षणेनापि समराजिरभूतलम् ॥ ९५ ॥
॥ त्रिभिर्विशेषकम् ॥
अथ रावणहुङ्कारप्रेरितै रजनीचरैः । सर्वैः सर्वाभिसारेण कपिसैन्या बभञ्जिरे ॥ ९६ ॥
क्रुद्धः स्वसैन्यभङ्गेन सुग्रीवोऽधिज्यकार्मुकः । स्वयं चचाल चलयन्नचलां प्रबलैर्बलैः ॥ ९७ ॥
राजन्निहैव तिष्ठ त्वं ममैवेक्षस्व विक्रमम् । एवं निषिध्य सुग्रीवं हनुमानचलद्युधि ॥ ९८ ॥
हनुमान् राक्षसानीकमनेकानीकदुर्मदम् । दुर्ग्राहमप्यगाहिष्ट महाब्धिमिव मन्दरः ॥ ९९ ॥
अथ पर्जन्यवद्गर्जन्नूर्जितं युधि दुर्जयः । अढौकत धनुस्तूणमाली माली हनूमते ॥ १०० ॥
हनुमन्मालिनौ वीरौ धनुष्टङ्कारकारिणौ । पुच्छास्फोटकरौ सिंहाविवोद्दामौ विरेजतुः ॥ १०१ ॥
अस्त्रैर्मालिहनूमन्तौ भजघ्नाते परस्परम् । चिच्छेदाते मिथोऽस्त्राणि मिथोऽतर्जयतां च तौ ॥ १०२ ॥
चिरं च युद्ध्वा हनुमान्मालिनं वीर्यशालिनम् । चक्रे निरस्त्रं निस्तोयं ग्रीष्मार्क इव पल्वलम् ॥ १०३ ॥
गच्छ गच्छ जरद्रक्षः किं हतेन त्वया ननु । इति ब्रुवाणं श्रीशैलमेत्य वज्रोदरोऽवदत् ॥ १०४ ॥
अरे रे म्रियसे पाप वदन्नेवं हि कुंद्वद । एह्येहि युध्यस्व मया न भवस्येष मा स्म गाः ॥ १०५ ॥

१ मकरमुखैः काष्ठमयमकराकृतयो रथे निक्षिप्यन्ते । २ अर्धभग्नैः । ३ कुत्सितं वदतीति कद्वदस्तत्सम्बुद्धौ ।

मारुतिस्तद्वच श्रुत्वा हक्कामिव मृगाधिपः । हुक्कन्नुच्चहङ्कारश्छादयामास तं शरैः ॥ १०६ ॥
तद्बाणवृष्टिं निर्धूय शरैर्वज्रोदरोऽपि तम् । तिरयामास मार्तण्डं प्राट्काल इवाम्बुदैः ॥ १०७ ॥
अहो वज्रोदरो वीरो योऽस्मस्मै हनूमते । अहो वीरः पावनिर्योऽस्त वज्रोदररक्षसे ॥ १०८ ॥
एवं गिरो रणक्रीडासदस्यानां दिवौकसाम् । असहिष्णुर्द्विपजिष्णुर्हनुमान् मानपर्वतः ॥ १०९ ॥
वर्षन् युगपदस्त्राणि चित्राण्युत्पातमेघवत् । वज्रोदरं तमवधीत्पश्यतामपि रक्षसाम् ॥ ११० ॥

॥ त्रिभिर्विशेषकम् ॥

वज्रोदरवधक्रुद्धो रावणिर्जम्बुमाल्यथ । तं मारुतिमाह्वास्त प्रतिकार इव द्विपम् ॥ १११ ॥
उभावपि महामल्लावन्योन्यवधकाङ्क्षिणौ । युयुधाते चिरं वार्धौ पन्नगेर्वार्तिकाविव ॥ ११२ ॥
क्षुभ्य प्रतियच्छन्तौ द्विगुणद्विगुणानिषून् । परस्परं प्रापतुस्तावधमर्णोत्तमर्णताम् ॥ ११३ ॥
क्रुद्धोऽथ कृत्वा हनुमानरथ्यरथसारथिम् । तं द्विपं ताडयामास मुद्गरेण गरीयसा ॥ ११४ ॥
मूर्छितो जम्बुमाल्युर्व्यां निपपातोत्पपात च । तथा महोदरो रक्षोवीरो वर्षञ्छिलीमुखान् ॥ ११५ ॥
अन्येऽपि राक्षसभटा हनूमन्तं जिघांसवः । आत्मयानं इव क्रोडं वेष्टयामासुरुच्चकैः ॥ ११६ ॥
दोष्णोः केऽपि मुखे केऽपि केऽप्यङ्घ्र्योर्हृदि केऽपि च । कुक्षौ केऽपि शरैस्तीक्ष्णैर्जघ्निरे ते हनूमता ॥ ११७ ॥
अन्तर्वणं दव इव मध्येऽम्भोधीव वाडवः । मध्येरक्षोबलं वीरश्चकासामास मारुतिः ॥ ११८ ॥

---

१ महागपयान् । २ हस्तिपकः । ३ गारुडिनौ । ४ जम्बुमाली पपात महोदरश्चोत्पपातेत्यभिजगामेति सम्बन्धः । ५ वराहम् ।

क्षणादभाङ्क्षीद्रक्षांसि तमांसीव दिवाकरः । महौजसां शिरोरत्नं पवनञ्जयनन्दनः ॥ ११९ ॥
रक्षोभङ्गेन सङ्क्रुद्धः कुम्भकर्णोऽथ शूलभृत् । ईशान इव भूमिष्ठः स्वयं योद्धुमधावत ॥ १२० ॥
कानप्यङ्घ्रिप्रहारेण मुष्टिघातेन कानपि । कांश्चित्कूर्परघातेन तलघातेन कांश्चन ॥ १२१ ॥
कांश्चिन्मुद्गरघातेन शूलघातेन कांश्चन । कानप्यन्योऽन्यघातेन कुम्भकर्णोऽवधीत्कपीन् ॥ १२२ ॥
॥ युग्मम् ॥

कल्पान्तार्णवकल्पं तमापतन्तं तरस्विनम् । रावणानुजमालोक्य सुग्रीवः समधावत ॥ १२३ ॥
भामण्डलो दधिमुखो महेन्द्रः कुमुदोऽङ्गदः । अपरेऽप्यन्वधावन्त प्रदीपन इवोद्यतः ॥ १२४ ॥
दशाननानुजं पञ्चाननं व्याधा इवारुधन् । वर्षन्तोऽस्त्राणि चित्राणि युगपद्वानरोत्तमाः ॥ १२५ ॥
प्रस्वापनास्त्रं तेषूच्चैः कालरात्रिमिवापराम् । रात्रिञ्चरवरोऽमुञ्चदमोघं मुनिवाक्यवत् ॥ १२६ ॥
निद्रायमाणं स्वं सैन्य दिवा कुमुदखण्डवत् । दृष्ट्वा सस्मार सुग्रीवो महाविद्या प्रबोधिनीम् ॥ १२७ ॥
अरे क्व कुम्भकर्णोऽस्तीत्युच्चैस्तुमुलकारिणः । उत्तस्थुर्वानरभटा खगा इव निशात्यये ॥ १२८ ॥
उपाद्रवन् कुम्भकर्णमाकर्णाकृष्टकार्मुकाः । सुग्रीवाधिष्ठिताः सुष्ठुयोधिनः कपिकुञ्जराः ॥ १२९ ॥
सुग्रीवो दलयामास कुम्भकर्णस्य सारथिम् । रथं रथ्यांश्च गदयाऽगदङ्कारो गदानिव ॥ १३० ॥
भूमिष्ठः कुम्भकर्णोऽथ हस्तेनोदस्तमुद्गरः । एकशृङ्गो गिरिरिव सुग्रीवायाभ्यधावत ॥ १३१ ॥
युद्धार्थं धावतस्तस्याङ्घ्रिवातेन गरीयसा । भूयांसः कपयः पेतुः करिस्पर्शेन वृक्षवत् ॥ १३२ ॥

१ हनुमद्विशेषणम् । २ बलिनम् । ३ सिंहम् । ४ वैद्यो रोगानिव । ५ उदस्तः ऊर्ध्वीकृतो मुद्गरो येन स. ।

प्लवङ्गैरस्खलित स्थलैरिव नदीरय । सुग्रीवरयमाहत्याचूर्णयन्मुद्गरेण स ॥ १३३ ॥
खे समुत्पत्य सुग्रीव शिलामेकां महीयसीम् । मुमोच कुम्भकर्णाय वज्री वज्रमिवाद्रये ॥ १३४ ॥
कुम्भकर्णो मुद्गरेण तां शिलां कणशोऽकरोत् । उत्पातिकीं रजोवृष्टिं कपीनां दर्शयन्निव ॥ १३५ ॥
तडत्तडिति दुर्वाणं तडिद्दण्डास्त्रमुत्कटम् । राघवावरजायाथ वालिनोऽवरजोऽमुचत् ॥ १३६ ॥
तडिद्दण्डाय चण्डाय तस्मै शस्त्राण्यनेकश । कुम्भकर्ण प्रचिक्षेप मोघीभूतानि तानि तु ॥ १३७ ॥
कुम्भकर्ण पपातोर्व्यां तडिद्दण्डेन ताडित । अजङ्गमङ्कराकार कल्पान्त इव पर्वत ॥ १३८ ॥
मूर्छिते भ्रातरि क्रुद्ध स्वयमेव दशानन । साक्षादिवान्तकोऽभ्यालीद्भ्रुकुटीभीषणानन ॥ १३९ ॥
नत्वेन्द्रजितमित्यूचे स्वामिस्तव पुरो रणे । न यमो वरुणो नापि न कुबेरो न वा हरि ॥ १४० ॥
तिष्ठन्ति किं तु प्लवगा एते देव तिष्ठ तत् । गत्वैव तान् हनिष्यामि सद्यो मशकमुष्टिवत् ॥ १४१ ॥
निषिध्यैव दशग्रीवं मानोद्ग्रीव स शक्रजित् । आसान प्रविवेशान्त कपिसैन्य महाभुज ॥ १४२
कासारं कासरस्येव मर्कैरापतत सत । कपिभिर्युयुधे तस्य समरोर्वी महौजस ॥ १४३ ॥
स भस्मत कपीनूचे रे रे तिष्ठत वानरा । अयुध्यमानान्नो हन्मि रावणस्यास्मि नन्दन ॥ १४४ ॥
क्व मारुति क्व सुग्रीवस्ताभ्यामप्यथवा कृतम् । क्व नु तौ रामसौमित्री वीरम्म्यमित्रीयमानिनौ ॥ १४५ ॥
इति ब्रुवाणं दोर्दर्पादमर्षारुणितेक्षण । रणायाह्वत सुग्रीवस्त दशग्रीवनन्दनम् ॥ १४६ ॥
भामण्डलोऽपीन्द्रजितोऽवरज मेघवाहनम् । आयोधयितुमारेभे शरभ शरभो यथा ॥ १४७ ॥

---

१ इन्द्रः । २ मानेनोर्ध्वग्रीव । ३ महिषस्य । ४ वीरमानिनौ ।

दिग्गजा इव चत्वारश्चत्वारः सागरा इव । आस्फालन्तः शुशुभिरे ते त्रिलोकीभयङ्कराः ॥ १४८ ॥
गतागतैस्तद्रथानामकम्पत वसुन्धरा । चकम्पिरे सानुमन्तश्चुक्षोभ च महोदधिः ॥ १४९ ॥
बुबुधे नान्तरं तेषां बाणाकर्षणमोक्षयोः । अत्यन्तलघुहस्तानामविहस्तत्वशालिनाम् ॥ १५० ॥
आयसैर्दैवतैरस्त्रैरयुध्यन्त चिराय ते । परं न कोऽपि केनापि तेषां मध्यादजीयत ॥ १५१ ॥
अथो मुमुचतुः क्रुद्धाविन्द्रजिन्मेघवाहनौ । सुग्रीवभामण्डलयोर्नागपाशास्त्रमुद्धतम् ॥ १५२ ॥
नागपाशैस्तथा बद्धौ भामण्डलकपीश्वरौ । अनीश्वरौ निश्वसितुमप्यभूतां यथा हि तौ ॥ १५३ ॥
इतश्च लब्धसङ्घेन कुम्भकर्णेन रोषतः । गदया ताडितः पृथ्व्यां मारुतिर्मूर्छितोऽपतत् ॥ १५४ ॥
दोष्णा तक्षककल्पेन तं करीव करेण सः । समुद्दत्रे वलयितेनान्तःकक्षं न्यधत्त च ॥ १५५ ॥
ऊचे विभीषणो रामं स्वामिन्नेतौ हि ते बले । बलीयसौ सारभूतावानने नयने इव ॥ १५६ ॥
बद्धौ वैदेहिसुग्रीवौ रावणिभ्यां महोरगैः । यावल्लङ्कां न नीयेते तावत्तौ मोचयाम्यहम् ॥ १५७ ॥
हनुमान् कुम्भकर्णेन बद्धो दोष्णा महीयसा । लङ्कामप्राप्त एवायं मोचनीयो रघूद्वह ॥ १५८ ॥
स्वामिन् विना हि सुग्रीवभामण्डलहनूमतः । अवीरमिव नः सैन्यमनुजानीहि यामि तत् ॥ १५९ ॥
एवं तत्र ब्रुवत्येव वेगादृत्वाङ्गदो भटः । आक्षिप्य कुम्भकर्णेन युयुधे युद्धकोविदः ॥ १६० ॥
क्रोधान्ध्यात् कुम्भकर्णेन प्रोत्क्षिप्तभुजपाशतः । ययौ मारुतिरुत्पत्य विहङ्ग इव पञ्जरात् ॥ ॥१६१ ॥

---

१ अतिशीघ्रहस्तचलतामनाकुलितत्वेन च शालिना तेषां चतुर्णां बाणानां कर्षणे मोक्षणे च कियत्कालान्तरमस्तीति केनापि न बुबुधे इति भावः । २ कक्षायामित्यन्त कक्षम् । ३ ऊर्ध्वीकृतो भुज एव पाशस्तस्मात् ।

विभीषणो मोचयितु भामण्डलकपीश्वरौ। रावणिस्या सम योद्धुमधावत रथस्थित ॥ १६२ ॥
दृष्ट्वा तु चन्द्रजि मेघवाहनावेष न पितु । अतुल स्वयमभ्येति कर्तुमस्माभिराहवम् ॥ १६३ ॥
अनेन तातकल्पेन योद्धव्य कथमद्य हा। इतोऽपसरण युक्त न हि पूज्याद्वि बिभ्यताम् ॥ १६४ ॥
पाशबद्धाविमौ चारी निश्चित हि मरिष्यत । इहैव हि तदासातां तावो नान्वेति नौ यथा ॥ १६५ ॥
विचिन्त्यैव नेशतुस्तौ धीमन्तौ रावणी रणात्। पश्यत् विभीषणश्चास्याद्भामण्डलकपीश्वरौ ॥ १६६ ॥
चिन्ताम्लानाननौ तत्र तस्थतू रामलक्ष्मणौ। हिमानीच्छन्नवपुषौ सूर्याचन्द्रमसाविव ॥ १६७ ॥
रामभ्रस्तत्र पूर्वप्रतिपन्नवर सुरम् । महालोचनमस्मार्षीत् सुपर्णामरपुङ्गवम् ॥ १६८ ॥
ज्ञात्वा चावधिनाभ्येत्य ददौ पद्माय सोऽमर । विद्या सिंहनिनादाख्या मुशल स्यन्दन हलम् ॥ १६९ ॥
लक्ष्मणाय ददौ विद्यां गारुडीं स्यन्दन तथा। गदां च विद्युद्वदना समरे रिपुनाशिनीम् ॥ १७० ॥
वरुणाग्नेयवायव्यप्रमुखाण्यपराण्यपि। दिव्यान्यस्त्राणि छत्र च स ददावुभयोरपि ॥ १७१ ॥
सौमित्रेर्वाहनीभूय गरुड प्रेक्ष्य तत्क्षणम्। सुग्रीवभामण्डलयो प्रणेशु पाशपन्नगा ॥ १७२ ॥
जज्ञे जयजयारावो रामसैन्ये समन्तत । रक्षोबलमिवास्त च ययौ देवोऽब्जिनीपति ॥ १७३ ॥
प्रातर्भूयोऽपि सैन्यानि रघूद्वहदशास्ययो । सर्वाभिसारसाराणि रणाङ्गणमुपासरन् ॥ १७४ ॥
तयो कृतान्तदन्ताभस्फुरदस्त्रभयङ्कर । अकाण्डारघसवर्त प्रावर्तत महारण ॥ १७५ ॥
क्रुद्धैरक्षोभि रक्षोभिर्वानरपृतना वरूथिनी। मध्याह्नतापसन्तप्तैस्तै सरसी बकैरिव ॥ १७६ ॥

---

१ महद्धिम हिमानी तया छन्न वपुर्ययोस्तौ । २ रामाय । ३ सुभ्वम् ।

भग्नप्रायां चमूं प्रेक्ष्य सुग्रीवाद्या महौजसः । रक्षोऽनीकेषु विविशुर्योगिनोऽन्यवपुःष्विव ॥ १७७ ॥
विदुद्रुवू राक्षसास्तेऽप्याक्रान्तास्तैः कपीश्वरैः । नागा इव गरुत्मद्भिरंह्रिरामघटा इव ॥ १७८ ॥
रक्षोभङ्गेन सङ्क्रुद्धो दधावे रावणः स्वयम् । महारथप्रचारेण दारयन्निव मेदिनीम् ॥ १७९ ॥
तस्य प्रसरतो दाववह्नेरिव तरस्विनः । मुहूर्तमपि नाग्रेऽस्थात् कपिवीरेषु कश्चन ॥ १८० ॥
तद्युद्धे चलितं रामं निषिध्य प्रश्रयादथ । विभीषणः क्षणादेत्य रुरोध दशकन्धरम् ॥ १८१ ॥
तं रावणोऽवदद्रे रे कं श्रितोऽसि विभीषण । क्रुद्धस्य मम येनाजौ क्षिप्तः कवलयन्मुखे ॥ १८२ ॥
व्याधेनेव किरौ श्वान मयि त्वां रे प्रहिण्वता । रामेण मन्त्रितं साधु साध्विदं ह्यात्मरक्षणम् ॥ १८३ ॥
अद्यापि मम वात्सल्यं त्वयि वत्सास्ति गच्छ तत् । एतौ ह्यद्य हनिष्यामि ससैन्यौ रामलक्ष्मणौ ॥ १८४ ॥
अमीषां वध्यमानानां मा सङ्ख्यापूरणः स्म भूः । एहि स्वस्थानमेव त्वं पृष्ठे हस्तोऽयमद्य ते ॥ १८५ ॥
विभीषणोऽप्युवाचैवं रामोऽन्तक इव स्वयम् । अचालीत्त्वां प्रति क्रुद्धो निषिद्धश्च मया बलात् ॥ १८६ ॥
त्वां बोधयितुकामोऽहं युद्धव्याजादिहागतः । अद्यापि मुच्यतां सीता प्रसीद कुरु मद्वचः ॥ १८७ ॥
हन्त मृत्युभयान्नाहं राज्यलोभेन नापि वा । गतोऽस्मि रामं निर्वादभयात् किं तु दशानन ॥ १८८ ॥
सीतार्पणेन निर्वादं प्रणाशय यथा ह्यहम् । पुनरेव श्रयामि त्वां विहाय रघुपुङ्गवम् ॥ १८९ ॥
क्रुद्धोऽथ रावणः प्रोचे किमद्यापि बिभीषिकाम् । रे विभीषण दुर्बुद्धे प्रदर्शयसि कातर ॥ १९० ॥
भ्रातृहत्याभयादुक्तोऽस्येवं नान्येन हेतुना । इत्युक्त्वास्फालयामास कार्मुकं दशकन्धरः ॥ १९१ ॥

---

१ जलै । २ मयश्चघटा इव । ३ अपवादभयात् । ४ भीतिम् ।

भ्रातृहत्याभयादुक्तोऽस्येव नान्येन हेतुना । इत्युक्त्वास्फालयामास धनु सोऽपि विभीषण ॥ १९२ ॥
तत प्रववृताते तौ भ्रातरौ योद्धुमुद्यतौ । चित्राण्यस्त्राणि कर्षन्तौ वर्षन्तौ च निरन्तरम् ॥ १९३ ॥
अथेन्द्रजित्कुम्भकर्णौ राक्षसा अपरेऽपि हि । स्वामिभक्त्याभ्यधावन्त कृतान्तस्येव किङ्करा ॥ १९४ ॥
रामोऽरौत्सीत् कुम्भकर्णं लक्ष्मणो रावणिं पुन । नीलस्तु सिंहजघन दुर्मर्षश्च घटोदरम् ॥ १९५ ॥
स्वयम्भूर्दुर्मतिं शम्भु नलवीरोऽङ्गदो मयम् । स्कन्द पुनश्चन्द्रणख विघ्न चन्द्रोदरात्मज ॥ १९६ ॥
केतु भामण्डलनृप श्रीदत्तो जम्बुमालिनम् । कुम्भकर्णसुत कुम्भ पवनञ्जयनन्दन ॥ १९७ ॥
किष्किन्धेश सुमालाख्य कुन्दो धूम्राक्षराक्षसम् । वालिसूश्चन्द्ररश्मिश्च भट सारणराक्षसम् ॥ १९८ ॥
राक्षसानेवमन्योऽन्यमरौत्सु कपयोऽपरे । अयुध्यन्त च तै सार्धं नक्रैर्नक्रा इवार्णवे ॥ १९९ ॥
एव युद्धे वर्तमाने भीषणेभ्योऽपि भीषणे । लक्ष्मणायामुचत्क्रोधादस्त्र तामसमिन्द्रजित् ॥ २०० ॥
तदस्त्र तपनास्त्रेण सौमित्रि शत्रुतापन । सद्यो विद्रावयामासाग्निना मदनपिण्डवत् ॥ २०१ ॥
सौमित्रिर्नागपाशास्त्र मुमोचेन्द्रजित क्रुधा । तन्तुनाम्भसि हस्तीव स तेन द्रागबध्यत ॥ २०२ ॥
आक्रम्यमाणसर्वाङ्गो नागास्त्रेण दशास्यज । निपपाताशनिरिव दारयन् सागराम्बराम् ॥ २०३ ॥
चिक्षेप स्वरथाङ्के स विराधो लक्ष्मणाज्ञया । कारापाल इवानैषीन्निजे च शिबिरे द्रुतम् ॥ २०४ ॥
नागपाशै कुम्भकर्णं त्वबध्नाल्लक्ष्मणाग्रज । भामण्डलस्त शिबिरेऽनैषीद्रामाज्ञया तत ॥ २०५ ॥
अन्येऽपि प्रतियोद्धारो बद्धा रामस्य सैनिकै । मेघवाहनमुख्यास्ते निन्यिरे शिबिरे निजे ॥ २०६ ॥

---

१ मदनो भाषाया 'मीण' इति ख्यात । २ स्वरथमध्ये । ३ कारागृहरक्षक ।

दृष्ट्वा दशमुखस्तत्तु क्रोधशोकसमाकुलः । विभीषणाय चिक्षेप शूलं मूलं जयश्रियः ॥ २०७ ॥
तच्छूलमन्तरालेऽपि कदलीकाण्डलीलया । चकार कणशो रामावरजः पत्रिभिः शितैः ॥ २०८ ॥
धरणेन्द्रप्रदत्तांताममोघविजयाह्वयाम् । विजयार्थी दशग्रीवो महाशक्ति समुद्दधे ॥ २०९ ॥
धगद्धगिति ज्वलन्तीं तडत्तडिति नादिनीम् । संहाराब्दतडिल्लेखामिव खेऽभ्रमयत्स ताम् ॥ २१० ॥
अपसस्रुर्दिवि सुरा दृशं सैन्यान्यमीलयन् । तां विलोक्य न केऽप्यस्थुः सुस्थितं सुस्थिता अपि ॥ २११ ॥
रामः सौमित्रिमित्यूचेऽस्माकमेष विभीषणः । आगन्तुर्हन्यते हन्त धिग्न आश्रितघातिनः ॥ २१२ ॥
इति रामवचः श्रुत्वा सौमित्रिर्मित्रवत्सलः । विभीषणाग्रे गत्वास्थादाक्षिपन् दशकन्धरम् ॥ २१३ ॥
पुरःस्थं गरुडस्थं तं प्रेक्ष्योवाच दशाननः । न तुभ्यं शक्तिरुत्क्षिप्ता मा मृथाः परमृत्युना ॥ २१४ ॥
म्रियस्व यदि वा मार्यस्त्वमेवासि यतो मम । वराकस्त्वत्पदे ह्येष ममाग्रेऽस्थाद्विभीषणः ॥ २१५ ॥
इत्युक्त्वा भ्रमयित्वा तां शक्तिं रामानुजन्मने । मुमोच पतदुत्पाताशनिकल्पां दशाननः ॥ २१६ ॥
तामापतन्तीं सौमित्रिः सुग्रीवो हनुमान्नलः । भामण्डलो विराधोऽन्येऽप्यस्त्रैः स्वैः स्वैरताडयन् ॥ २१७ ॥
सावज्ञाय तदस्त्रौघं व्यालद्विप इवाङ्कुशम् । उर्वानलः इवाम्भोधौ लक्ष्मणोरःस्थलेऽपतत् ॥ २१८ ॥
तया भिन्नो महीपृष्ठे निपपात च लक्ष्मणः । उत्पपात च तत्सैन्ये विष्वग्घाहा रवो महान् ॥ २१९ ॥
क्रुद्धोऽथ ज्येष्ठकाकुत्स्थो जिघत्सुरिव रावणम् । आयोधयितुमारेभे पञ्चाननरथस्थितः ॥ २२० ॥
क्षणाच्चकार विरथं पञ्चाननरथो द्विषम् । दशाननोऽपि वेगेनाध्यारुरोह रथान्तरम् ॥ २२१ ॥

---

१ पतत् यत् उत्पातवज्रं तत्सदृशीम् । २ वाडवाग्निरिव । ३ हन्तुमिच्छुः ।

भङ्क्त्वा भङ्क्त्वा रथानेव पञ्चवारान् दशाननम् । काकुत्स्थो विरथीचक्रे जगदद्वैतपौरुष[1] ॥ २२२ ॥
दशास्योऽचिन्तयच्चैव भ्रातृस्नेहादयं स्वयम् । मरिष्यत्येव तत्किं मे योधितेनाधुनामुना ॥ २२३ ॥
दशग्रीवो विमृश्यैव ययौ लङ्कापुरीं द्रुतम् । अस्तं जगाम च रवी रामशोकादिवातुर ॥ २२४ ॥
भग्नेऽथ रावणे रामो निवृत्त्यैयाय लक्ष्मणम् । तं च दृष्ट्वा निपतितं पपात भुवि मूर्छित ॥ २२५ ॥
सुग्रीवादिभिरासिक्तो रामश्चन्दनवारिणा । लब्धसञ्ज्ञो निपद्योपसौमित्री[2]त्यगदद्रुदन् ॥ २२६ ॥
वत्स किं बाधते वत्स ब्रूहि तूष्णीं स्थितोऽसि किम् । सञ्ज्ञयापि समाख्याहि प्रीणयाग्रजमात्मन ॥ २२७ ॥
एते त्वन्मुखमीक्षन्ते सुग्रीवाद्यास्तवानुगा । नानुगृह्णासि किं वाचा दृशा वा प्रियदर्शन ॥ २२८ ॥
जीवन्रणाद्रावणोऽगादिति लज्जावशाद्ध्रुवम् । न भाषसे तद्वापस्त्व पूरयिष्ये तवेप्सितम् ॥ २२९ ॥
रे रे रावण दुष्टात्मंस्तिष्ठ तिष्ठ क्व यास्यसि । एष प्रस्थापयामि त्वां नचिराय महापथे ॥ २३० ॥
इत्युक्त्वा धनुरास्फाल्योदस्थाद्यावद्रघूद्वह । तावत् कपीश्वरैरेवमूचे विनयपूर्वकम् ॥ २३१ ॥
स्वामिन्निशेयमगमल्लङ्कां च स निशाचर । शक्तिप्रहारविधुर स्वामी नश्चैष वर्तते ॥ २३२ ॥
धैर्यमाधेहि जानीहि हतमेव दशाननम् । प्रतिजागरणोपाय सौमित्रेरेव चिन्तय ॥ २३३ ॥
भूयो रामो जगादैवं हृता भार्या हतोऽनुज । तिष्ठत्यद्यापि रामोऽयं शतधा न विदीर्यते ॥ २३४ ॥
सखे सुग्रीव हनुमन् भामण्डल नलाङ्गद । विराधाद्याश्च सर्वेऽपि यात स्वौकसि सम्प्रति ॥ २३५ ॥
सीतापहारात् सौमित्रिवधादप्यधिक शुचे । सखे विभीषणामुत्र यत्कृतार्थीकृतोऽसि न ॥ २३६ ॥

---

१ जगत्यद्वितीयपराक्रमः । २ सौमित्रेः समीपमुत्सौमित्रि ।

भ्रातः पश्य परं बन्धो निजबान्धववर्त्मना । नीयमानं स्वैबन्धुं तं बन्धुरूपेण वैरिणम् ॥ २३७ ॥
भ्रातः कृतार्थीकृत्य त्वामनुयास्यामि लक्ष्मणम् । लक्ष्मणं हि विना किं मे सीतया जीवितेन च ॥ २३८ ॥
विभीषणो बभाषेऽथ किमधैर्यमिदं प्रभो । शक्त्या हतोऽपि ह्यनया पुमान् जीवति यामिनीम् ॥ २३९ ॥
मन्त्रतन्त्रादिना घातप्रतीकाराय सर्वथा । प्रयत्यतां प्रभो यावन्न विभाति विभावरी ॥ २४० ॥
आमेति राघवेणोक्ते सुग्रीवाद्यास्तु विद्यया । ससप्राकारांश्चतुर्द्वारान् राघवौ परितो व्यधुः ॥ २४१ ॥
प्राच्यां द्वारेषु तत्रास्थुः सुग्रीवः पावनञ्जयिः । तारः कुन्दो दधिमुखो गवाक्षो गवयः क्रमात् ॥ २४२ ॥
उदीच्यामङ्गदः कूर्मोऽङ्गो महेन्द्रो विहङ्गमः । सुषेणश्चन्द्ररश्मिश्च द्वारेष्वस्थुः क्रमादमी ॥ २४३ ॥
प्रतीच्यां नीलसमरशीलदुर्धरसन्मथाः । जयश्च विजयश्चैव सम्भवश्चावतस्थिरे ॥ २४४ ॥
भामण्डलो विराधश्च गजो भुवनजिन्नलः । मैन्दो विभीषणश्चास्थुर्दक्षिणस्यां क्रमादमी ॥ २४५ ॥
मध्ये कृत्वेति काकुत्स्थौ सुग्रीवाद्या महाभुजाः । प्रजागरपरास्तस्थुरात्मारामा इवोद्यताः ॥ २४६ ॥
सीतायाः कश्चिदाचख्यौ यच्छक्त्या लक्ष्मणो हतः । प्रातर्विपत्स्यते रामभद्रोऽपि भ्रातृसौहृदात् ॥ २४७ ॥
वज्रनिर्घोषवद्घोरं तच्छ्रुत्वा जनकात्मजा । पपात मूर्छया पृथ्व्यां लतेव पवनाहता ॥ २४८ ॥
विद्याधरीभिरम्भोभिः संसिक्ता लब्धचेतना । उत्थाय विललापैवं जानकी करुणस्वरम् ॥ २४९ ॥
हा वत्स लक्ष्मण क्वागास्त्यक्त्वैकाकिनमग्रजम् । मुहूर्तमपि हि स्थातुं विना त्वामेष न क्षमः ॥ २५० ॥
धिगहं मन्दभाग्यास्मि यतो मम कृतेऽधुना । स्वामिदेवरयोर्दैवतुल्ययोरीदृगागतम् ॥ २५१ ॥

---

१ लक्ष्मणवर्त्मना मृत्युरूपेणेत्यर्थः । २ स्वस्य तव बन्धुं रावणम् । ३ रात्रि । ४ योगिनः ।

प्रसीद मत्प्रवेशाय द्विधा भव वसुधरे । प्राणनिर्वाणहेतोस्त्व भव वा हृदय द्विधा ॥ २५२ ॥
एव रुदन्तीं करुणं सीता कापि कृपावती । अवलोक्यावलोकिन्या विद्याधर्यब्रवीदिति ॥ २५३ ॥
भविष्यत्यक्षताङ्गस्ते प्रभाते देवि देवर । सम च रामभद्रेण त्वामेत्यानन्दयिष्यति ॥ २५४ ॥
स्वस्थावस्था तद्गिरास्यात् काकुत्स्थगृहिणी तदा । सूर्योदय चिन्तयन्ती चक्राकीव जाग्रती ॥ २५५ ॥
सौमित्रिर्मारितोऽद्येति क्षण जहर्ष रावण । क्षण स्मृत्वा भ्रातृपुत्रमित्रबन्ध रुरोद च ॥ २५६ ॥
हा वत्स कुम्भकर्ण त्व ममात्मैवापर पर । द्वितीयाविव मे बाहू हेन्द्रजि मेघवाहनौ ॥ २५७ ॥
हा वत्सा जम्बुमाल्याद्या मम रूपान्तरोपमा । अप्राप्तपूर्वं प्राप्तास्थ कथ बध गजा इव ॥ २५८ ॥
स्मार स्मार स्वबन्धूनामित्थ व धादि नूतनम् । भूयो भूयो दशग्रीवो मुमूर्छ च रुरोद च ॥ २५९ ॥
इतश्च पद्मसैन्ये प्राक्प्राकारद्वाररक्षकम् । भामण्डलमुपेत्यैव कोऽपि विद्याधरोऽवदत् ॥ २६० ॥
पद्मपादान् दर्शय मे यदासौ ननु पश्यसि । अलं लक्ष्मणजीवातुमास्यास्यामि हितोऽस्मि व ॥ २६१ ॥
विधृत्य पाणिना दोष्णि नीतो भामण्डलेन स । पद्मस्य पादपद्मान्ते प्रणम्यैव व्यजिज्ञपत् ॥ २६२ ॥
सङ्गीतपुरनाथस्य शशिमण्डलभूपते । तनय प्रतिचन्द्रोऽहं सुप्रभाकुक्षिसम्भव ॥ २६३ ॥
क्रीडार्थं सकलत्रोऽहं चलितोऽन्येद्युरम्बरे । दृष्ट सहस्रविजयनाम्ना विद्याधरेण च ॥ २६४ ॥
तेन मैथुनिकाद्वैराद्योधितोऽहं चिर तदा । पातितश्चण्डरवया शक्त्या चाहत्य भूतले ॥ २६५ ॥
साकेतपुर्यां माहेन्द्रोदयोद्याने लुठन् भुवि । दृष्टश्च भरतेनाहं त्वद्भ्रात्रातिकृपालुना ॥ २६६ ॥

सद्यो गन्धाम्बुभिस्तेन सिक्तोऽहं पृथिवीभुजा । मत्तश्च निरगाच्छक्तिर्दस्युः परगृहादिव ॥ २६७ ॥
सद्यो रूढप्रहारेण मया विस्मितचेतसा । पृष्टो गन्धाम्बुमाहात्म्यमित्यशंसत्तवानुजः ॥ २६८ ॥
सार्थवाहो विन्ध्यनामाग्यात्गजपुरादिह । एकस्तन्महिषो मार्गेऽतिभारत्रुटितोऽपतत् ॥ २६९ ॥
तन्मूर्ध्नि पादं विन्यस्य सञ्चचार पुरीजनः । उपद्रवेण महता विपन्नः सोऽथ सैरिभः ॥ २७० ॥
सोऽकामनिर्जरायोगाच्छ्वेताङ्करपुरेश्वरः । सुरो वायुकुमारोऽभून्नाम्ना पवनपुत्रकः ॥ २७१ ॥
ज्ञात्वा चावधिना पूर्वं मृत्युं प्रकुपितोऽथ सः । पुरे जनपदे चास्मिन् व्याधीन्नानाविधान् व्यधात् ॥ २७२ ॥
देशे गृहे च न व्याधिरभून्मन्मातुलस्य तु । द्रोणमेघनरेन्द्रस्य मन्महीवर्तिनोऽपि हि ॥ २७३ ॥
अव्याधिकारणं पृष्टो मया द्रोणघनोऽवदत् । भार्या प्रियङ्करा मेऽभूत्पुरातिव्याधिबाधिता ॥२७४ ॥
जाते गर्भे तत्प्रभावाद्व्याधिनामुच्यताथ सा । सुषुवे च क्रमात्पुत्रीं विशल्यामभिधानतः ॥ २७५ ॥
त्वद्देश ■ मद्देशेऽप्युद्भूते व्याध्युपद्रवे । विशल्यास्नानतोयेन सिक्तो लोकोऽभवन्निरुक् ॥ २७६ ॥
पृष्टो मया सत्यभूतशरणो मुनिरन्यदा । वदति स्म विशल्यायाः प्राग्जन्मतपसः फलम् ॥ २७७ ॥
व्रणसंरोहणं शल्यापहारो व्याधिसङ्क्षयः । नृणां स्नानाम्भसाप्यस्या भावी भर्ता च लक्ष्मणः ॥ २७८ ॥
तथा मुनिगिरा सम्यग्ज्ञानादनुभवादपि । विशल्यास्नानपयसः प्रभावो निश्चितो मया ॥ २७९ ॥
इत्युदित्वा द्रोणमेघो विशल्यास्नपनोदकम् । ममापि ह्यर्पयत्तेनामवद्भूमिर्ममाप्यरुक् ॥ २८० ॥
तस्याः स्नानाम्भसानेन मया सिक्तस्त्वमप्यहो । निःशक्तिशल्यः संरूढव्रणश्च त्वममूः क्षणात् ॥ २८१ ॥

१ चौरः । २ महिषः । ३ रोगरहित ।

भरतस्य ममाप्येवमुत्पन्नः प्रत्ययः प्रभो । आ प्रत्यूषादानयत विशल्यास्नानवारि तत् ॥ २८२ ॥
त्वर्यतां त्वर्यतां तस्मात्प्रत्यूषे किं करिष्यथ । पर्यस्ते शकटे हन्त किं कुर्वीत गणाधिपः ॥ २८३ ॥
भामण्डलं हनूमन्तमङ्गदं च रघूद्वहः । आदिक्षदभिभरतं विशल्यास्नानवारिणे ॥ २८४ ॥
प्रययुस्ते विमानेनायोध्यां पवनरंहसा । प्रासादाग्रे च ददृशुः शयानं भरतं नृपम् ॥ २८५ ॥
भरतस्य प्रबोधाय ते गीतं चक्रुरम्बरे । राजकार्येऽपि राजानमुत्थाप्यन्ते ह्युपायतः ॥ २८६ ॥
विबुध्य भरतेनापि दृष्टः पृष्टः पुरो नमन् । ऊचे भामण्डलः कार्यं नासस्यासे प्ररोचना ॥ २८७ ॥
सेत्स्यत्येतत्त्वया तत्रेत्युपेति भरतस्ततः । तद्विमानाधिरूढोऽगात् द्रुतं कौतुकमङ्गलम् ॥ २८८ ॥
भरतेन द्रोणघनो विशल्यामथ याचितः । सहोद्वाह्य स्त्रीसहस्रसहितां तामदत्त च ॥ ॥२८९ ॥
भामण्डलोऽप्ययोध्याया मुक्त्वा भरतमुत्सुकः । आययौ सपरीवारो विशल्यासंयुतस्ततः ॥ २९० ॥
ज्वलद्दीपविमानस्थो भीतैः सूर्योदयभ्रमात् । क्षणं दृष्टो निशि सोऽधाद्विशल्यामुपलक्ष्मणम् ॥ २९१ ॥
तया च पाणिना स्पृष्टाल्लक्ष्मणात्तत्क्षणादपि । निर्जगाम महाशक्तिर्यष्टेरिव महोरगी ॥ २९२ ॥
सद्युत्पतन्ती सा शक्तिः समुत्पत्य हनूमता । प्रसभं जगृहे श्येनविहगेनेव वर्तिका ॥ २९३ ॥
साभ्यूचे देवतारूपा न मे दोषोऽस्ति कश्चन । प्रदत्ता धरणेनास्मै प्रज्ञप्तिभगिनी ह्यहम् ॥ २९४ ॥
विशल्याप्राग्भवतपस्तेजः सोढुमनीश्वरी । एषा यास्यामि मा मुञ्च प्रेष्यमायादनागसम् ॥ २९५ ॥

---

१ प्रस्तावना रोचकवाक्यं वा । २ सह कन्यकेनेत्यध्याहारः स” ‘ह” इति पृथक् पदं वा तत्र हेति स्फुटार्थेऽव्ययम् । ३ किङ्करमायातं ।

इत्युक्तो मुक्तवान् शक्तिं मारुतिस्तां महाभुजः । मुक्तमात्रा च सा शक्तिर्लज्जितेव तिरोदधे ॥ २९६ ॥
विशल्यापि हि सौमित्रिं भूयः पस्पर्श पाणिना । विलिलेप च गोशीर्षचन्दनेन शनैः शनैः ॥ २९७ ॥
रूढव्रणोऽथ सौमित्रिर्द्राक् प्रसुप्त इवोत्थितः । सस्वजे रामभद्रेण वर्षताश्रुजलं मुदा ॥ २९८ ॥
सर्वं विशल्यावृत्तान्तं रामस्तस्मै शशंस च । तत्स्नानपयसा चाशु स्वान् परांश्चाभ्यषेचयत् ॥ २९९ ॥
कन्यासहस्रसहितां विशल्यां रामशासनात् । तदानीमेव सौमित्रिरुपयेमे यथाविधि ॥ ३०० ॥
सौमित्रेर्जीवनोद्वाहोत्साहजन्मा महोत्सवः । विद्याधरनृपैश्चक्रे जगदाश्चर्यकारणम् ॥ ३०१ ॥
सौमित्रिर्जीवित इति चरैर्नक्तंचराधिपः । विज्ञाय मन्त्रयाञ्चक्रे समं मन्त्रिवरैरिति ॥ ३०२ ॥
अभवन्मम भावोऽयं सौमित्रिः शक्तिताडितः । प्रातर्मरिष्यति ततो रामोऽपि स्नेहपीडितः ॥ ३०३ ॥
यास्यन्ति कपयो नंष्ट्वा ते च मद्बन्धुसूनवः । कुम्भकर्णेन्द्रजिन्मुख्या स्वयमेष्यन्ति मामिह ॥ ३०४ ॥
अधुना दैववैगुण्याल्लक्ष्मणः सोऽपि जीवितः । मया मोचयितव्यास्ते कुम्भकर्णादयः कथम् ॥ ३०५ ॥
मन्त्रिणोऽप्येवमूचुस्त जानकीमोक्षणं विना । न मोक्षः कुम्भकर्णादिवीराणां अत्युताशिवम् ॥ ३०६ ॥
इयत्यपि गते स्वामिन् रक्ष रक्ष निजं कुलम् । उपायश्चात्र नान्योऽस्ति रामानुनयनं विना ॥ ३०७ ॥
रावणस्तानवज्ञाय दूतं सामन्तमादिशत् । सामदामदंडपूर्वमनुशिष्योपराघवम् ॥ ३०८ ॥
स गत्वा द्वाःस्थविज्ञप्तः सुग्रीवादिसमावृतम् । पद्मनाभं नमस्कृत्य व्याजहारेति धीरगीः ॥ ३०९ ॥
दशास्यस्त्वां वदत्येवं बन्धुवर्गं विमुञ्च मे । जानकीमनुमन्यस्व राज्यार्धं च गृहाण मे ॥ ३१० ॥

---

१ निशाचराधिप रावणः ।

त्रीणि कन्यासहस्राणि तुभ्यं दास्यामि तेन च । सन्तुष्य नो चेच्च सर्वं न ह्येतन्न च जीवितम् ॥ ३११ ॥
बभाषे पद्मनाभोऽथ नार्थो मे राज्यसम्पदा । न चान्यप्रमदावर्गभोगेन महतापि हि ॥ ३१२ ॥
प्रेषयिष्यत्यर्चयित्वा जानकीं रावणो यदि । तदा मोक्ष्यामि तद्भ्रातृतनयानन्यथा न हि ॥ ३१३ ॥
सामन्त पुनरप्यूचे राम नैतत्तवोचितम् । स्त्रीमात्रकस्यास्य कृते स्वं क्षेप्तुं प्राणसंशये ॥ ३१४ ॥
सौमित्रिरेकवारं यज्जीवितो रावणाहतः । जीविष्यति कथं सोऽद्य त्वं चामी च प्लवङ्गमाः ॥ ३१५ ॥
एकोऽपि रावणो हन्तुमिदं विश्वमपीश्वरः । सर्वथा तद्वचो मान्यमुदर्कं विमृश स्वयम् ॥ ३१६ ॥
लक्ष्मणस्तद्गिरा क्रुद्धोऽभ्यधाद्रे दूतपांसन । स्वशक्तिं परशक्तिं वा वेत्स्यद्यापि न रावणः ॥ ३१७ ॥
हतपक्षपरीवारो मार्याशेषीकृतोऽपि सन् । पौरुषं नाटयत्येष यथा का तस्य धृष्टता ॥ ३१८ ॥
शेषैकमूलमुशलच्छिन्नाशेषजटस्तरुः । यथा सोऽपि तथैकाङ्गः कियत्स्थास्यति रावणः ॥ ३१९ ॥
तद्गच्छ समाह्वय त्वं युद्धाय दशकन्धरम् । कृतान्त इव सज्जो मे तं व्यापादयितुं भुजः ॥ ३२० ॥
लक्ष्मणेनैवमाक्षिप्तो विमापितुमना स तु । उत्थाय धृत्वा ग्रीवायां वानरैर्निरवास्यत ॥ ३२१ ॥
रावणाय स गत्वाख्यत् सर्वं राघववाचिकम् । सचिवान् रावणोऽप्यूचे किं कार्यं ब्रूत सम्प्रति ॥ ३२२ ॥
अब्रुवन्मन्त्रिणोऽप्येव सीतार्पणमिहोचितम् । व्यतिरेकफलं दृष्टं पश्यान्वयफलं प्रभो ॥ ३२३ ॥
अन्वयव्यतिरेकाभ्यां सर्वं कार्यं परीक्ष्यते । एकेन व्यतिरेकेण किं स्थितोऽसि दशानन ॥ ३२४ ॥
अक्षता बहवोऽद्यापि बान्धवास्तनयाश्च ते । सीतार्पणाद्विमुक्तैस्तैः सममेधस्व सम्पदा ॥ ३२५ ॥

---

१ सन्तुष्टो भव । २ जडाः शाखाः । ३ सीतार्पणाभावेऽनर्थरूपं फलं दृष्टमिति व्यतिरेकः, सीतार्पणरूपस्यान्वयस्य फलं पश्येति सम्बन्धः ।

तेषां सीतार्पणगिरा मर्मणीव क्षतोऽधिकम् । अन्तर्दूनो दशमुखश्चिरं स्वयमचिन्तयत्[१] ॥ ३२६ ॥
विद्याया बहुरूपाया हृदि निर्णीयं साधनम् । शान्तिचैत्यं ययौ शान्तकषायीभूय रावणः ॥ ३२७ ॥
स्नात्रं श्रीशान्तिनाथस्य पयस्कुम्भैर्दशाननः । स्वयमिन्द्र इवाकार्षीद्भक्त्या विकसिताननः ॥ ३२८ ॥
गोशीर्षचन्दनेनाङ्गरागं पुष्पैश्च दैवतैः । पूजां विधाय श्रीशान्तेः स्तुतिमेव विनिर्ममे ॥ ३२९ ॥
देवाधिदेवाय जगत्त्रायिने[२] परमात्मने । श्रीमते शान्तिनाथाय षोडशायार्हते नमः ॥ ३३० ॥
श्रीशान्तिनाथ भगवन् भवाम्भोनिधितारण । सर्वार्थसिद्धमन्त्राय त्वन्नाम्नेऽपि नमो नमः ॥ ३३१ ॥
ये तवाष्टविधां पूजां कुर्वन्ति परमेश्वर । अष्टापि सिद्धयस्तेषां करस्था अणिमादयः ॥ ३३२ ॥
धन्यान्यक्षीणि यानि त्वां पश्यन्ति प्रतिवासरम् । तेभ्योऽपि धन्यं हृदयं तैर्दृष्टो[३] येन धार्यसे ॥ ३३३ ॥
देव त्वत्पादसंस्पर्शादपि स्यान्निर्मलो जनः । अयोऽपि हेमीभवति स्पर्शवेधिरसान्न किम् ॥ ३३४ ॥
त्वत्पादाब्जप्रणामेन नित्यं भूलुण्ठनैः प्रभो । भूयात्तिलकीभूयान्मम भाले किणावलिः[४] ॥ ३३५ ॥
पदार्थैः पुष्पगन्धाद्यैरुपहारीकृतैस्तव । प्रभो भवतु मद्राज्यसम्पद्वल्लेः सदा फलम् ॥ ३३६ ॥
भूयो भूयः प्रार्थये त्वामिदमेव जगद्विभो । भगवन् भूयसी भूयात्त्वयि भक्तिर्भवे भवे ॥ ३३७ ॥
स्तुत्वेति शान्तिं लङ्केशः पुरो रत्नशिलास्थितः । तां साधयितुमारेभे विद्यामक्षस्रजं दधत् ॥ ३३८ ॥
अथ मन्दोदरी द्वाःस्थं यमदण्डमदोऽवदत् । जिनधर्मरतोऽष्टाहान्यस्तु सर्वोऽपि पूर्जनः ॥ ३३९ ॥
न करिष्यति यस्त्वेवं तस्य दण्डो वधात्मकः । भविष्यतीति लङ्कायामाघोषय हतानकः[५] ॥ ३४० ॥

---

१ निश्चित्य । २ जगद्रक्षित्रे । ३ तैरक्षिभिर्दृष्टः । ४ क्षतावलिः । ५ हत आनको वाद्यविशेषो येन स ।

तदादेशेन स द्वास्थः पुर्यामाघोषयत्तथा । तच्च चारनरैरेत्य सुग्रीवाय न्यवेद्यत ॥ ३४१ ॥
सुग्रीवोऽप्यब्रवीदेव न यावद्बहुरूपिणीम् । विद्यां साधयति स्वामिंस्तावत्साध्यो दशाननः ॥ ३४२ ॥
स्मित्वा पद्मोऽप्युवाचैवं शान्तं ध्यानपरायणम् । कथं दशास्यं गृह्णामि न ह्यहं स इव च्छली ॥ ३४३ ॥
इति रामवचः श्रुत्वा छन्नमेवाङ्गदादयः । विद्याभ्रंशाय लङ्केशं ययुश्चैत्यस्थितं प्रभुम् ॥ ३४४ ॥
विदधुर्विविधांस्तत्रोपसर्गांस्ते निरर्गला । मनागपि न तु ध्यानाच्चालीद्दशकन्धरः ॥ ३४५ ॥
अथाङ्गदो जगादैवं रामाद्भीतेन किं त्वया । इदं पाखण्डमारब्धमप्रस्तावशरणेन भो ॥ ३४६ ॥
त्वया परोक्षे भर्त्तुर्हृता भार्या महासती । मन्दोदरीं तु ते पत्नीं पश्यतोऽपि हराम्यहम् ॥ ३४७ ॥
इत्युदीर्यामन्दकोपोऽकर्षन्मन्दोदरीं कचे । सोऽनाथामिव रुदन्तीं कुररीकरुणस्वराम् ॥ ३४८ ॥
रावणो ध्यानसंलीनः प्रेक्षाञ्चक्रेऽपि तां न हि । प्रादुरासीच्च सा विद्या द्योतयन्ती नभस्तलम् ॥ ३४९ ॥
सेत्यूचे तव सिद्धास्मि ब्रूहि किं करवाणि भो । करोमि ते वशे विश्वं कियन्मात्रौ हि राघवौ ॥ ३५० ॥
रावणः प्रत्युवाचैवं सर्वं निष्पद्यते त्वया । स्मृता समायाते काले स्वस्थानं गच्छ सम्प्रति ॥ ३५१ ॥
तद्विसृष्टा तिरोऽभूत सा विद्या तेऽपि वानराः । स्कन्धावारं निजं जग्मुरुत्पत्य पवमानवत् ॥ ३५२ ॥
मन्दोदर्यङ्गदोदन्तं शुश्राव च दशाननः । चक्रे च सद्योऽहङ्कारगर्भं हुङ्कारमुच्चकैः ॥ ३५३ ॥
स्नात्वा भुक्त्वा च लङ्केशोऽगाद्देवरमणे वने । ऊचे सीतां च सुचिरं मया तेऽनुनयः कृतः ॥ ३५४ ॥
उज्झित्वा नियमभङ्गभीरुत्वमधुना पुनः । रमयिष्ये प्रसह्य त्वां हत्वा त्वत्पतिदेवरौ ॥ ३५५ ॥

तद्वाचा विषसंभ्रीच्या मूर्च्छिता जनकात्मजा । निपपात दशास्यस्य तस्यामाशेव तत्क्षणम् ॥ ३५६ ॥
कथञ्चिल्लब्धसद्ज्ञा सा जग्राहैवमभिग्रहम् । मृत्युश्चेद्रामसौमित्र्योस्तदास्त्वनशनं मम ॥ ३५७ ॥
तच्छ्रुत्वा रावणो दध्यौ रामे स्नेहो निसर्गजः । अस्यास्तदस्यां मे रागः स्थले कमलरोपणम् ॥ ३५८ ॥
कृत युक्तं मया तत्रावज्ञातो यद्विभीषण । नामात्याः मानिताः स्व च कुलमेतत्कलङ्कितम् ॥ ३५९ ॥
मुञ्चाम्येतामद्य चेत्तन्न विवेकपदे पतेत् । रामाक्रान्तेन मुक्तेयमिति स्यात्प्रत्युतायशः ॥ ३६० ॥
बद्ध्वेह रामसौमित्री समानेष्ये ततस्तयोः । अर्पयिष्याम्यमूं धर्म्यं यशस्यं च हि तद्भवेत् ॥ ३६१ ॥
इति निश्चित्य लङ्केशस्तामतीत्य विभावरीम् । युद्धे चचालाशकुनैर्वार्यमाणोऽपि दुर्मदः ॥ ३६२ ॥
भूयः प्रववृते युद्धं रामरावणसैन्ययोः । अत्युद्भटभटभुजास्फोटत्रासितदिग्गजम् ॥ ३६३ ॥
विधूयाशेषरक्षांसि तूलानीव महाबलः । लक्ष्मणस्ताडयामास विशिखैर्दशकन्धरम् ॥ ३६४ ॥
सौमित्रेर्विक्रमं दृष्ट्वा साशङ्को दशकन्धरः । सस्मार बहुरूपां तां विद्यां विश्वभयङ्कराम् ॥ ३६५ ॥
स्मृतिमात्रोपस्थितायां विद्यायां तत्र रावणः । विचक्रे भैरवाण्याशु स्वानि रूपाण्यनेकशः ॥ ३६६ ॥
भूमौ नभसि पृष्ठेऽग्रे पार्श्वयोरपि लक्ष्मणः । अपश्यद्रावणानेव विविधायुधवर्षिणः ॥ ३६७ ॥
तावद्रूप इवैकोऽपि तार्क्ष्यस्थो लक्ष्मणोऽपि तान् । जघान रावणान् बाणैश्चिन्तितोपनतैः शरैः ॥ ३६८ ॥
नारायणस्य तैर्बाणैर्विधुरो दशकन्धरः । सस्मार जाज्वलच्चक्रमर्धचक्रित्वलाञ्छनम् ॥ ३६९ ॥
रोषारुणाक्षस्तच्चक्रं भ्रमयित्वा नभस्तले । मुमोच रावणः शस्त्रमन्त्यं रामानुजन्मने ॥ ३७० ॥

१ विषतुल्यया । २ सीताया विषये रावणस्याशेव । ३ भवेत् । ४ वायु ।

कृत्वा प्रदक्षिणां तत्तु सौमित्रेर्दक्षिणे करे । अवतस्थे रविरिवोदयपर्वतमूर्धनि ॥ ३७१ ॥
विषण्णो रावणो दध्यौ सत्यं जातं मुनेर्वचः । तेषां बिभीषणादीनां सत्यश्चालोचनिर्णयः ॥ ३७२ ॥
विषण्णं भ्रातरं प्रेक्ष्य भूयोऽप्यूचे बिभीषणः । भ्रातरद्यापि वैदेहीं मुञ्च त्वं चेज्जिजीविषुः ॥ ३७३ ॥
क्रुद्धस्तु रावणोऽवोचत् किं मेऽस्त्रं चक्रमेव रे । क्षिप सचक्रमप्येनं द्राग्घनिष्यामि मुष्टिना ॥ ३७४ ॥
इति दर्पाद्विब्रुवतो रक्षोनाथस्य लक्ष्मणः । वक्षस्तेनैव चक्रेण कूष्माण्डवदपाटयत् ॥ ३७५ ॥
तदा च ज्येष्ठकृष्णैकादश्यामह्नश्च पश्चिमे । यामे मृतो दशग्रीवश्चतुर्थं नरकं ययौ ॥ ३७६ ॥

सपदि जय जयेति व्याहरद्भिर्द्युसद्भिर्व्यरचि कुसुमवृष्टिर्लक्ष्मणस्योपरिष्टात् ।
समजनि च कपीनां ताण्डवं चण्डहर्षोत्थितकिलकिलनादापूर्णरोदोनिकुञ्जम् ॥ ३७७ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि रावणवधो नाम सप्तमः सर्गः समाप्तः ।



## ॥ अथाष्टमः सर्गः प्रारभ्यते ॥

अथो विभीषणस्तत्र कान्दिशीकान्निशाचरान् । एवमाश्वासयामास ज्ञातिस्नेहवशीकृतः ॥ १ ॥
पद्मनारायणावेतावष्टमौ बलशार्ङ्गिणौ । शरण्यौ शरणायाशु श्रयध्वमविशङ्किता ॥ २ ॥
ते सर्वे शिश्रियुः पद्मसौमित्री तौ च चक्रतुः । तेषां प्रसादं वीरा हि प्रजासु समदृष्टयः ॥ ३ ॥
हतं च भ्रातरं दृष्ट्वा शोकावेशाद्विभीषणः । मर्तुकामः स्वयमपि चकर्ष च्छुरिकां निजाम् ॥ ४ ॥
तया स्वकुक्षिमाघ्नातं दध्रे रामो विभीषणम् । हा भ्रातर्भ्रातरित्युच्चैः क्रन्दन्तं करुणाक्षरम् ॥ ५ ॥
मन्दोदर्यादिभिः सार्धं रुदन्तमुपरावणम् । इति तं बोधयामास पद्मनाभः सलक्ष्मणः ॥ ६ ॥
ईदृक्पराक्रमः सोऽयं न हि शोच्यो दशाननः । यस्याशशङ्किरे दूरे समरेष्वमरा अपि ॥ ७ ॥
वीरवृत्त्यानया मृत्युं गतोऽसौ कीर्तिभाजनम् । तदस्योत्तरकार्याणि कुरुध्वं रुदितैरलम् ॥ ८ ॥
इत्युदित्वा पद्मनाभो महात्मा प्राग्बन्धनान् । कुम्भकर्णेन्द्रजिन्मेघवाहनादीनमोचयत् ॥ ९ ॥
विभीषणः कुम्भकर्णः शक्रजिन्मेघवाहनः । मन्दोदर्यपि सम्भूयापरेऽपि पतदश्रवः ॥ १० ॥
दशग्रीवाङ्गसंस्कारं सद्यो गोशीर्षचन्दनैः । कर्पूरागरुसम्मिश्रैर्विदधुर्ज्वालितानलैः ॥ ११ ॥

॥ युग्मम् ॥

पद्मः पद्मसरस्येत्य ते च स्नात्वा जलाञ्जलिम् । सममश्रुजलैः कोष्णैः प्रददुर्दशमौलये ॥ १२ ॥
गिराभिरामया रामः किरन्निव सुधारसम् । सलक्ष्मणः कुम्भकर्णप्रभृतीनित्यभाषत ॥ १३ ॥

---

१ विभीषणादयः । २ ईषदुष्णैः ।

पूर्ववत् स्वस्वराज्यानि कुरुध्वमधुनापि हि । युष्मल्लक्ष्म्या न न कृत्य हे वीरा क्षेममस्तु व ॥ १४ ॥
इत्युक्त्वा पद्मनाभेन युगपच्छोकविस्मयौ । बिभ्राणा कुम्भकर्णाद्या जगदुर्गद्गदाक्षरम् ॥ १५ ॥
नाथौ राज्येन न कश्चिद्राज्येनापि महाभुज । ग्रहीष्याम परिव्रज्या मोक्षसाम्राज्यसाधनीम् ॥ १६ ॥
अत्रान्तरे च कुसुमायुधोद्याने महामुनि । अप्रमेयबलो नाम चतुर्ज्ञानी समाययौ ॥ १७ ॥
तत्रैव निशि तस्याभूत् केवलज्ञानमुज्ज्वलम् । चक्रुश्च केवलज्ञानमहिमान दिवौकस ॥ १८ ॥
प्रातश्च रामसौमित्री कुम्भकर्णादयश्च ते । उपेत्य तमवन्दन्त ततो धर्म च शुश्रुवु ॥ १९ ॥
पप्रच्छतुर्देशनान्ते शक्रजिन्मेघवाहनौ । पर वैराग्यमापन्नौ पुरातनभवान्निजान् ॥ २० ॥
मुनि सोऽप्याभणीत्पुर्यां कौशाम्ब्यामिह भारते । निःस्वौ बन्धू युवां जातौ नाम्ना प्रथमपश्चिमौ ॥ २१ ॥
तावन्यदा भवदत्ताख्य श्रुत्वा महामुने । व्रत जगृहतु शान्तकषायौ च विजह्रतु ॥ २२ ॥
अन्येद्युस्तौ तु कौशाम्ब्यां गतौ ददृशतुर्नृपम् । पत्न्येन्दुमुख्या क्रीडन्त नन्दिघोष मधूत्सवे ॥ २३ ॥
त दृष्ट्वा पश्चिमोऽकार्षीन्निदान तपसामुना । ईदृक्क्रीडापर पुत्रो भूयासमनयोरहम् ॥ २४ ॥
साधुभिर्वार्यमाणोऽपि निदानान्न न्यवर्तत । मृत्वा च पश्चिमो जज्ञे तयोस्तु रतिवर्धन ॥ २५ ॥
क्रमेणोद्यौवन प्राप्तराज्य स रतिवर्धन । पितेव रेमे विविध रमणीभि समावृत ॥ २६ ॥
मृत्वा प्रथमसाधुस्तु निर्निदानतपोवशात् बभूव पञ्चमे कल्पे त्रिदश परमर्द्धिक ॥ २७ ॥

---

१ वसन्तोत्सवे । २ तुल्य पुत्र ।

सोऽवधेर्भ्रांतरं ज्ञात्वा तत्रोत्पन्नं महीपतिम् । तं बोधयितुमभ्यागान्मुनिरूपधरः सुरः ॥ २८ ॥
रतिवर्धनराजेनार्पिते पीठे निषद्य सः । शशंस प्राग्भवं तस्य स्वस्य च भ्रातृसौहृदात् ॥ २९ ॥
सञ्जातजातिस्मरणाद्विरक्तो रतिवर्धनः । प्राव्राजीदथ मृत्वा च ब्रह्मलोके सुरोऽभवत् ॥ ३० ॥
च्युत्वा ततो विदेहेषु विबुद्धनगरे युवाम् । अभूतं भ्रातरौ भूपौ प्रव्रज्यान्युतमीयथुः ॥ ३१ ॥
च्युत्वाच्युतादशास्यस्य प्रतिविष्णोस्तु सम्प्रति । पुत्रौ युवामजायेथामिन्द्रजिन्मेघवाहनौ ॥ ३२ ॥
रतिवर्धनमाता तु भवं भ्रान्त्वेन्दुमुख्यपि । मन्दोदरी समभवज्जननी युवयोरियम् ॥ ३३ ॥
कुम्भकर्णेन्द्रजिन्मेघवाहनाद्या निशम्य तत् । मन्दोदर्यादयश्चापि तदैवाददिरे व्रतम् ॥ ३४ ॥
मुनिं नत्वा तु तं रामः ससौमित्रिकपीश्वरः । बिभीषणेन प्रह्वेण वेत्रिणेवाग्रगामिना ॥ ३५ ॥
दर्श्यमानपथो विद्याधरीभिः कृतमङ्गलः । ऋद्ध्या महत्येन्द्र इव लङ्कायां प्राविशत्पुरि ॥ ३६ ॥
|| युग्मम् ||
गिरेः पुष्पगिरेर्मूर्धन्युद्याने तत्र मैथिलीम् । गत्वा ददर्श काकुत्स्थो यथाख्यातां हनूमता ॥ ३७ ॥
तामुत्क्षिप्य निजोत्सङ्गे द्वितीयमिव जीवितम् । तदैव जीवितम्मन्यो धारयामास राघवः ॥ ३८ ॥
इयं महासती सीता जयत्विति नभस्पथे । तदानीं जुघुषुः सिद्धगन्धर्वाद्याः प्रमोदिनः ॥ ३९ ॥
सीतादेव्या नमश्चक्रे पादौ प्रक्षालयन्निव । निरन्तरैरश्रुजलैः सुमित्रानन्दनो मुदा ॥ ४० ॥
चिरं जीव! चिरं नन्द चिरं जय महाशिषा ॥ इति ब्रुवाणा वैदेही जघ्रौ शिरसि लक्ष्मणम् ॥ ४१ ॥

---

...आसने ... ग्रन्थेण ... आकाशे ।। [illegible]

भामण्डलो नमश्चक्रे सीतां सीतापि तं मुदा । आशिषाऽनन्दयामास मुनिवाक्यसमानया ॥ ४२ ॥
स्वनामाख्यानपूर्वं च कपिराजो विभीषणः । हनुमानङ्गदोऽन्येऽपि प्रणेमुर्जनकात्मजाम् ॥ ४३ ॥
पौर्णमेन[1] शशाङ्केन चिरात् कुमुदिनीव सा । रामेण शुशुभे सीता विकासं समुपेयुषी ॥ ४४ ॥
ससीतोऽध्यास्य भुवनालङ्कारं राघवो गजम् । जगाम रावणावासं सुग्रीवाद्यैः समावृतः ॥ ४५ ॥
तदन्तश्च मणिस्तम्भसहस्राङ्कं जिनेशितुः । चैत्यं श्रीशान्तिनाथस्य प्रविवेश विवन्दिषुः ॥ ४६ ॥
विभीषणार्पितैस्तत्र कुसुमाद्यैरुपस्करैः । शान्तिमानर्च काकुत्स्थः सीतासौमित्रिसंयुतः ॥ ४७ ॥
विभीषणाभ्यर्थितोऽथ विभीषणगृहं ययौ । रामः ससीतासौमित्रिः सुग्रीवादिभिरन्वितः ॥ ४८ ॥
तत्र देवार्चनं स्नानभोजनादि च राघवः । चक्रे सपरिवारोऽपि मानयन् रावणानुजम् ॥ ४९ ॥
रामं सिंहासनासीनमथासीनो विभीषणः । वाससी परिधायोभे बभाषेऽथ कृताञ्जलिः ॥ ५० ॥
रत्नस्वर्णादिकोशोऽयमिदं हस्तिहयादि च । अयं च राक्षसद्वीपो[2] गृह्यतां पत्तिरस्मि ते ॥ ५१ ॥
राज्याभिषेकमधुना कुर्महे ते त्वदाज्ञया । पवित्रय पुरीं लङ्कां प्रसीदानुगृहाण माम् ॥ ५२ ॥
रामोऽप्युवाच दत्तं ते लङ्काराज्यं मया पुरा । व्यस्मार्षीस्तदिदानीं किं महात्मन् भक्तिमोहितः ॥ ५३ ॥
एवं निषिध्य तं रामो लङ्काराज्ये तदैव हि । अभ्यषिञ्चत् स्वयं प्रीतः प्रतिज्ञातार्थपालकः ॥ ५४ ॥
सीतासौमित्रिसुग्रीवप्रमुखैरावृतो ययौ । रामोऽथ रावणगृहे सुधर्मायामिवाद्रिभित् ॥ ५५ ॥
तत्र सिंहोदरादीनामुद्वोढुं प्राक् प्रतिश्रुताः[3] । कन्या रामाज्ञयानैषुस्तत्र विद्याधरोत्तमाः ॥ ५६ ॥

१ पूर्णिमासम्बन्धिना । २ [illegible] । ३ अङ्गीकृताः ।

अथ स्वस्वप्रतिपन्नास्ताः कुमारीर्यथाविधि। राघवावुपयेमाते खेचरीगीतमङ्गलौ ॥ ५७ ॥
भोगास्तत्रोपभुञ्जानौ निर्विघ्नं रामलक्ष्मणौ। सुग्रीवाद्यैः सेव्यमानौ षडब्दीमतिनिन्यतुः ॥ ५८ ॥
अत्रान्तरे विन्ध्यस्थल्यामिन्द्रजिन्मेघवाहनौ। तौ सिद्धिमीयतुर्जज्ञे तीर्थं मेघरथं च तत् ॥ ५९ ॥
नर्मदायां कुम्भकर्णो नद्यां सिद्धिमियाय च। पृष्टरक्षितमित्यासीत्तत्तीर्थं चाभिधानतः ॥ ६० ॥
इतश्च साकेतपुरे रामलक्ष्मणमातरौ। तद्वार्तामप्यजानन्त्यौ तस्थतुर्भृशदुःखिते ॥ ६१ ॥
तदा च धातकीखण्डादागतस्तत्र नारदः। पप्रच्छ भक्तिनम्रे ते विमनस्के कुतो युवाम् ॥ ६२ ॥
अथापराजितोवाच पुत्रौ मे रामलक्ष्मणौ। पित्राज्ञया वनं यातौ स्नुषया सीतया सह ॥ ६३ ॥
सीतापहाराल्लङ्कायां जग्मतुस्तौ महाभुजौ। रावणेन रणे शक्त्या लक्ष्मणस्ताडितः किल ॥ ६४ ॥
शक्तिशल्योद्धरणाय विशल्यानायि तत्र च। न विद्मो यदभूत्किंचिद्वत्सो जीवति वा न वा ॥ ६५ ॥
अभिधायेति हा वत्स वत्सेति करुणस्वरम्। रुरोद सा रोदयन्ती सुमित्रामपि निर्भरम् ॥ ६६ ॥
ततस्ते नारदोऽवोचद्भवतं सुस्थिते युवाम्। युष्मत्पुत्रावुपेष्यामि तथानेष्यामि ताविह ॥ ६७ ॥
तयोरेवं प्रतिश्रुत्य नारदो गगनाध्वना। जनश्रुत्या ज्ञातवृत्तो लङ्कायां राममभ्यगात् ॥ ६८ ॥
सत्कृत्य पृष्टो रामेण किमत्रागा इति स्वयम्। तन्मातृदुःखवृत्तान्तमाचख्यौ नारदोऽखिलम् ॥ ६९ ॥
सद्यः संरणरणकः पद्मोऽवादीद्विभीषणम्। विस्मृत्य दुःखं मातॄणां त्वद्भक्त्यास्थामिहाधिकम् ॥ ७० ॥
'अस्मद्दुःखाद्विपद्यन्ते न यावन्मातरो हि नः। तावत्तत्राद्य यास्यामोऽनुमन्यस्व महाशय ॥ ७१ ॥

१ रणरणकेनोद्वेगेन सहित-।

नत्वा बिभीषणोऽप्यूचे तिष्ठात्राहनि षोडश । यावत् स्वैः शिल्पिभी रम्यां तामयोध्यां करोम्यहम् ॥ ७२ ॥
*एवमस्त्विति रामोक्तः स विद्याधरशिल्पिभिः । दिनैः षोडशभिश्चक्रेऽयोध्यां स्वर्गपुरीनिभाम्* ॥ ७३ ॥
तदा रामेण सत्कृत्य विसृष्टो नारदो ययौ । आख्यच्च राममातॄणां पुत्रागममहोत्सवम् ॥ ७४ ॥
अथाह्नि षोडशे सान्तःपुरावारुह्य पुष्पकम् । शक्रेशानाविवैकस्थौ प्रतस्थाते रघूद्वहौ ॥ ७५ ॥
रावणानुजसुग्रीवभामण्डलनृपादिभिः । अन्वीयमानौ नगरीमयोध्यां येयतुः क्षणात् ॥ ७६ ॥
आयान्तौ पुष्पकारूढौ दूरादपि निरीक्ष्य तौ । अभ्यगात्कुञ्जरारूढो भरतः सानुजोऽपि हि ॥ ७७ ॥
आयाति भरते रामाज्ञयोपक्षिति पुष्पकम् । जगाम पालकमिव पाकशासनशासनात् ॥ ७८ ॥
आद्यावप्युत्ततारेभाद्भरतो भ्रातृसंयुतः । उत्तेरतुः पुष्पकाच्च सोत्कण्ठौ रामलक्ष्मणौ ॥ ७९ ॥
पादयोः पतितं रामो भरतं साश्रुलोचनम् । परिरेभे समुत्थाप्य मूर्ध्नि चुम्बन् मुहुर्मुहुः ॥ ८० ॥
शत्रुघ्नमपि पादान्ते लुठन्तं रघुपुङ्गवः । उत्थाप्य परिमृज्य स्वांशुकेन परिषस्वजे ॥ ८१ ॥
ततो भरतशत्रुघ्नौ नमन्तौ लक्ष्मणोऽपि हि । प्रसारितभुजो बाढमालिलिङ्ग ससम्भ्रमम् ॥ ८२ ॥
आरोहदनुजैः सार्धं त्रिभी रामोऽथ पुष्पकम् । समादिदेश चायोध्याप्रवेशाय कृतत्वरः ॥ ८३ ॥
तूर्येषु व्योम्नि भूमौ च वाद्यमानेष्वथोन्मुदौ । अयोध्यां रामसौमित्री निजामाविशतां पुरीम् ॥ ८४ ॥
सोत्कण्ठैरुन्मुखैः पौरैर्मयूरैरिव वारिदौ । निर्निमेषैः प्रेक्ष्यमाणौ स्तूयमानौ च निर्भरम् ॥ ८५ ॥
अर्कवद्दीयमानार्घौ स्थाने स्थाने पुरीजनैः । स्वं प्रासादं प्रसन्नास्यौ जग्मतू रामलक्ष्मणौ ॥ ८६ ॥ युग्मम् ॥

---

१ इन्द्रशासनात् । २ स्ववस्त्रेण । ३ सूर्यवद्दीयमानोऽर्घः पूजोपचारविशेषो याभ्यां तौ ।

उत्तीर्य पुष्पकात्तत्र रामः सौमित्रिणा सह । जगाम मातृसदनं सुहृद्हृदयनन्दनः ॥ ८७ ॥
रामोऽपराजितां देवीं मातृवर्गमथापरम् । नमश्चक्रे ससौमित्रिस्ताभिश्चाशीर्भिरैध्यत ॥ ८८ ॥
अथ सीताविशल्याद्याः प्रणेमुरपराजिताम् । श्वश्रूरन्याश्च तत्पादपद्मेषु निहितालिकाः ॥ ८९ ॥
अस्मद्वद्वीरप्रकाण्डप्रसविन्योऽस्मदाशिषा । भूयास्त यूयमिति ताः श्वश्र्वोऽप्याशासतोत्तकैः ॥ ९० ॥
अथापराजिता देवी भूयो भूयोऽपि लक्ष्मणम् । स्पृशन्ती पाणिना मूर्धि चुम्बन्ती चैवमब्रवीत् ॥ ९१ ॥
दिष्ट्या दृष्टोऽसि हे वत्स पुनर्जातोऽसि चाधुना । कृत्वा विदेशगमनं विजयीह यदागमः ॥ ९२ ॥
तानि तानि च कष्टानि वनवासभवान्यसौ । रामः सीता चातिनिन्ये तवैव परिचर्यया ॥ ९३ ॥
लक्ष्मणोऽप्यवदत्तातेनेवार्येणातिलालितः । त्वयेव सीतादेव्या च वनेऽप्यस्थामहं सुखम् ॥ ९४ ॥
स्वेच्छादुर्ललितैर्मे चार्यस्य वैराणि जज्ञिरे । सीतापहारो यन्मूलः किमन्यद्देवि गद्यते ॥ ९५ ॥
परन्तु युष्मदाशीर्भिर्लङ्घित्वा वैरिसागरम् । मातः सपरिवारोऽपि क्षेमेणार्य इहाययौ ॥ ९६ ॥
अथोत्सवमयोध्यायां भरतोऽकारयन्मुदा । पुरतो रामपादानां पत्तिमात्रत्वमाचरन् ॥ ९७ ॥
अन्यदा रामभद्रं तु प्रणम्य भरतोऽभ्यधात् । आर्य त्वदाज्ञया राज्यमियत्काल मया धृतम् ॥ ९८ ॥
प्राव्रजिष्यं तदैवाहं तातपादैः सह प्रभो । अर्गला नाभविष्यच्चेदार्याज्ञा राज्यपालने ॥ ९९ ॥
मां व्रतायानुमन्यस्व स्वयं राज्यं प्रतीच्छ च । भवोद्विग्नस्त्वयि प्राप्ते न ह्यतः स्थातुमुत्सहे ॥ १०० ॥
रामोऽप्युदश्रुस्तं स्माह किमेवं वत्स भाषसे । कुरु राज्य त्वमेवेह त्वय्युत्का वयमागताः ॥ १०१ ॥

---

१ स्थापितकेशा । २ वीरपुत्रप्रसविन्यः । ३ गृहाण । ४ त्वयि उत्का उत्कण्ठिना ।

त्यजन्न सह राज्येन भूयस्त्वद्विरहव्यथाम् । किं दत्से वत्स तच्चिह्न कुर्याज्ञां मम पूर्ववत् ॥ १०२ ॥
इत्याग्रहपरं रामं ज्ञात्वा नत्वा च सोऽचलत् । यावत्सौमित्रिणा तावदुत्थायाधारि पाणिना ॥ १०३ ॥
भरतं च तथा यान्तं व्रताय कृतनिश्चयम् । ज्ञात्वा सीताविशल्याद्यास्तत्राजग्मुः ससम्भ्रमाः ॥ १०४ ॥
विस्मारयितुकामास्ता भरतस्य व्रताग्रहम् । जलक्रीडाविनोदार्थमर्थना चक्रिरेतराम् ॥ १०५ ॥
उपरोधेन तासां च ययौ सान्तःपुरोऽपि सः । क्रीडासरसि चिक्रीड विरक्तोऽपि मुहूर्तकम् ॥ १०६ ॥
जलान्निर्गत्य भरतस्तीरेऽस्थाद्राजहंसवत् । स्तम्भमुन्मूल्य भुवनालङ्कारस्तत्र चाययौ ॥ १०७ ॥
मदाधोऽप्यमदः सोऽभूत् सद्यो भरतदर्शनात् । तद्दर्शनेन भरतोऽप्यवाप परमां मुदम् ॥ १०८ ॥
सम्भ्रमाद्रामसौमित्री तस्योपद्रवकारिणः । करिणो बन्धनायाशु ससामन्तावुपेयतुः ॥ १०९ ॥
रामाज्ञया हस्तिपकैः स स्तम्भे हस्त्यनीयत । आगतौ च मुनी देशभूषण कुलभूषण ॥ ११० ॥
उद्याने समवसृतौ वन्दितुं तौ महामुनी । प्रययुः पद्मसौमित्रिभरताः सपरिच्छदाः ॥ १११ ॥
वन्दित्वा तौ च पप्रच्छ रामो मम करी कथम् । असदोऽजनि भुवनालङ्कारो भरतेक्षणात् ॥ ११२ ॥
अथाख्यत्केवली देशभूषणो नाभिसूनुना । समं सहस्राश्चत्वारो राजानः प्राव्रजन् पुरा ॥ ११३ ॥
ते तु स्वामिन्यनाहारे कृतमौने विहारिणि । निर्विण्णा जज्ञिरे सर्वे तापसा वनवासिनः ॥ ११४ ॥
प्रह्लादनसुप्रभयोस्तनयौ तेषु तापसौ । चिरं चन्द्रोदयसूरोदयाख्यौ भ्रमतुर्भवम् ॥ ११५ ॥
चन्द्रोदयो गजपुरे राज्ञो हरिमतेरभूत् । भार्यायां चन्द्रलेखायां सनुर्नाम्ना कुलङ्करः ॥ ११६ ॥

---

१ प्रार्थनाम् । २ तापसा जाता इति सम्बन्धः ।

सूरोदयोऽपि तत्रैव विश्वभूतेर्द्विजन्मनः । भार्यायामग्निकुण्डाया नाम्ना श्रुतिरतिः सुतः ॥ ११७ ॥
अभूत् कुलङ्करो राजा स गच्छंस्तापसाश्रमम् । अवधिज्ञानिनेत्यूचे चाभिनन्दनसाधुना ॥ ११८ ॥
तप्यमानेन पञ्चाग्नितपस्तत्र तपस्विना । दग्धुमानीतकाष्ठस्य मध्ये तिष्ठति पन्नगः ॥ ११९ ॥
सोऽहिः पुरा भवे क्षेमङ्कराख्यस्ते पितामहः । तद्दारु दारयित्वा तं यत्नादाकृष्य रक्ष भोः ॥ १२० ॥
आकुलस्तद्वचः श्रुत्वा गत्वा तद्दार्वदारयत् । ददर्शान्तःस्थितं चाहिं राजा विस्मयते स्म च ॥ १२१ ॥
आदित्सते स्म प्रव्रज्यां यावद्राजा कुलङ्करः । द्विजः श्रुतिरतिः सोऽथ तावदेयमवोचत ॥ १२२ ॥
धर्मो नाम्नायिको योऽयं निर्ग्रन्थश्चत्ववान्तिमे । दीक्षा वयस्युपादेया किं सम्प्रत्यपि खिद्यते ॥ १२३ ॥
राजापि तद्गिरा मन्दीभूतोत्साहो मनागपि । मया किमत्र कर्तव्यमिति ध्यायन्नवास्थितः ॥ १२४ ॥
श्रीदामाख्याथ तद्राज्ञी सदा सक्ता पुरोधसा । नूनं मां ज्ञातवानेष इत्याशङ्कत दुर्मतिः ॥ १२५ ॥
आवां यावन्न हन्त्येष तावद्धन्मीति सा विषम् । पुरोधोऽनुमता दत्त्वा कुलङ्करममारयत् ॥ १२६ ॥
क्रमाच्छ्रुतिरतिः सोऽपि मृतो भूयोऽप्युभावपि । चिरं भव भ्रेमतुस्तौ नानायोनिनिपातिनौ ॥ १२७ ॥
पुरेऽन्यदा राजगृहे कपिलब्राह्मणः सुतौ । सावित्र्यां युग्मतोऽभूतां विनोदरमणाभिधौ ॥ १२८ ॥
रमणो वेदमध्येतुं ययौ देशान्तरं ततः । कालेनाधीतवेदः सन्नागाद्राजगृहं निशि ॥ १२९ ॥
अकालोऽसाविति धिया तदास्थाद्बहिरेव सः । सर्वसाधारणेऽस्वाप्सीदेकस्मिन् यक्षमन्दिरे ॥ १३० ॥
विनोदभार्या शाखाख्या दत्तेन ब्रह्मणा समम् । तत्रागात्कृतसङ्केता विनोदोऽपि हि तामनु ॥ १३१ ॥

१ अयं धर्मे आम्नायिको वैदिको नास्तीति सम्बन्धः ।

सा दत्तबुद्ध्या रमणमुत्थाप्यारमयत्तदा । विनोदोऽप्यसिमाकृष्य त द्घानादिशङ्कित ॥ १३२ ॥
शाखया रमणच्छुर्या विनोदोऽपि हतस्तदा । किं भ्रान्त्वा भव चाभूदिभ्यपुत्रो धनाभिध ॥ १३३ ॥
रमणोऽपि भवे भ्रान्त्वा धनस्याभवत्सुत । लक्ष्मीकुक्षिसमुद्भूतो भूषणो नामवेदत ॥ १३४ ॥
द्वात्रिंशदिभ्यकन्या स धनोक्त परिणीतवान् । ताभि क्रीडन्नन्यदाम्याः निशि स्वगृहमूर्धनि ॥ १३५ ॥
तत्र यामे निशस्तुर्ये श्रीधरस्य महामुने । उत्पन्ने केवलेऽद्राक्षीद्देवैरारब्धमुत्सवम् ॥ १३६ ॥
जातधर्मपरीणाम सद्योऽप्युत्तीर्य वेश्मत । तं वन्दितुमचालीच मार्गे दष्टश्च सोऽहिना ॥ १३७ ॥
शुभेन परिणामेन भ्रान्त्वा शुभगतीश्चिरम् । जम्बूद्वीपे प्र विदेहे पुरे रत्नपुरे पुरे ॥ १३८ ॥
महिष्या हरिणीनाम्न्यामचलाख्यस्य चक्रिण । प्रियदर्शननामाभूत् स सुनुधर्मतत्पर ॥ १३९ ॥
स प्रविव्रजिषु पित्रनुरोधात्परिणीतवान् । त्रीणि कन्यासहस्राणि क्षमिमोऽभूत्तथापि हि ॥ १४० ॥
चतुःषष्टिसहस्राणि वर्षाणां स तप परम् । चरित्वा गृहवासेऽपि ब्रह्मलोके सुरोऽभवत् ॥ १४१ ॥
भ्रान्त्वा धनोऽपि संसार स पोतनपुरेऽभवत् । शकुनाग्निमुखब्राह्मणपत्न्यां मृदुमति सुत ॥ १४२ ॥
स पित्रा दुर्विनीतत्वाद्गृहान्निर्वासितोऽभ्रमत् । धूर्त सर्वकलाकल्पो भूत्वा भूयोऽप्यगाद्गृहम् ॥ १४३ ॥
सदा दिदेव द्यूतेन न त्वजीयत केनचित् । दिने दिने दवकेभ्यो भूयिष्ठमजयद्धनम् ॥ १४४ ॥
वसन्तसेनया सार्ध भुक्त्वा भोगान् स वेश्यया । अन्ते गृहीतश्रामण्यो ब्रह्मलोके सुरोऽभवत् ॥ १४५ ॥
च्युत्वा पूर्वभवमायादोषाद्वैताढ्यपर्वते । अथ बभूव भुवनालङ्कारो नाम कुञ्जर ॥ १४६ ॥

१ शकुना चासौ अग्निमुखब्राह्मण पत्नी चेति समासः तस्याम् । २ सर्वकलासु योग्यः । ३ दिदेव चिक्रीड ।

प्रियदर्शनजीवोऽपि ब्रह्मलोकात् परिच्युतः । बभूव भरतो भ्राता भक्तोऽयं महाभुजः ॥ १४७ ॥
भरतालोकनाज्ञातजातिस्मृतिरसौ गजः । सद्यो गतमदो जज्ञे विवेके हि न रौद्रता ॥ १४८ ॥
इति पूर्वभवान् श्रुत्वा विरक्तो भरतोऽधिकम् । व्रतं राजसहस्रेणाग्रहीन्मोक्षमियाय च ॥ १४९ ॥
सहस्रं तेऽपि राजानः पालयित्वा चिरं व्रतम् । नानालब्धिजुषो भूत्वानुरूप पदमासदन् ॥ १५० ॥
कुञ्जरः सोऽपि वैराग्याद्विधाय विविध तपः । प्रपन्नानशनो मृत्वा ब्रह्मलोके सुरोऽभवत् ॥ १५१ ॥
व्रत भरतमातापि कैकेयी समुपाददे । पालयित्वा निष्कलङ्कं प्रपेदे पदमव्ययम् ॥ १५२ ॥
भरते च प्रव्रजिते भूपा भूचरखेचराः । अथयाञ्चक्रिरे राममभिषेकाय भक्तितः ॥ १५३ ॥
लक्ष्मणो वासुदेवोऽयं भवद्भिरभिषिच्यताम् । तानेयमादिशद्रामस्ते तथैवाशु चक्रिरे ॥ १५४ ॥
बलदेवत्वाभिषेकं रामभद्रस्य च व्यधुः । राज्य द्वावप्यपातां चाष्टमौ तौ बलशार्ङ्गिणौ ॥ १५५ ॥
पद्मो बिभीषणायादाद्रक्षोद्वीपं क्रमागतम् । सुग्रीवाय कपिद्वीपं श्रीपुरं च हनुमते ॥ १५६ ॥
विराधाय तु पाताललङ्कामृक्षपुरं पुनः । नीलाय प्रतिसूर्याय पुरं हनुपुरं पुनः ॥ १५७ ॥
देवोपगीतनगरं तद्रत्नजटिने पुनः । भामण्डलाय वैताढ्ये नगरं रथनूपुरम् ॥ १५८ ॥
अन्येभ्योऽपि प्रदायैवं रामः शत्रुघ्नमभ्यधात् । यस्तुभ्यं रोचते वत्स त देशमुररीकुरु ॥ १५९ ॥
मथुरां मे प्रयच्छेति शत्रुघ्नेनार्थितः पुनः । रामो जगाद दुःसाध्या सा वत्स मथुरा पुरी ॥ १६० ॥
तत्र राज्ञो मधोः शूलं चमरेण पुरार्पितम् । दूरात् परबलं सर्वं निहत्याभ्येति तत्करे ॥ १६१ ॥
शत्रुघ्नोऽप्येवमवददेव रक्षःकुलान्तक । तवास्मि नन्वहं भ्राता त्राता कस्तस्य मद्युधि ॥ १६२ ॥

प्रयच्छ मथुरां मह्यं स्वयमेव मधोरहम् । प्रतीकारं करिष्यामि व्याधेरिव भिषग्वर ॥ १६३ ॥
शत्रुघ्नमत्याग्रहिणं ज्ञात्वा रामोऽभ्यधादिति । अपशूलः प्रमत्तश्च योधनीयो मधुस्त्वया ॥ १६४ ॥
अनुशिष्येत्यदाद्रामस्तूणावक्षय्यसायकौ । कृतान्तवदनं नाम सेनान्यं च सहादिशत् ॥ १६५ ॥
शिलीमुखानग्निमुखानर्णवावर्तधन्व च । लक्ष्मणोऽपि ददौ तस्मायाशसन् विजयं परम् ॥ १६६ ॥
ततः प्रतस्थे शत्रुघ्नः प्रयाणैश्च निरन्तरैः । ययावुपमधूपान्तमवात्सीच्च नदीतटे ॥ १६७ ॥
तत्रादौ प्रणिधाभारास्तस्याख्यन्नेत्य यन्मधुः । गतः कुबेरोद्यानेऽस्ति मथुरापूर्वदिक्स्थिते ॥ १६८ ॥
पत्न्या जयन्त्या सार्धं स तत्र क्रीडापरोऽधुना । अस्त्रागारे च तच्छूलं कालोऽयं तस्य योधने ॥ १६९ ॥
ततश्छलज्ञः शत्रुघ्नः प्राविशन्मथुरां निशि । प्रविशन्तं मधुं तत्र रुरोध च बली स्वयम् ॥ १७० ॥
जघान समरे चादौ लवणं मधुनन्दनम् । रामायणरणारम्भे खरं नारायणो यथा ॥ १७१ ॥
मधुः सुतवधक्रुद्धो धावित्वा स्फालयन् धनुः । युयुधे दाशरथिना रथिना रथिना वरः ॥ १७२ ॥
अन्योऽन्यमस्त्रशस्त्राणि छिन्दानौ तावुभावपि । शस्त्राशस्त्रि प्रचक्राते चिरं देवासुराविव ॥ १७३ ॥
धनुः समुद्रावर्तं चाग्निमुखांश्च शिलीमुखान् । सौमित्रिदत्तानस्मार्षीच्चुपौं दशरथात्मजः ॥ १७४ ॥
तत्स्मृतोपनतं धन्वाधिज्यीकृत्याग्निमैत्रिभिः । तर्जघान मधुं वीरः शार्दूलमिव लुब्धकः ॥ १७५ ॥
तद्बाणघातविधुरो मधुरेवमचिन्तयत् । शूलं पाणौ न मेऽस्यामान्न हतो लक्ष्मणानुजः ॥ १७६ ॥
गतं मम मुधा जन्म जिनेन्द्रो न यदर्चितः । कारितानि न चैत्यानि दत्तं पात्रेषु नो मया ॥ १७७ ॥

---

१ शूलरहित । २ अक्षय्याः सायका इषवो ययोस्तौ । ३ मधूपाख्यस्य समीपम् । ४ अग्निशरैः ।

इति ध्यायन्नात्तदीक्षो नमस्कारपरायणः । मृत्वा सनत्कुमारेऽभून्मधुर्देवो महर्द्धिकः ॥ १७८ ॥
मधुदेहस्योपरिष्टात्तद्विमानसुरा व्यधुः । पुष्पवृष्टिं जुघुषुश्च मधुर्देवो जयत्विति ॥ १७९ ॥
तच्छूलं देवतारूपमुपेत्य चमरान्तिके । शत्रुघ्नान्मधुनिधनं छलोत्पन्नं शशंस च ॥ १८० ॥
ततो मित्रवधामर्षाच्चमरः प्राचलत् स्वयम् । पृष्टः क यासीति तार्क्ष्यस्वामिना वेणुदारिणा ॥ १८१ ॥
हन्तुं स्वमित्रहन्तारं शत्रुघ्नं मथुरास्थितम् । यास्यामीति तदाख्याते वेणुदार्यवदत्पुनः ॥ १८२ ॥
धरणेन्द्राद्रावणेन या लब्धा सापि निर्जिता । शक्तिः सौमित्रिणा पुण्यप्रकृष्टेनार्धचक्रिणा ॥ १८३ ॥
रावणोऽपि हतस्तेन तत्पत्तिस्तु कियान् मधुः । शत्रुघ्नो लक्ष्मणादेशादवधीत् प्रधने मधुम् ॥ १८४ ॥
उवाच चमरेन्द्रो यच्छक्तिः सौमित्रिणा जिता । कन्यकाया विशल्यायाः प्रभावेण तदा खलु ॥ १८५ ॥
तस्याश्चाब्रह्मचारिण्याः स प्रभावो गतोऽधुना । किं वा तेनेनं यास्यामि तं हन्तु मित्रघातकम् ॥ १८६ ॥
इत्युक्त्वा चमरो रोषाच्छत्रुघ्नविषयं ययौ । सौराज्यसुस्थितं तत्र सर्वं लोकं ददर्श च ॥ १८७ ॥
प्राक् प्रजोपद्रवेणोपद्रवाम्येतं मधुद्विषम् । इति बुद्ध्या व्यधाद्व्याधीन् निविधांस्तत्प्रजासु स ॥ १८८ ॥
कुलदेवतया तच्च ज्ञापितो व्याधिकारणम् । शत्रुघ्नोऽगादयोध्याया रामलक्ष्मणसन्निधौ ॥ १८९ ॥
तौ देशभूषणकुलभूषणावागतौ तदा । रामलक्ष्मणशत्रुघ्ना उपेत्य च ववन्दिरे ॥ १९० ॥
आग्रही हेतुना केन शत्रुघ्नो मथुरां प्रति । इति रामेण पृष्टः सन् बभाषे देशभूषणः ॥ १९१ ॥
शत्रुघ्नजीव उत्पद्य मथुरायामनेकशः । विप्रोऽभूच्छ्रीधरो नाम रूपवान् साधुसेवकः ॥ १९२ ॥

---

१ गृहीतदीक्षो भाववारित्रवानित्यर्थः । २ युद्धे । ३ हे इन स्वामिन् ।

सोऽन्यदाध्वनि यत्राजमहिष्या ललितास्यया । दृष्टो रागादथानायि स्वान्तिके स्तुकाम्यया ॥ १९३ ॥
आगाघातर्कितो राजा क्षुभिता ललितापि च । चौरोऽसाविति पूत्कृते राज्ञाधारि स तु द्विज ॥ १९४ ॥
राजादेशाद्वधाय स वधस्थानमनीयत । प्रतिज्ञातव्रतोऽमोचि कल्याणमुनिना तत ॥ १९५ ॥
विमुक्त प्राव्रजत् सोऽपि तपस्तप्त्वा दिवं ययौ । च्युत्वाभू मथुरापुर्यां चन्द्रभद्रनृपात्मज ॥ १९६ ॥
स काञ्चनप्रभाराज्ञीकुक्षिभूरचलाभिध । अत्यन्तवल्लभश्चासीच्चन्द्रभद्रस्य भूपते ॥ १९७ ॥
भानुप्रभाद्यै सापत्नै सोऽचलोऽष्टभिरग्रजै । व्यापादयितुमारेभे राज्याय मा स्म भूदिति ॥ १९८ ॥
त मन्त्रे मन्त्रिणाख्याते नष्टागादचलोऽन्यत । भ्रमश्चाविध्यत वने कण्टकेन गरीयसा ॥ १९९ ॥
स क्रन्दन् पथि दृष्टश्च पुसा श्रावस्तिवासिना । पित्रा निर्वासितेनाङ्कनाम्नैधोभारधारिणा ॥ २०० ॥
काष्ठभार विमुच्याङ्कोऽपनिन्ये तस्य कण्टकम् । दृष्ट स कण्टक दत्त्वोवाचाङ्कं साधु मो कृतम् ॥ २०१ ॥
अचल मथुरापुर्यां त्व शृणोषि यदा नृपम् । तदा तत्र समागच्छे परमोपकार्यसि ॥ २०२ ॥
कौशाम्ब्यामचलोऽथागात्तत्र सिंहगुरो गुरु । इन्द्रदत्तनृप धनुर्वेदाभ्यस्यन्त समुदैक्षत ॥ २०३ ॥
सिंहेन्द्रदत्तयो सोऽपि धानुष्कत्वमदर्शयत् । तस्मै दत्ताभिद्रदत्तोऽदत्त पुत्रीं श्रिया सह ॥ २०४ ॥
सोऽसाधयज्जातबलो देशानङ्गादिकांस्तत । मथुरां चान्यदागच्छद्युयुधे चाग्रजै सह ॥ २०५ ॥
भानुप्रभादीन् स भ्रातॄन् बद्ध्वा युद्धेऽपि चाग्रहीत् । तन्मुक्त्यै मन्त्रिणा प्रैषीच्चन्द्रभद्रोऽचलान्तिके ॥ २०६ ॥
आख्यच्चपा स्ववृत्तान्तमचलस्तेऽपि मन्त्रिण । विज्ञाय गत्वा चाचख्युश्चन्द्रभद्राय सत्वरम् ॥ २०७ ॥

१ गच्छन् । २ काष्ठभारवाहकेन । ३ दत्तानाक्षीम् । ४ पूज्या ।

अचलं चन्द्रभद्रोऽपि हृष्टः पुर्यामवीविशत् । क्रमेण निजराज्ये तं लघीयांसमपि न्यधात् ॥ २०८ ॥
पित्रा निर्वास्यमानास्तान् भ्रातॄन् भानुप्रभादिकान् । कथञ्चिदचलोऽरक्षच्चक्रे चाऽदृष्टसेवकान् ॥ २०९ ॥
अन्यदा नटरङ्गस्थेनाङ्को दृष्टोऽचलेन सः । हन्यमानः प्रतीहारैरानायि च निजान्तिके ॥ २१० ॥
तस्मै तज्जन्मभूमिं तां श्रावस्तीमचलो ददौ । तौ द्वौ सम्भूय चक्राते राज्यमद्वैतसौहृदौ ॥ २११ ॥
तावन्यदा प्राव्रजतां समुद्राचार्यसन्निधौ । मृत्वा कालेन चाभूतां ब्रह्मलोके सुरोत्तमौ ॥ २१२ ॥
च्युत्वा ततोऽचलजीवः शत्रुघ्नोऽभूत्तवानुजः । प्राग्जन्ममोहनीयेन ततोऽसौ मथुराग्रही ॥ २१३ ॥
च्युत्वा ततोऽङ्कजीवोऽपि सेनापतिरयं तव । कृतान्तवदनो नाम समजायत राघव ॥ २१४ ॥
इतश्च श्रीनन्दनस्य प्रभापुरपुरेशितुः । भार्यायां धारणीनाम्न्यां सप्ताभूवन् क्रमात्सुताः ॥ २१५ ॥
सुरनन्दः श्रीनन्दः श्रीतिलकः सर्वसुन्दरः । जयन्तश्चामरश्चापि जयमित्रश्च सप्तमः ॥ २१६ ॥
मासजातं सुतं राज्ये न्यस्य श्रीनन्दनोऽन्यदा । गुरोः प्रीतिकरस्यान्ते प्राव्राजीत्तैः सुतैः सह ॥ २१७ ॥
श्रीनन्दनो ययौ मोक्षं सुरनन्दादयस्तु ते । सप्ताप्यासंस्तपःशक्त्या जङ्घाचारणलब्धयः ॥ २१८ ॥
विहरन्तः पुरीं जग्मुर्मथुरां ते महर्षयः । प्रावृट् चाभूत्तदा तस्थुरगिरिशैलगुहागृहम् ॥ २१९ ॥
चक्रुः षष्ठाष्टमादीनि ते तपांसि सदापि हि । उत्पत्य दूरदेशेषु पारणं चक्रिरे पुनः ॥ २२० ॥

१ गुप्तसेवकान् । २ आनीत । ३ पतच्छलोकानन्तरं-" इत्युक्त्वा मुनिवर्यो तौ ततोऽन्यत्र विजह्रतुः । रामचन्द्रादयः सर्वे स्वं स्वं स्थानं मुदा ययुः ॥ " इति भावार्थकः श्लोकोऽपेक्षित इतिप्रतिभाति । ४ अष्टम सुतमित्यर्थः ।

भूयोऽपि मधुराशैलगुहायां तस्थुरेत्य च । तत्प्रभावाच्चमरभूर्व्याधिस्तत्र क्षयं ययौ ॥ २२१ ॥
पारणायान्यदोपेत्यायोध्यायां ते ययु पुरि । अर्हद्दत्तश्रेष्ठिनश्च भिक्षार्थं आविशन् गृहे ॥ २२२ ॥
सावज्ञ तान् स वन्दित्वा दध्यौ श्रेष्ठीति के ह्यमी । नेहत्या साधुवेषास्तद्वर्षास्वपि विहारिण ॥ २२३ ॥
पृच्छामि किममून् यद्वा पाखण्डैर्मापितैरलम् । तस्यैव ध्यायतस्ते तु तद्वध्वा प्रतिलम्भिता ॥ २२४ ॥
आचार्यस्य द्युतेर्जग्मुर्वसतौ ते महर्षय । अभ्युत्थाय द्युतिनापि वन्दितास्ते सगौरवम् ॥ २२५ ॥
अकालचारिण इति तत्साधुभिरवन्दिता । दत्तासनास्ते द्युतिना तत्र पारणकं व्यधु ॥ २२६ ॥
आयाता मथुरापुर्या यास्यामस्तत्र सम्प्रति । इत्याख्याय समुत्पत्य स्व स्थान ते पुनर्ययु ॥ २२७ ॥
तेषां जङ्घाचारणानां गुणस्तोत्रं द्युतिर्व्यधात् । तत्साधव कृतावज्ञा पश्चात्ताप प्रचक्रिरे ॥ २२८ ॥
तच्छ्रुत्वा श्रावक सोऽर्हद्दत्तोऽप्यनुशय व्यधात् । कार्तिकेऽथ तत्समन्या ययौ च मथुरां पुरीम् ॥ २२९ ॥
अर्चित्वा तत्र चैत्यानि सप्तर्षीस्तानवन्दत । क्षमयामास चावज्ञादोष क्षमन् स्वय कृतम् ॥ २३० ॥
सप्तर्षीणां प्रभावेण शान्तरोग स्वमण्डलम् । विज्ञायेयाय कार्तिक्यां शत्रुघ्नोऽपि हि तां पुरीम् ॥ २३१ ॥
तानथोवाच शत्रुघ्नो भिक्षा मे गृह्यतां गृहे । प्रत्यूचुस्तेऽपि साधूनां राजपिंडो न कल्पते ॥ २३२ ॥
भूयोऽप्युवाच शत्रुघ्नो यूयमभ्युपकारिण । मद्देशे दैविको रोग शान्तो युष्मत्प्रभावत ॥ २३३ ॥
तल्लोकानुग्रहायेह किञ्चिदद्यापि तिष्ठत । सर्वां प्रवृत्तिर्भवतां ह्यन्योपकृतिहेतवे ॥ २३४ ॥
तेऽप्यूचिरे गत प्रावृट्कालोऽयं तीर्थयात्रया । अधुना विहरिष्यामो नैकत्र मुनय स्थिरा ॥ २३५ ॥

---

१ चमरेण कृत । २ अत्र वास्तव्या । ३ तस्य द्युते साधुभि । ४ गुणस्तुतिम् । ५ कृताऽवज्ञा यैस्ते । ६ पश्चात्तापम् ।

गृहे गृहे त्वं गृहिणां कारयेर्बिम्बमार्हतम् । पुर्यामस्यां ततो जातु व्याधिर्भावी न कस्यचित् ॥ २३६ ॥
इत्युक्त्वा ते समुत्पत्य ययुः सप्तर्षयोऽन्यतः । शत्रुघ्नोऽपि तथा चक्रे लोकश्चाभून्निरामयः ॥ २३७ ॥
तेषां सप्तऋषीणां च प्रतिमा रत्ननिर्मिताः । स चक्रे मथुरापुर्या ककुप्सु चतसृष्वपि ॥ २३८ ॥
इतश्च वैताढ्यगिरौ दक्षिणश्रेणिभूषणे । पुरे रत्नपुरे रत्नरथो राजा तदाभवत् ॥ २३९ ॥
तस्य चन्द्रमुखीकुक्षिजन्मा नाम्ना मनोरमा । उद्यौवना कन्यकाभूद्रूपेणापि मनोरमा ॥ २४० ॥
दातव्या कस्य कन्येयमिति मन्त्रपरे नृपे । उपेत्य नारदोऽवोचल्लक्ष्मणस्येयमर्हति ॥ २४१ ॥
पुत्री रत्नरथस्याथ कुपिता गोत्रजैरतः । भृत्यान् भ्रूसञ्ज्ञयादिक्षद्विटोऽयं कुट्यतामिति ॥ २४२ ॥
उत्तिष्ठतो जिघांसूंस्तान् धीमान् विज्ञाय नारदः । समुत्पत्य पतत्त्रीव ययावुपलक्ष्मणम् ॥ २४३ ॥
लिखित्वा तां पटे कन्यां दर्शयामास नारदः । लक्ष्मणाय स्ववृत्तान्तं तं चाचख्यावशेषतः ॥ २४४ ॥
तद्रूपदर्शनाज्जातानुरागो लक्ष्मणः क्षणात् । समं रामेण तत्रागाद्रक्षोविद्याधरैर्वृतः ॥ २४५ ॥
जितः सौमित्रिणा चाशु तत्र रत्नरथो ददौ । रामाय कन्यां श्रीदामां लक्ष्मणाय मनोरमाम् ॥ २४६ ॥
वैताढ्यदक्षिणश्रेणिं जित्वा सर्वां च राघवौ । भूयोऽयोध्यामीयतुः क्ष्मां पालयन्तौ च तस्थतुः ॥ २४७ ॥
षोडशान्तःपुरवधूसहस्रं लक्ष्मणस्य तु । महिष्योऽष्टावभवंस्तत्र विशल्या रूपवत्यपि ॥ २४८ ॥
वनमाला च कल्याणमालिका रत्नमालिका । जितपद्मा भयवती चाष्टमा तु मनोरमा ॥ २४९ ॥
॥ युग्मम् ॥

१ हन्तुमिच्छून् । २ पक्षीव ।

भूयोऽपि मथुराशैलगुहायां तस्थुरेत्य च । तत्प्रभावाच्चमरभूर्व्याधिस्तत्र क्षयं ययौ ॥ २२१ ॥
पारणायान्यदोपेत्यायोध्यायां ते ययु पुरि । अर्हद्दत्तश्रेष्ठिनश्च भिक्षार्थं प्राविशन् गृहे ॥ २२२ ॥
श्राद्धश्च तान् स वन्दित्वा दध्यौ ग्रहीति के इमी । नेहत्या साधुवेषास्तद्रूपास्त्वपि विहारिण ॥ २२३ ॥
पृच्छामि किममून् यद्वा पाखण्डैर्मोपितैरलम् । तस्यैव ध्यायतस्ते तु तद्वध्वा प्रतिलम्भिता ॥ २२४ ॥
आचार्यस्य द्युतेर्जग्मुर्वसतौ ते महर्षय । अभ्युत्थाय द्युतिनापि वन्दितास्ते सगौरवम् ॥ २२५ ॥
अकालचारिण इति तत्साधुभिस्त्ववन्दिता । दत्तासनास्ते द्युतिना तत्र पारणकं व्यधु ॥ २२६ ॥
आचार्या मथुरापुर्या यास्यामस्तत्र सम्प्रति । इत्याख्याय समुत्पत्य स्व स्थान ते पुनर्ययु ॥ २२७ ॥
तेषां जङ्घाचारणानां गुणस्तोत्रं द्युतिर्व्यधात् । तत्साधव कृतावज्ञा पश्चात्ताप प्रपेदिरे ॥ २२८ ॥
तं श्रुत्वा श्रावक सोऽर्हद्दत्तोऽप्यनुशय व्यधात् । कार्तिकश्वेतसप्तम्यां ययौ च मथुरां पुरीम् ॥ २२९ ॥
अर्चित्वा तत्र चैत्यानि सप्तर्षीस्तानवन्दत । क्षमयामास चावज्ञादोष शंसन् स्वयं कृतम् ॥ २३० ॥
सप्तर्षीणां प्रभावेण शान्तरोगं स्वमण्डलम् । विज्ञायेयाय कार्तिक्यां शत्रुघ्नोऽपि हि तां पुरीम् ॥ २३१ ॥
तानथोवाच शत्रुघ्नो भिक्षा मे गृह्यतां गृहे । अत्यूचुस्तेऽपि साधूनां राजपिंडो न कल्पते ॥ २३२ ॥
भूयोऽप्युवाच शत्रुघ्नो यूय मय्युपकारिण । मद्देशे दैविको रोग शान्तो युष्मत्प्रभावत ॥ २३३ ॥
तल्लोकानुग्रहायेह किञ्चिद्द्यापि तिष्ठत । सर्वा प्रवृत्तिर्भक्ता अन्योपकृतिहेतवे ॥ २३४ ॥
तेऽप्यूचिरे गत प्रावृट्कालोऽय तीर्थयात्रया । अधुना विहरिष्यामो नैकत्र मुनय स्थिरा ॥ २३५ ॥

१ चमरेन्द्रकृत । २ अत्र वास्तव्या । ३ तस्य द्युते साधुभि । ४ गुणस्तुतिम् । ५ कृताऽवज्ञा येस्ते । ६ पश्चात्तापम् ।

गृहे गृहे त्वं गृहिणां कारयेर्बिम्बमार्हतम् । पुर्यामस्यां ततो जातु व्याधिर्भावी न कस्यचित् ॥ २३६ ॥
इत्युक्त्वा ते समुत्पत्य ययुः सप्तर्षयोऽन्यतः । शत्रुघ्नोऽपि तथा चक्रे लोकश्चाभून्निरामयः ॥ २३७ ॥
तेषां सप्तऋषीणां च प्रतिमा रत्ननिर्मिताः । स चक्रे मथुरापुर्यां ककुप्सु चतसृष्वपि ॥ २३८ ॥
इतश्च वैताढ्यगिरौ दक्षिणश्रेणिभूषणे । पुरे रत्नपुरे रत्नरथो राजा तदाभवत् ॥ २३९ ॥
तस्य चन्द्रमुखीकुक्षिजन्मा नाम्ना मनोरमा । उद्यौवना कन्यकाभूद्रूपेणापि मनोरमा ॥ २४० ॥
दातव्या कस्य कन्येयमिति मन्त्रपरे नृपे । उपेत्य नारदोऽवोचल्लक्ष्मणस्येयमर्हति ॥ २४१ ॥
पुत्री रत्नरथस्याथ कुपिता गोत्रजैरतः । भृत्यान् भ्रूसङ्ज्ञयादिक्षद्विटोऽयं कुट्यतामिति ॥ २४२ ॥
उत्तिष्ठतो जिघांसूंस्तान् धीमान् विज्ञाय नारदः । समुत्पत्य पतत्रीव प्रययावुपलक्ष्मणम् ॥ २४३ ॥
लिखित्वा तां पटे कन्यां दर्शयामास नारदः । लक्ष्मणाय स्ववृत्तान्तं तं चाचख्यावशेषतः ॥ २४४ ॥
तद्रूपदर्शनाज्जातानुरागो लक्ष्मणः क्षणात् । समं रामेण तत्रागाद्रक्षोविद्याधरैर्वृतः ॥ २४५ ॥
जितः सौमित्रिणा चाशु तत्र रत्नरथो ददौ । रामाय कन्यां श्रीदामा लक्ष्मणाय मनोरमाम् ॥ २४६ ॥
वैताढ्यदक्षिणश्रेणिं जित्वा सर्वां च राघवौ । भूयोऽयोध्यामीयतुः क्ष्मां पालयन्तौ च तस्थतुः ॥ २४७ ॥
षोडशान्तःपुरवधूसहस्रं लक्ष्मणस्य तु । महिष्योऽष्टावभवंस्तत्र विशल्या रूपवत्यपि ॥ २४८ ॥
वनमाला च कल्याणमालिका रत्नमालिका । जितपद्मा भयवती चाष्टमा तु मनोरमा ॥ २४९ ॥
॥ युग्मम् ॥

---

१ हन्तुमिच्छून् । २ पक्षीव ।

सूनवो द्वे श्रवे सार्धे तेष्वष्ट महिषीभवा । श्रीधरोऽभूद्विशल्याभू पृथिवीतिलक पुन ॥ २५० ॥
रूपवत्यङ्गजो वनमालाजोऽर्जुनसञ्ज्ञक । श्रीकेशी जितपद्माया कल्याणायास्तु मङ्गल ॥ २५१ ॥
सुपार्श्वकीर्तिस्तु मनोरमाया विमल पुन । रतिमालाभूरमथवतीभू सत्यकीर्तिक ॥ २५२ ॥
रामस्यासन्महादेव्यश्चतस्रस्तत्र मैथिली । प्रभावती रतिनिभा श्रीदामा तु चतुर्थिका ॥ २५३ ॥
सीतैकदा ऋतुस्नाता निशान्ते स्वप्नमैक्षत । च्युतौ विमानाच्छरभौ प्रविशन्तौ निजानने ॥ २५४ ॥
व्याख्यात्रामस्तयाख्याते वीरौ ते भाविनौ सुतौ । च्युतौ विमानाच्छरभौ यत्तु तन्न मुदे मम ॥ २५५ ॥
धर्मस्य ते च माहात्म्यात् सर्वं भावि शुभ प्रभो । इत्यूचे जानकी देवी तदा गर्भ दधार च ॥ २५६ ॥
सीता प्राणप्रियाप्रेऽपि प्राप्तगर्भा विशेषत । बभूव रामचन्द्रस्य लोचनानन्दचन्द्रिका ॥ २५७ ॥
ईर्ष्यालव सपत्न्यस्ता मायाविन्योऽभ्युनन्वद् । कीदृग्रूपो रावणोऽभूत लिखित्वा प्रदर्शय ॥ २५८ ॥
सीताप्यूचे मया दृष्ट सर्वाङ्ग न हि रावण । दृष्टौ तच्चरणावेव कथ नाम लिखामि तम् ॥ २५९ ॥
तत्पादावप्यालिख त्व कौतुक नस्तदीक्षणे । इत्युक्ता प्रकृतिऋज्वी दशास्याङ्घ्री लिलेख सा ॥ २६० ॥
स्थाने तत्रागमद्रामो बभाषे ताभिरप्यद । रावणस्य स्मरत्यद्याप्यसौ सीता तव प्रिया ॥ २६१ ॥
सीतास्वहस्तलिखित रावणस्य क्रमद्वयम् । पश्यैतन्नाथ जानीहि सीता तस्यैव नाथते ॥ २६२ ॥
दृष्ट्वापि तत्तथा रामो गम्भीरत्वान्महामना । तथैव वर्तते सीतादेव्यामनुपलक्षित ॥ २६३ ॥

१ अष्टापदमृगौ । २ प्रकृत्या स्वभावेन ऋज्वी सरला । ३ क्रमद्वयम् । ४ पूर्ववत् ।

सीतादोषपदं तच्च देव्यो दासीजनैर्निजैः। जने प्रकाशयन् प्रायः प्रवादा लोकनिर्मिताः ॥ २६४ ॥
वसन्तेऽथाब्रवीद्रामः सीते त्वां गर्भखेदिताम्। विनोदयितुकामेव मधुलक्ष्मीरिहाययौ ॥ २६५ ॥
पुष्पन्ति बकुलप्राया वृक्षाः स्त्रीदत्तदोहदैः। रन्तुं व्रजामो महेन्द्रोदयोद्यानं ततोऽधुना ॥ २६६ ॥
सीताप्यूचे दोहदो मे देवतार्चनलक्षणः। तं पूरयोद्यानभवैर्नानापुष्पैः सुगन्धिभिः ॥ २६७ ॥
रामः सद्योऽपि देवानां पूजाचर्यामकारयत्। ययौ महेन्द्रोदये च ससीतः सपरिच्छदः ॥ २६८ ॥
विचित्रनगरक्रीडं तत्रापश्यन्मधूत्सवम्। अर्हत्पूजोत्सवमयं सुखासीनो रघूद्वहः ॥ २६९ ॥
अत्रान्तरे च सीताया दक्षिणं चक्षुरस्फुरत्। आचचक्षे च सद्योऽपि साशङ्का राघवाय सा ॥ २७० ॥
नेदं साध्विति रामेणाख्याते सीताब्रवीदिति। किं रक्षोद्वीपवासान्मे सन्तुष्टोऽद्यापि नो विधिः ॥ २७१ ॥
त्वद्वियोगभवाद्दुःखाद्दुःखमद्यापि मेऽधिकम्। किमसौ दास्यति विधिर्निर्मितं नैतदन्यथा ॥ २७२ ॥
रामोऽपि तामुवाचैवं देवि मा खेदमुद्वह। अवश्यमेव भोक्तव्ये कर्माधीने सुखासुखे ॥ २७३ ॥
तद्गच्छ मन्दिरे स्वस्मिन् देवानामर्चनं कुरु। प्रयच्छ दानं पात्रेभ्यो धर्मः शरणमापदि ॥ २७४ ॥
सीतापि सदनं गत्वा संयमेन महीयसा। अर्हतोऽपूजयद्दानं प्रददे चावदानवत् ॥ २७५ ॥
रघुनाथमथाजग्मू राजधानीमहत्तराः। यथाभूतपुरीवृत्तकीर्तनैकाधिकारिणः ॥ २७६ ॥
विजयः सुरदेवश्च मधुमानथ पिङ्गलः। शूलधरः काश्यपश्च कालः क्षेमश्च नामतः ॥ २७७ ॥

---

१ प्रायेणापवादा लोकैरेव निर्मिता भवन्ति, न तु तद्वास्तविका। २ पूजाचरणम्। ३ राजधान्या महत्तरा ग्रामकूटा ग्रामण्य इति यावत्। ४ यथाभूत सत्य यत्पुरीवृत्तान्त तस्य कीर्तनेऽद्वितीयाधिकारिणः।

नत्वा रामाग्रतस्तस्थु कम्पमाना द्रुपत्रवत् । न तु विज्ञपयामासू राजतेजो हि दुस्सहम् ॥ २७८ ॥
तानूचे रामभद्रोऽपि भो भो पुरमहत्तरा । अभय वो ब्रुवाणानामेकान्तहितवादिनाम् ॥ २७९ ॥
तेष्वाद्य सर्वमविस्था विजयाख्यो महत्तर । इति विज्ञपयामास सावष्टम्भ प्रभोर्गिरा ॥ २८० ॥
स्वामिन्नवश्यविज्ञप्य यदि विज्ञप्यते न हि । वञ्चित स्यात्तदा स्वामी विज्ञस चातिदु श्रवम् ॥ २८१ ॥
देव देव्यां प्रवादोऽस्ति घटते दुर्घटोऽपि हि । युक्त्या हि यद्घटामेति श्रद्धेय तन्मनीषिणा ॥ २८२ ॥
तथाहि जानकी हृत्वा रावणेन रिरंसुना । एकेन निन्ये तद्वेश्मन्यवात्सीच्च चिर प्रभो ॥ २८३ ॥
सीता रक्ता विरक्ता वा सविस्था वा प्रसह्य वा । स्त्रीलोलेन दशास्येन नून स्याद्भोगदूषिता ॥ २८४ ॥
लोकोऽपि प्रवदत्येव प्रवदामो वय तथा । युक्तियुक्त प्रवाद त मा सहस्व रघूद्वह ॥ २८५ ॥
आजन्मोपार्जिता कीर्ति निज कुलमिवामलाम् । प्रवादसहनेन त्व मा देव मलिनीकृथा ॥ २८६ ॥
कलङ्कस्यातिथीभूता सीतां निश्चित्य राघव । सद्योऽभूद्दु स्ततूष्णीक प्राय प्रमातिदुस्त्यजम् ॥ २८७ ॥
धैर्यमालम्ब्य काकुत्स्थस्तानुवाच महत्तरान् । साधु व्यज्ञपि युष्माभिन भक्ता काप्युपेक्षका ॥ २८८ ॥
न स्त्रीमात्रकृते जातु सहिष्येऽहमिहायश । इति पत्र प्रतिज्ञाय विससर्ज महत्तरान् ॥ २८९ ॥
निशायामथ काकुत्स्थ प्रच्छन्न सदनाद्बहि । निरगादिति चाश्रौषीज्जनवाद पदे पदे ॥ २९० ॥
रावणेनापनीतेय तद्गृहे च चिर स्थिता । सीतानीता च रामेण सतीति च स मन्यते ॥ २९१ ॥
सीतारक्तेन तेनेय नोपभुक्ता कथ भवेत् । नांदोऽपि व्यमृशद्रामो न रक्तो दोषमीक्षते ॥ २९२ ॥

१ द्रुक्षपणवत् । २ सविस्त्रिबुद्धि । ३ बलात्कारेण । ४ मद पतद् ।

इत्यादिसीतानिर्वादं श्रुण्वन्नामो गृहे ययौ । भूयोऽपि तल्लक्षणार्थमादिदेश चरान् वरान् ॥ २९३ ॥
एवं च दध्यौ काकुत्स्थो मया यस्याः कृते कृतः । रक्षःकुलक्षयो रौद्रस्तस्याः किमिदमागतम् ॥ २९४ ॥
जाने महासती सीता स्त्रीलोलः स च रावणः । कुलं च मे निष्कलङ्कं हा रामः किं करोत्वसौ ॥ २९५ ॥
द्राक् चरास्ते बहिः श्रुत्वा सीतानिर्वादमब्रुवन् । रामस्य सानुजकपिरक्षोराजस्य सुस्फुटम् ॥ २९६ ॥
क्रुद्धोऽथ लक्ष्मणोऽवोचद्दोषान् सङ्कल्प्य हेतुभिः । ये निन्दन्ति सतीं सीतां तेषामेषोऽन्तकोऽस्म्यहम् ॥२९७ ॥
रामोऽप्यूचे मम पुरा न्यक्षपीदं महत्तरैः । स्वयं च शुश्रुवे तस्य संवादोऽयं चरैः कृतः ॥ २९८ ॥
श्रुत्वा चामी समायाताः प्रत्यक्षं चापि भाषिताः । सीतात्यागे मापवादीत् सीतास्वीकारवज्जनः ॥ २९९ ॥
ऊचे च लक्ष्मणो लोकगिरा सीतां स्म मा त्यज । यथा तथापवदिता यदयद्वसुखो जनः ॥ ३०० ॥
लोकः सौराज्यसुस्थोऽपि राजदोषपरो भवेत् । शिक्षणीयो न चेत्तत्रोपेक्षणीयः स भूभुजाम् ॥ ३०१ ॥
रामोऽप्यूचे सत्यमेतदीदृग् लोकः सदापि हि । सर्वलोकविरुद्धं तु त्याज्यमेव यशस्विनः ॥ ३०२ ॥
इत्युक्त्वोवाच सेनान्यं कृतान्तवदनं बलः । अरण्ये त्यज्यतां क्वापि सीतेयं गर्भवत्यपि ॥ ३०३ ॥
पतित्वा रामपादेषु बभाषे लक्ष्मणो रुदन् । सीतादेव्या महासत्यास्त्यागोऽयमुचितो न हि ॥ ३०४ ॥
नातः परं त्वया वाच्यमिति रामेण भाषिते । नीरङ्गीच्छन्नवक्त्रोऽगात् सौमित्रिः स्वगृहं रुदन् ॥ ३०५ ॥
कृतान्तवदनं रामोऽन्वशात् सीतां वने नय । सम्मेतयात्राव्याजेन तस्याः खल्वेष दोहद ॥ ३०६ ॥
सेनानीरपि सम्मेतयात्रायै रामशासनम् । आख्याय सीतामारोप्य स्यन्दने प्राचलद्द्रुतम् ॥ ३०७ ॥

---

१ यथा सीतास्वीकारे जनोऽपवदति तथा सीतात्यागे मापवदत्वतः सीतात्यागः कर्तव्य इतिभावः ।

दुर्निमित्तेष्वशकुनेष्वपि सीता रथस्थिता । जगाम दूरमध्वानमार्जवादविशङ्किता ॥ ३०८ ॥
गङ्गासागरमुत्तीर्यारण्ये सिंहनिनादके । गत्वा कृतान्तवदनस्तस्थौ किञ्चिद्विचिन्तयन् ॥ ३०९ ॥
साश्रु म्लानमुख त च प्रेक्ष्य सीताब्रवीदिति । कथमित्थ स्थितोऽसि त्व सशोक इव दुर्मना ॥ ३१० ॥
कृतान्त कथमप्यूचे दुर्वच वच्म्यह कथम् । दुष्कर कृतवांश्चैतत् प्रेष्यभावेन दूषित ॥ ३११ ॥
राक्षसावाससवासापवादाल्लोकजन्मन । भीतेन देवि रामेण त्याजितासि वनेऽनघे ॥ ३१२ ॥
अपवादे पराख्याते राम त्वय्यजनोद्यतम् । न्यषेधील्लक्ष्मणो लोकं प्रति क्रोधारुणेक्षण ॥ ३१३ ॥
सिद्धाज्ञया निषिद्धश्च रामेण स रुदन् ययौ । अह च प्रेषितोऽमुष्मिन् कार्ये पापोऽस्मि देवि हा ॥ ३१४ ॥
अमर्णिश्वापदाकीर्णे मृत्योरेकनिकेतने । जीविष्यसि मया त्यक्ता स्वप्रभावेण केवलम् ॥ ३१५ ॥
तच्छ्रुत्वा स्यन्दनात् सीता मूर्छिता न्यपतद्भुवि । मृतेति बुद्ध्या सेनानी पापम्मन्यो रुरोद स ॥ ३१६ ॥
सीतापि वनवातेन कथञ्चित् प्राप चेतनाम् । भूयो भूयोऽप्यमूर्छच्च चेतनामाससाद च ॥ ३१७ ॥
महत्यामथ वेलायां सुस्थीभूयेत्युवाच सा । इतोऽयोध्या कियद्दूरे रामस्तिष्ठति कुत्र वा ॥ ३१८ ॥
सेनानीरप्यधाद्दूरेऽयोध्या किं पृच्छ्यानया । उग्राज्ञस्य च रामस्य पर्याप्त देवि वार्तया ॥ ३१९ ॥
इति श्रुत्वापि सा रामभक्ता भूयोऽप्यभाषत । भद्र मद्वाचिकमिद ब्रूसे रामस्य सर्वथा ॥ ३२० ॥
यदि निर्वादभीतस्त्व परीक्षा नाकृथा कथम् । शङ्कास्थाने हि सर्वोऽपि दिव्यादि लभते जन ॥ ३२१ ॥

---

१ सिंहाना निनादो यस्मिंस्तस्मिन् । २ किङ्करत्वेन । ३ भयेन । ४ मत्स देशम् । ५ पञ्चदिव्यानां मध्ये किमपि दिव्य करोति येन सत्यासत्ये परीक्ष्येते इति भाव ।

अनुभोक्ष्ये स्वकर्माणि मन्दभाग्या वनेऽप्यहम् । नानुरूपं त्वकार्षीस्त्वं विवेकस्य कुलस्य च ॥ ३२२ ॥
यथा खलगिरात्याक्षीः स्वामिन्नेकपदेऽपि माम् । तथा मिथ्यादृशां वाचा मा धर्मं जिनभाषितम् ॥ ३२३ ॥
इत्युक्त्वा मूर्छिता भूमौ पतितोत्थाय चाभ्यधात् । मया विना कथं रामो जीविष्यति हतास्मि हा ॥ ३२४ ॥
रामाय स्वस्त्यथाशंसेराशिषं लक्ष्मणस्य च । शिवास्ते सन्तु पन्थानो वत्स गच्छोपराघवम् ॥ ३२५ ॥

एवंविधेऽपि दयिते विपरीतवृत्तौ यैवंविधा तदियमेव सतीषु धुर्या ।
सञ्चिन्तयन्निति भृशं प्रणिपत्य मुक्त्वा सीतां कृतान्तवदनो ववले कथञ्चित् ॥ ३२६ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमपर्वणि
सीतापरित्यागो नामाष्टमः सर्गः समाप्तः ।

---

## ॥ अथ नवम सर्ग ॥

अथ सीता भयोद्भ्रान्ता बभ्रामेतस्ततो वने । आत्मानमेव निन्दन्ती पूर्वदुष्कर्मदूषितम् ॥ १ ॥
भूयो भूयश्च रुदती स्खलन्ती च पदे पदे । गच्छन्ती पुरतोऽपश्यन्महत् सैन्यं समापतत् ॥ २ ॥
मृत्युजीवितयोस्तुल्याशया प्रेक्ष्यापि तद्बलम् । सीता तस्थावभीतैव नमस्कारपरायणा ॥ ३ ॥
तां दृष्ट्वा विस्मयाश्चक्रु सैनिका प्रत्युतापि ते । का नाम दिव्यरूपेयं भूस्थितेत्यभिभाषिण ॥ ४ ॥
सीतायाः रुदितं श्रुत्वा स्वरवित्सत्वमृनृप । इयं महासती कापि गुर्विणी चेत्यवोचत ॥ ५ ॥
कृपालु स महीपाल उपसीतं जगाम च । सीताप्याशङ्किता तस्य स्व नेपथ्यमढौकयत् ॥ ६ ॥
राजाप्येवममापिष्ट मा भैषीस्त्वं मनागपि । तवैव भूषणा यत्तान्यङ्गे तिष्ठन्तु हे स्वस ॥ ७ ॥
का त्वं कस्त्वामिहात्याक्षीन्निर्घृणेभ्योऽपि निर्घृण । आख्याहि मा स्म शङ्किष्ठास्त्वत्कष्टेनास्मि कष्टित ॥८॥
तन्मन्त्री सुमतिर्नाम सीतामेत्याब्रवीदिति । गजवाहनराजस्य बन्धुदेव्याश्च नन्दन ॥ ९ ॥
नृपतिर्वज्रजङ्घोऽयं पुण्डरीकपुरेश्वर । महार्हतो महासत्त्व परनारीसहोदर ॥ १० ॥
गजान् ग्रहीतुमत्रैत्य कृतार्थीभूय च व्रजन् । त्वद्दु खदु खितोऽभ्यागाद्दु खमाख्याहि तन्निजम् ॥ ११ ॥
विश्वस्य सीताप्याचख्यौ स्ववृत्तान्तमशेषत । रुदती रोदयन्ती तौ कृपालू राजमन्त्रिणौ ॥ १२ ॥
निर्व्याजो व्याजहारैवं राजा धर्मस्वसासि मे । एकधर्मप्रपन्ना हि सर्वे स्युर्बन्धवो मिथ ॥ १३ ॥

---

१ आगच्छत् । २ स्वरं वेत्तीति स्वरवित् स चासौ तत्त्वेनानृप । ३ निर्दयेभ्य । ४ महार्हन्भक्त उत्तमधार्मिक इति यावत् । ५ विश्वासं कृत्वा । ६ निष्कपटः ।

मम भामण्डलस्येव भ्रातुरेहि तदोकसि । स्त्रीणां पतिगृहादन्यत् स्थानं भ्रातृनिकेतनम् ॥ १४ ॥
रामोऽपि लोकवादेन त्वामत्याक्षीन्न तु स्वयम् । पश्चात्तापेन सोऽप्यद्य मन्ये त्वमिव कष्टभाक् ॥ १५ ॥
गवेषयिष्यत्यचिरात्त्वां सोऽपि विरहातुरः । चक्रवाक इवैकाकी ताम्यन् दशरथात्मजः ॥ १६ ॥
इत्युक्त्वा निर्विकारेण तेनामेत्यभिधायिनी । सीता रुरोह शिबिकां सद्यस्तदुपनायिताम् ॥ १७ ॥
पुण्डरीकपुरं चागान्मिथिलामपरामिव । अहर्निशं धर्मशीला चास्थात्तद्दर्शिते गृहे ॥ १८ ॥
इतश्च रामसेनानीर्गत्वा रामाय सोऽवदत् । वने सिंहनिनादाख्ये त्यक्तवानस्मि जानकीम् ॥ १९ ॥
मुहुर्मुहुः सा मूर्छित्वा चेतित्वा च मुहुर्मुहुः । कथञ्चिद्धैर्यमालम्ब्य वाचिकं चैवमादिशत् ॥ २० ॥
नीतिशास्त्रे स्मृतौ देशे कस्मिन्नाचार ईदृशः । एकपक्षोक्तदोषेण पक्षस्यान्यस्य शिक्षणम् ॥ २१ ॥
सदा विमृश्य कर्तुस्तेऽप्यविमृश्य विधायिता । मन्ये मद्भाग्यदोषेण निर्दोषस्त्वं सदाप्यसि ॥ २२ ॥
खलोक्त्याहं यथा त्यक्ता निर्दोषापि त्वया प्रभो । तथा मिथ्यादृशां वाचा मा त्याक्षीर्धर्ममार्हतम् ॥ २३ ॥
इत्युक्त्वा मूर्छिता सीता पतित्वोत्थाय चाब्रवीत् । मया विना कथं रामो जीविष्यति हतास्मि हा ॥ २४ ॥
इत्याकर्ण्य वचो रामः पपात भुवि मूर्छया । सम्भ्रमाल्लक्ष्मणेनैत्य सिषिचे चन्दनाम्भसा ॥ २५ ॥
उत्थाय विललापैवं [illegible] सा सीता महासती । सदा खलानां लोकानां वचसा ह्रीं भयोज्झिता ॥ २६ ॥
अथोचे लक्ष्मणः स्वामिंस्तस्मिन्नद्यापि सा वने । महासती स्वप्रभावत्राता नूनं भविष्यति ॥ २७ ॥
गत्वा गवेषयित्वा च स्वयमानीयतां प्रभो । सीता देवी त्वद्विरहान्न हि यावद्विपद्यते ॥ २८ ॥

---

१ आमेत्यङ्गीकारेऽव्ययम् । २ दण्ड० । ३ ह्रीति खेदेऽव्ययम् ।

श्रुत्वैव सह तेनैव सेनान्या खेचरैश्च तै । रामोऽगाद्व्योमयानेन तत्रारण्येऽतिदारुणे ॥ २९ ॥
प्रतिस्थल प्रतिजल प्रतिशैल प्रतिद्रुमम् । रामो गवेषयामास ददर्श न तु जानकीम् ॥ ३० ॥
मन्ये व्याघ्रेण सिंहेन श्वापदेनापरेण वा । सीता जग्धेति सुचिर दध्यौ रामोऽतिदु खित ॥ ३१ ॥
सीताप्राप्तौ विमुक्ताशो निवृत्य स्वपुरीं ययौ । पौरै सीतागुणग्राह निन्द्यमानो मुहुर्मुहु ॥ ३२ ॥
प्रेतकार्य च सीताया रामोऽकार्षीदुदश्रुक । पश्यन् सीतामयमिव सर्व शून्यमिवाथ वा ॥ ३३ ॥
सैवं हृदि दृशोरग्रे तस्थौ रामस्य वाचि च । क्वापि तिष्ठति सातेति तथापि न निवेद स ॥ ३४ ॥
इतश्च तत्र वैदेही सुषुवे युग्मिनौ सुतौ । नामतोऽनङ्गलवण मदनाङ्कुशमप्यथ ॥ ३५ ॥
वज्रजङ्घस्तयोश्चक्रे जन्मनाममहोत्सवौ । स्वपुत्रलाभादधिक मोदमानो महामना ॥ ३६ ॥
धात्रीजनैर्लाल्यमानौ लीलादुर्ललितावुभौ । क्रमेण ववृधाते तावश्विनाविव भूचरौ ॥ ३७ ॥
कलाग्रहणयोग्यौ तावजायता महाभुजौ । कलभाविव शिक्षार्हौ नरेन्द्रनयनोत्सवौ ॥ ३८ ॥
तदा च नाम्ना सिद्धार्थोऽणुव्रती सिद्धपुत्रक । विद्याबलर्द्धिसपन्न कलागमविचक्षण ॥ ३९ ॥
त्रिसन्ध्यमपि मेर्वद्रौ चैत्ययात्रासु चङ्क्रमे । आकाशगामी सिद्धार्थो वैदेहीगृहमाययौ ॥ ४० ॥

॥ युग्मम् ॥

वैदेह्या भक्तपानाद्यै श्रद्धया स तु भोजित । तथा सुखविहार च तया पृष्टस्तदावदत् ॥ ४१ ॥

---

१ भक्षिता । २ सीताया गुणान् गृहीत्वा । ३ जन्मनो नाम्नश्च महोत्सवौ । ४ लीलया चपलौ ।
५ कलास्वागमेषु शास्त्रेषु च विचक्षण । ६ गमने ।

तेनापि पृष्टा वैदेही सुतजन्मावधि स्वकम् । मूलाद्वृत्तान्तमाचख्यौ तस्य भ्रातुरिवाग्रतः ॥ ४२ ॥
ऊचेऽष्टाङ्गनिमित्तज्ञः सिद्धार्थः करुणानिधिः । किं ताम्यसि मुधा यस्यास्तनयौ लवणाङ्कुशौ ॥ ४३ ॥
प्रशस्तलक्षणौ साक्षादिव तौ रामलक्ष्मणौ । मनोरथं तव सुतौ नचिरात् पूरयिष्यतः ॥ ४४ ॥
तेनेत्याश्वासिता सीता तमभ्यर्थ्य कृताग्रहा । स्वगृहे धारयामास पुत्राध्यापनहेतवे ॥ ४५ ॥
स भव्याचिति तत्पुत्रौ सर्वा अग्राहयत् कलाः । तथा यथा तावभूतां दुर्जयौ द्युसदामपि ॥ ४६ ॥
तावधीताखिलकलौ प्रपेदाते च यौवनम् । नूतनाविव कन्दर्पवसन्तौ सहचारिणौ ॥ ४७ ॥
वज्रजङ्घः शशिचूलां पुत्रीं लक्ष्मीवतीभवाम् । कन्या द्वात्रिंशतं चान्या लवणेनोदवाहयत् ॥ ४८ ॥
सोऽङ्कुशाय ययाचे तु पृथ्वीपुरपतेः पृथोः । कन्यकाममृतवतीजातां कनकमालिकाम् ॥ ४९ ॥
वंशो न ज्ञायते यस्य तस्मै स्वदुहिता कथम् । दीयतामित्यभाषिष्ट पृथुः पृथुपराक्रमः ॥ ५० ॥
वज्रजङ्घस्तदाकर्ण्य तं क्रोधादभ्यषेणयत् । पृथुगृह्यं व्याघ्ररथं युद्धे बद्ध्वाग्रहीन्नृपम् ॥ ५१ ॥
स्वमित्रं पोतनपतिं साहाय्यायाह्वयत्पृथुः । विधुरेषु हि मित्राणि स्मरणीयानि मन्त्रवत् ॥ ५२ ॥
वज्रजङ्घोऽपि पुत्रान् स्वान्नैररानाययद्युधि । तैर्वार्यमाणावपि तौ चेयतुर्लवणाङ्कुशौ ॥ ५३ ॥
अन्येद्युर्ववृते युद्धं चम्वोर्मिलितयोर्द्वयोः । परैरतिबलैर्वज्रजङ्घसैन्य त्वभज्यत ॥ ५४ ॥
सङ्क्रुद्धौ मातुलचमूभङ्गेन लवणाङ्कुशौ । निरङ्कुशाविव गजौ प्रणिघ्नन्तावधावताम् ॥ ५५ ॥
तयोरोजस्विनो रंहो मनागपि न सेहिरे । द्विपन्तः प्रावृड्पूरस्रोतसोरङ्घ्रिपा इव ॥ ५६ ॥
अभज्यत ससैन्योऽपि पृथुर्पाक्नरेश्वरः । ऊचतुस्तावदेवं तौ स्मेरास्यौ रामनन्दनौ ॥ ५७ ॥

अपरिज्ञातवंशाभ्यामप्यावाभ्यामिहाहवे । विज्ञातवंशजा यूयं पलायध्वे कथं त्वहो ॥ ५८ ॥
इति तद्वचनं श्रुत्वा वलित्वा पृथुरब्रवीत् । व्यज्ञायि वंशो युष्माकं विक्रमेणामुना मया ॥ ५९ ॥
अङ्कुशायार्थिता कन्या वज्रजङ्घन भूभुजा । नूनं मम हितेनैव वरो हीदृक् क लभ्यते ॥ ६० ॥
इति सानुनयं प्रोच्य सोऽङ्कुशाय तदैव हि । कन्यां कनकमालाख्यां प्रददौ पूर्वयाचिताम् ॥ ६१ ॥
स धानं वज्रजङ्घन समर्थं सर्वभूभुजाम् । चक्रे पृथुनृपं पुण्यात् स्वहृदयकङ्कुशं वरम् ॥ ६२ ॥
तत्रास्थाच्छिबिरं न्यस्य वज्रजङ्घनरेश्वरः । आगाच्च नारदमुनिः सचक्रे तेन चोचके ॥ ६३ ॥
वज्रजङ्घो निषण्णेषु राजस्वाख्य नारदम् । अङ्कुशाय पृथुर्दास्यत्यसौ कन्यां निजां मुने ॥ ६४ ॥
लवणाङ्कुशयोर्वंशमस्मत्सम्पाधिनोऽस्य तत् । आख्याहि ज्ञातजामातृवंशो येनैष तुष्यति ॥ ६५ ॥
अथोचे नारदः स्मित्वा वंशं को वेत्ति नानयोः । यस्योत्पत्त्यादिकन्दः स भगवानृषभध्वजः ॥ ६६ ॥
चक्रिणौ ह्यनयोर्वंशे भरताद्याः कथाश्रुताः । को न वेत्त्यनयोस्तातौ मत्पक्षौ रामलक्ष्मणौ ॥ ६७ ॥
गर्भस्थयोरप्यनयोरयोध्यालोकजन्मनः[1] । अपवादाच्चकितेन त्यक्ता रामेण जानकी ॥ ६८ ॥
अथाङ्कुशो हसित्वोचे ब्रह्मन्न खलु साधु तत् । चक्रे रामेण वैदेह्यां त्यजता दारुणे वने ॥ ६९ ॥
भूयांसि ह्यपवादस्य कारणानि निराकृतौ । सन्ति तत्र किं त्वेवं विद्वानपि चकार सः ॥ ७० ॥
पप्रच्छ लवणोऽथैवं दूरे कियति सा पुरी । यस्यां वसति मे तातः सानुजः सपरिच्छदः ॥ ७१ ॥
मुनिश्चोचे तव पिता यस्यां विश्वैकनिर्मलः । साऽयोध्या पुरितः षष्ट्युग्योजनशते खलु ॥ ७२ ॥

---

१ अयोध्यालोकाज्जन्म यस्य तस्मादपवादात् ।

वज्रजङ्घमथोवाच लवणः प्रश्रयं श्रयन् । इच्छावस्तत्र गत्वावां प्रेक्षितुं रामलक्ष्मणौ ॥ ७३ ॥
प्रतिपद्य स तद्वाचमङ्कुशं पर्यणाययत् । महोत्सवेन पृथुराट्पुत्र्या कनकमालया ॥ ७४ ॥
वज्रजङ्घपृथुभ्यां तावन्वितौ लवणाङ्कुशौ । साधयन्तौ बहून् देशान् लोकाख्यपुरमीयतुः ॥ ७५ ॥
युद्धभूमौ च तद्भूपं धैर्यशौण्डीर्यशालिनम् । कुवेरकान्तनामानं तत्र मानिनं जिग्यतुः ॥ ७६ ॥
लम्पाकेष्वेककर्णाख्यं विजिग्याते नृपं च तौ । ततश्च विजयस्थल्यां भूपं भ्रातृशताभिधम् ॥ ७७ ॥
गङ्गामुत्तीर्य कैलासस्योत्तरां दिशमीयतुः । तत्र नन्दनचारूणां देशानां चक्रतुर्जयम् ॥ ७८ ॥
रुंषकुन्तलकालाम्बुनन्दिनन्दनसिंहलान् । शलभाननलाञ्छलान् भीमान् भूतरवादिकान् ॥ ७९ ॥
तौ जयन्तौ नृपान् सिंधोः परकूलमुपेयतुः । तत्र चार्याननार्यांश्च साधयामासतुर्नृपान् ॥ ८० ॥ युग्मं ॥
बहुदेशेश्वरानेवं साधयित्वा सहैव तैः । निवृत्योपेयतुस्तौ तत्पुण्डरीकपुरं पुरम् ॥ ८१ ॥
अहो धन्यो वज्रजङ्घो यदीयौ यामिनन्दनौ । ईदृशाविति जल्पद्भिर्वीक्ष्यमाणौ पुरीजनैः ॥ ८२ ॥
जग्मतुः स्वगृहं वीरौ भूपवीरैः समावृतौ । प्रणेमतुश्च जानक्याश्चरणौ विश्वपावनौ ॥ ८३ ॥
॥ युग्मम् ॥
चुचुम्ब मूर्ध्नि तौ सीता स्नपयन्ती मुदश्रुभिः । रामलक्ष्मणयोस्तुल्यौ भूयास्तमिति चावदत् ॥ ८४ ॥
ऊचतुर्वज्रजङ्घं तौ मातुल प्राक् त्वयावयोः । मेने यानमयोध्यायामिदानीमनुतिष्ठ तत् ॥ ८५ ॥
आज्ञाप्यन्तां च लम्पाकरुंपकालाम्बुकुन्तलाः । शलभानलञ्छलाद्याश्चापरेऽपि महीभुजः ॥ ८६ ॥

१ लम्पाकदेशेषु । २ देशनामान्येतानि । ३ भगिनीपुत्रौ ।

प्रयाणभम्भा वाद्यन्तां छाद्यन्तां च दिशो बलै । त्यक्ता येनावयोर्माता वीक्ष्यतस्तस्याद्य विक्रम ॥ ८७ ॥
सीतापि सद्यो रुदती जगादैव सगद्गदम् । वत्सौ कथमनर्थेच्छा युवयो कर्मणामुना ॥ ८८ ॥
वीरौ पितृपितृव्यौ वां दुर्जयौ द्युसदामपि । यकाभ्यां निहतो रक्षःपतिस्त्रैलोक्यकण्टक ॥ ८९ ॥
उत्कण्ठा पितरं द्रष्टुं युवयोर्यदि बालकौ । विनीतीभूय तद्यात पूज्ये हि विनयोऽर्हति ॥ ९० ॥
ततस्तावेवमूचाते विनयं क्रियते कथम् । तस्मिन् द्विषत्पदप्राप्ते त्वय्यामिनि पितर्यपि ॥ ९१ ॥
पुत्रौ तवावामायाताविति तस्य पुर कथम् । गत्वा स्वयं यदिष्यावस्तस्यापि ह्रीकरं वच ॥ ९२ ॥
आनन्दजनकं तस्य जनकस्यापि दोष्मत । युद्धाह्वानं युज्यते तु कुलद्वययशस्करम् ॥ ९३ ॥
अभिधायेति सीताया रुदन्त्यामपि चेलतु । महोत्साहौ महासैन्यौ तौ रामनगरीं प्रति ॥ ९४ ॥
कुठारकुद्दालभृतां सहस्राणि नृणां दश । तयो पथ्यच्छिदन् वृक्षादिकं क्ष्मां च समां व्यधु ॥ ९५ ॥
क्रमेण गत्वा सेनामी रुन्धानौ सर्वतो दिश । तावूषतुरुपायोध्यं योद्धुकामौ महाभुजौ ॥ ९६ ॥
विरुद्धं तद्बलं भूरि श्रुत्वापातं पुरो बहि । उभौ विसिस्मियाते च सिस्मियाते च राघवौ ॥ ९७ ॥
अथ लक्ष्मणमूचे सौमित्रिः परे कोऽमी पतङ्गवत् । मर्तुकामा समापेतुरार्यविक्रमपावकम् ॥ ९८ ॥
इत्युक्त्वा सह रामेण सुग्रीवादिभिरावृत । युद्धे चचाल सौमित्रिरमित्रध्वान्तभास्कर ॥ ९९ ॥
इतश्च नारदाच्छ्रुत्वा तत्त्वामण्डलभूपति । पुण्डरीकपुरे सीतामुपेत्याय ससम्भ्रम ॥ १०० ॥
तस्याख्यद्रुदती सीता रामो मां श्रावरत्यजत् । मत्यागमसहिष्णू च त्वद्यामेयौ युधे गतौ ॥ १०१ ॥

---

१ शत्रुस्थानप्राप्ते । २ आर्यस्य रामस्य विक्रम एव पावकोऽग्निस्तम् ।

भामण्डलोऽप्युवाचैवं त्वत्त्यागं रभसावशात् । चक्रे रामो द्वितीयं तु मा कार्षीत्पुत्रयोर्वधम् ॥ १०२ ॥
आत्मजौ तावजानानो न यावद्धन्ति राघवः । उत्तिष्ठ तावद्गच्छावस्तत्रावामविलम्बितम् ॥ १०३ ॥
इत्युक्त्वा जानकीमात्मविमानमधिरोप्य च । लवणाङ्कुशयोः स्कन्धावारे भामण्डलो ययौ ॥ १०४ ॥
तौ नमश्चक्रतुः सीतां कुमारौ लवणाङ्कुशौ । मातुलोऽयमिति सीताख्यातं भामण्डलं तथा ॥ १०५ ॥
स तौ शिरसि चुम्बित्वा स्वोत्सङ्गमधिरोप्य च । हर्षरोमाञ्चितवपुरित्यूचे गद्गदाक्षरम् ॥ १०६ ॥
वीरपत्नी पुराप्यासीद्दिष्ट्या सम्प्रति वीरसूः । अभूद्युवाभ्यां मे यामिर्यामिनीजानिनिर्मला ॥ १०७ ॥
वीरपुत्रौ च वीरौ च युवां यद्यपि मानदौ । रणं पितृपितृव्याभ्यां मा कृपाथां तथापि हि ॥ १०८ ॥
न रणे रावणोऽप्यासीद्ययोर्मल्लस्तयोः कथम् । युद्धं युवाभ्यामारेभे दोःकण्डूरभसावशात् ॥ १०९ ॥
तावूचतुर्मातुलालं स्नेहभीरुतयानया । त्वत्स्वसाप्यसदस्त्रेयमूचेऽदः कातरं वचः ॥ ११० ॥
आवामपि हि विद्वो यन्न मल्लः कोऽपि तातयोः । युद्धं त्यक्त्वा तयोरेवोत्पादयावः कथं ह्रियम् ॥ १११ ॥
तयोर्ब्रुवाणयोरेव सैन्यानां रामसैनिकैः । सम प्रवृत्ते युद्धं संवर्तावर्तदर्शकम् ॥ ११२ ॥
सुग्रीवाद्यैः खेचरैर्मानयोः सैन्य महीचरम् । हन्यतामिति साशङ्को ययौ भामण्डलो युधि ॥ ११३ ॥
उत्तस्थाते कुमारावप्याहवाय महाबलौ । उच्छ्वास्यमानवर्माणौ रोमाञ्चेनातिशायिना ॥ ११४ ॥
निःशङ्कं युध्यमानास्ते सुग्रीवाद्या नभश्चराः । युधि भामण्डलं दृष्ट्वा पप्रच्छुः कात्रिमाविति ॥ ११५ ॥
भामण्डलाच्च ते ज्ञात्वा रामपुत्राविमाविति । गत्वा सीतां नमश्चक्रुर्न्यपदंश्च पुरो भुवि ॥ ११६ ॥

---

१ वीरं सूते इति वीरसूर्वीरमातेत्यर्थः । २ यामिनी रात्रिर्जाया यस्य स चन्द्रस्तद्वन्निर्मला ।

इतश्च तौ क्षणेनापि दोष्मन्तौ लवणाङ्कुशौ । रामसैन्य दुद्रुवतु क्षयोद्भ्रान्तोब्धिदुर्धरौ ॥ ११७ ॥
यत्र यत्र भ्रमतुस्तौ घने सिंहाविवोद्धतौ । रथी सादी निषादी वा न तत्रास्थाद्धतायुद्ध ॥ ११८ ॥
हतविद्रुतमेव च रामसैन्य विधाय तौ । केनाप्यस्खलितौ राम सौमित्रि चेयतुर्युधि ॥ ११९ ॥
तौ प्रक्ष्य रामसौमित्री एवमन्योऽन्यमूचतु । कावप्येतावभिरामौ कुमारौ विद्विषौ च न ॥ १२० ॥
निसर्गात् स्निह्यति मनो बलाद्द्रक्षति किं त्विदम् । उपच्छाय किमाश्लेष्टुमेतौ योधयितु नु वा ॥ १२१ ॥
इति व्याहारिणि राम रथस्थ लवणो रथी । लक्ष्मण चाङ्कुशोऽवोचत् सौष्ठवप्रश्रयान्वितम् ॥ १२२ ॥
जैत्र जगदजय्यस्य रावणस्यापि दोष्मत । दिष्ट्याद्राक्ष्व वीरयुद्धश्रद्धालुस्त्वामह चिरात् ॥ १२३ ॥
नापूर्यत रणश्रद्धा रावणेनापि ते ध्रुवम् । एष तां पूरयिष्यामि त्व च मे पूरयिष्यसि ॥ १२४ ॥
इत्युक्ते रामसौमित्री द्वौ तौ च लवणाङ्कुशौ । आस्फालयामासतु स्व स्व धनुर्ज्यानभीषणम् ॥ १२५ ॥
कृतान्तसारथी रामस्यन्दन वज्रजङ्घराट् । अनङ्गलवणरथमभ्यढौकयता मिथ ॥ १२६ ॥
रथ विराध सौमित्ररङ्कुशस्य पुन पृथु । अन्योऽन्यमभ्यमित्रीण चक्राते तत्सारथी ॥ १२७ ॥
चतुर भ्रमयामासुस्तेऽप्रसारथयो रथान् । भ्रजहुर्विनिघ ते च चत्वारो द्वन्द्वयोधिन ॥ १२८ ॥
विज्ञाताज्ञातिसम्बन्धौ सापेक्षौ लवणाङ्कुशौ । युयुधाते निरपेक्षौ त्वज्ञानाद्रामलक्ष्मणौ ॥ १२९ ॥
विविधैरायुधैर्युद्ध्वा युद्धान्तेच्छू रघूद्वह । ऊचे कृतान्तवदन रथ प्रत्यरि वाहय ॥ १३० ॥
कृतान्तोऽपि बभाषेऽद खेद प्राप्ता इमी हया । सर्वाङ्ग विशिखैर्विद्धा प्रतियोधेन तेऽमुना ॥ १३१ ॥

---

१ क्षये प्रलयकाल उद्भ्रान्तसमुद्रवद्दुर्धरौ । २ मार्गो हत पश्चाद्विद्रुतम् । ३ अमित्रस्येमम् ।

तुरङ्गा न त्वरन्तेऽमी कशाभिस्ताडिता अपि । रथश्च जर्जरस्तेऽभूदसौ वैर्येस्ताडितः ॥ १३२ ॥
एतौ च मम दोर्दण्डौ द्विट्कृाण्डाघातजर्जरौ । न हि रश्मिं प्रतोदं वा क्षमौ चालयितुं प्रभो ॥ १३३ ॥
पद्मनाभोऽप्यभाषिष्ट ममापि शिथिलायते । धनुश्चित्रस्थितमिव वज्रावर्तं न कार्यकृत् ॥ १३४ ॥
अभून्मुशलरत्नं च वैरिनिर्दलनाक्षमम् । कणकण्डनमात्रार्हमेवैतदपि सम्प्रति ॥ १३५ ॥
अनेकशोऽङ्कुशीभूत यद्दुष्टनृपदन्तिनाम् । हलरत्नं तदप्येतदभूद्भूपाटनोचितम् ॥ १३६ ॥
सदा यक्षै रक्षितानां विपक्षक्षयकारिणाम् । तेषामेव ममास्त्राणामवस्था केयमागता ॥ १३७ ॥
यथाऽपराजितास्त्रोरभून्मोघास्त्रता तदा । तथैव लक्ष्मणस्यापि मदनाङ्कुशयोर्धिनः ॥ १३८ ॥
अत्रान्तरे च सौमित्रिरङ्कुशेनोरुमीषुणा । ताडितः कुलिशेनेव मूर्छितो न्यपतद्रथे ॥ १३९ ॥
सौमित्रिमूर्छाविधुरो विराधः स्यन्दनं रणात् । अचालयत्प्रत्ययोध्यं सञ्ज्ञां लेभेऽथ लक्ष्मणः ॥ १४० ॥
साक्षेपं लक्ष्मणश्चोचे किं विराधाकृथा नवम् । रामभ्रातुर्दशरथसूनोरनुचितं ह्यदः ॥ १४१ ॥
तच्छीघ्रं नय तत्रैव रथं यत्र स मे द्विषन् । एष च्छिनद्मि तच्छीर्षं चक्रेणामोघरंहसा ॥ १४२ ॥
एवमुक्तो विराधोऽथानैषीत्प्रत्यङ्कुशं रथम् । तिष्ठ तिष्ठेति जल्पंश्च चक्रं जग्राह लक्ष्मणः ॥ १४३ ॥
भ्रमदर्कभ्रमकरं भ्रमयित्वा च तद्दिवि । क्रुद्धो मुमोच सौमित्रिरङ्कुशायास्खलद्रयम् ॥ १४४ ॥
आपतच्चाडयामासानैकशोऽस्त्रैस्तदङ्कुशः । सर्वात्मना लवणोऽपि न तु तत्प्रत्यहन्यत ॥ १४५ ॥
वेगेनापत्य तच्चक्रमङ्कुशस्य प्रदक्षिणाम् । कृत्वा लक्ष्मणहस्तेऽगात् पुनर्नीडं इवाण्डजः ॥ १४६ ॥

१ कशाम् । २ पक्षी ।

तद्भूयो लक्ष्मणोऽमुञ्चत् कृत्वा तत्प्रदक्षिणाम् । पुनस्तत्पाणिमेवागाच्छालां मत्त इव द्विपः ॥ १४७ ॥
चिन्तयामासतुश्चैवं विषण्णौ रामलक्ष्मणौ । किं सीरिशार्ङ्गिणावेतौ न त्वावामिह भारते ॥ १४८ ॥
अत्रान्तरे नारदर्षिः सिद्धार्थेन सहैव हि । तत्रोपेत्यावोचदेवं खिन्नं रामं सलक्ष्मणम् ॥ १४९ ॥
हर्षस्थाने विषादोऽयं युवयोः किं रघूद्वहौ । पुत्रात्पराजयो वंशोद्योतनाय न कस्य हि ॥ १५० ॥
सीताकुक्षिभवौ पुत्रौ तावेतौ लवणाङ्कुशौ । त्वां द्रष्टुमागतावत्र युद्धव्याजेन न त्वरी ॥ १५१ ॥
अभिज्ञानमिदं तेऽत्र यच्चक्रं प्रबभूव न । मुधाभूत्तावकं चक्रं पुरा गोत्रबलावपि ॥ १५२ ॥
त्यागात्प्रभृति सीताया वृत्तान्तं नारदोऽखिलम् । पुत्रयुद्धान्तमाचख्यौ विश्वविस्मयदायकम् ॥ १५३ ॥
रामोऽपि विस्मयव्रीडाखेदहर्षसमाकुलः । प्रमूर्छ संज्ञां लेभे च ससिक्तश्चन्दनाम्भसा ॥ १५४ ॥
लक्ष्मणेन सहोदश्रुः पुत्रवात्सल्यपूरितः । जगाम रामो लवणाङ्कुशयोर्द्रुतमन्तिके ॥ १५५ ॥
अवतीर्य रथात्सद्यो विनीतौ लवणाङ्कुशौ । पादेषु पद्मसौमित्र्योस्त्यक्तास्त्रौ पेततुः क्रमात् ॥ १५६ ॥
तावालिङ्ग्य निजोत्सङ्गमारोप्य च रघूद्वहः । मूर्ध्नि चुम्बन् रुरोदोच्चैः शोकस्नेहसमाकुलः ॥ १५७ ॥
रामोत्सङ्गान्निजोत्सङ्गं तावारोप्याथ लक्ष्मणः । चुम्बन् शिरसि बाहुभ्यां परिरेभेऽश्रुपूर्णदृक् ॥ १५८ ॥
विलुठन्तौ पितुरिव विनीतौ पादपद्मयोः । दूरात्प्रसारितभुजः शत्रुघ्नो प्यालिलिङ्ग तौ ॥ १५९ ॥
अपरे पि हि भूपालाः सेनयोरुभयोरपि । प्रमोदन्ते स्म संभूय विवाहमिलिता इव ॥ १६० ॥

---

१ अत्र शस्त्रं । २ भरतचक्रिसदृशचि । ३ पुत्रपराक्रमेण विस्मयः स्वापत्रपयेन व्रीडा सीतावियोगेन खेदः पुत्रप्राप्त्या च हर्षस्तेन युक्तः ।

पुत्रयोर्विक्रमं दृष्ट्वा पित्रा च सह सङ्गमम् । हृष्टा सीता विमानेन पुण्डरीकपुरं ययौ ॥ १६१ ॥
सद्वक्षपुत्रलाभेन मुदितौ रामलक्ष्मणौ । जहृषुः स्वामिहर्षेण भूचरा खेचराश्च ते ॥ १६२ ॥
भामण्डलनृपाग्यातो वज्रजङ्घनृपोऽपि हि । ननाम रामसौमित्री विनीतश्चिरपत्तिवत् ॥ १६३ ॥
रामस्तमाललापैवं भामण्डलसमो सि मे । पुत्रौ योऽवर्धयस्त्वं मेऽनैषीः कान्तामिमा च यः ॥ १६४ ॥
इत्युक्त्वा पुष्पकारूढः पद्मनाभः सलक्ष्मणः । अर्धासनोपविष्टाभ्यां पुत्राभ्यां प्राविशत्पुरीम् ॥ १६५ ॥
उद्ग्रीवपार्ष्णिभिः पौरै राजमार्गे च विस्मितैः । प्रेक्ष्यमाणः स्तूयमानस्ततो रामोऽगमद्गृहे । १६६ ॥
तत्रोत्तार पुत्राभ्यां सह रामः सलक्ष्मणः । महान्तमत्यन्तमुदा कारयामास चोत्सवम् ॥ १६७ ॥
अथ रामं सुमित्राभूः कपीश्वरविभीषणौ । हनुमानङ्गदाद्याश्च सम्भूयैवं व्यजिज्ञपत् ॥ १६८ ॥
परदेशे स्थिता देवी त्वया विरहिताधुना । विनामूभ्यां कुमाराभ्यामतिकष्टेन तिष्ठति ॥ १६९ ॥
यथादिशसि तत्स्वामिन्नानयामोऽद्य तामिह । विपत्स्यतेऽन्यथा सा तु पतिपुत्रोज्झिता सती ॥ १७० ॥
किञ्चिद्रामो विचिन्त्योचे जानक्यानीयते कथम् । लोकापवादोऽलीकोऽपि बलवानन्तरायकृत् ॥ १७१ ॥
जानेऽहं यत्सती सीता तापि स्वं वेत्सि निर्मलम् । दिव्यं दातुमथादानं तद्द्वयोरपि नास्ति भीः ॥ १७२ ॥
प्रत्यक्षं सर्वलोकानां दिव्यं देवी करोतु सा । शुद्धया च तया सार्धं गृहवासोऽस्तु मे पुनः ॥ १७३ ॥
एवमस्त्वित्युदित्वा ते पुर्या बहिरकारयन् । विशालान्मण्डपानुच्चैस्तदन्तर्मञ्चघोरणीः ॥ १७४ ॥
तेषु चोपाविशन् भूपाः पौरामात्यादयोऽपि च । ते विभीषणसुग्रीवप्रमुखाः खेचरा अपि ॥ १७५ ॥

१ दिशाम् । २ ऊर्ध्वा ग्रीवा पार्ष्णयश्च येषां तैः । ३ मञ्चश्रेणी. ।

ततो रामाज्ञयोत्थाय पुण्डरीकपुरे स्वयम् । गत्वा नत्वा च वैदेहीमित्युवाच कपीश्वरः ॥ १७६ ॥
त्वत्कृते पृथिवि रामेण विमानं दिवि पुष्पकम् । इदानीमिदमध्यास्स्व रामोपान्तमुपेहि च ॥ १७७ ॥
साप्यूचेऽद्यापि मेऽप्यत्यागदुःखं न शाम्यति । तत् कथं यामि राम भूयो दुःखान्तरप्रदम् ॥ १७८ ॥
नत्वा भूयोऽपि सोऽप्योचन्मा कुपस्तत्र शुद्धये । सम पौरैर्नृपैः सर्वैर्मञ्चारूढोऽस्ति राघवः ॥ १७९ ॥
तेनेत्युक्ता पूर्वमपि जानकी शुद्धिकाङ्क्षिणी । आरुरोह विमानं तद्ययोध्यायां जगाम च ॥ १८० ॥
माहेन्द्रोदयमुद्यानं समुपेत्योत्ततार सा । दत्तार्घा लक्ष्मणेनैत्य नमश्चक्रे नृपैरपि ॥ १८१ ॥
अग्र निषण्णः सौमित्रिर्नृपैः सममदोऽवदत् । निजां पुरीं निजं वेश्म प्रवेशादेवि पावय ॥ १८२ ॥
सीताप्यूचे प्राप्तशुद्धिः प्रवेक्ष्यामि पुरीमिमाम् । गृहं च नान्यथा वत्सापवादो जातु शाम्यति ॥ १८३ ॥
इति सीताप्रतिज्ञां तेऽशंसन् रामाय भूभुजः । रामोऽप्युपेत्य वैदेहीमित्यूचे वाचनिष्ठुरम् ॥ १८४ ॥
भोगा न चेद्रावणेन तस्युष्या अपि तद्गृहे । समक्षं सर्वलोकानां तद्दिव्यं कुरु शुद्धये ॥ १८५ ॥
स्मित्वा सीताप्युवाचैवं विज्ञस्त्वत्तोऽपरो न हि । अज्ञात्वा यो हि मे दोषं त्यागं कुर्या महावने ॥ १८६ ॥
दण्डमादौ विधायाथ कुरुषे मत्परीक्षणम् । विचक्षणोऽसि काकुत्स्थ सज्जा तत्रापि नन्वहम् ॥ १८७ ॥
ऊचे विलक्षो रामोऽपि जाने दोषस्तवास्ति न । जनोत्पादितदोषस्योत्तारणायेदमुच्यते ॥ १८८ ॥
जगाद जानकी दिव्यंपञ्चकं स्वीकृतं मया । विशामि वह्नौ ज्वलिते भक्षयाम्यथ तण्डुलान् ॥ १८९ ॥

---

१ रामसन्निधौ । २ रावणगृहे तस्युष्या वसन्त्यास्तव रावणेन समं भोगा न चेत्स्युरिति सम्बन्धः । ३ मन्त्रितांस्तण्डुलानिति तात्पर्यम् ।

तुलां समधिरोहामि तप्तं कोशं पिबाम्यहम् । गृह्णामि जिह्वया फालं किं तुभ्यं रोचते वद ॥ १९० ॥
॥ युग्मम् ॥

अत्रान्तरेऽन्तरीक्षस्थः सिद्धार्थो नारदोऽप्यथ । लोकः सर्वश्च तुमुलं निषिध्येदमभाषत ॥ १९१ ॥
भो भो राघव सीतेयं निश्चयेन सती सती । महासतीति मा कार्षीर्विकल्पमिह जातुचित् ॥ १९२ ॥
रामोऽप्युवाच हे लोका मर्यादा कापि नास्ति वः । सङ्कल्प्य दोषं युष्माभिरेवेयं दूषिता पुरा ॥ १९३ ॥
ब्रूथान्यत् पुरतो यूयमन्यद्दूरे स्थिताः पुनः । तदा कथं सदोषासीच्छीलवत्यधुना कथम् ॥ १९४ ॥
भूयोऽपि गृह्णतां दोषमर्गला नास्ति कापि वः । प्रत्ययाय ततः सीता विशतु ज्वलितेऽनले ॥ १९५ ॥
इत्युक्त्वाखानयद्रामो गर्तं हस्तशतत्रयम् । पुरुषद्वयदघ्नं चापूरयच्चन्दनेन्धनैः ॥ १९६ ॥
अत्रान्तरे च वैताढ्यस्योत्तरश्रेणिवर्तिनः । हरिविक्रमराजस्य कुमारो जयभूषणः ॥ १९७ ॥
ऊढाष्टशतनारीकः पत्नीं किरणमण्डलाम् । सुप्तां हेमशिखाख्येन समं मातुलसूनुना ॥ १९८ ॥
दृष्ट्वा निर्वासयामास तदैव प्राव्रजत् स्वयम् । सापि मृत्वा समजनि विद्युद्दंष्ट्रेति राक्षसी ॥ १९९ ॥
अयोध्याबहिरभ्येत्य स तदा जयभूषणः । तस्थौ प्रतिमया विद्युद्दंष्ट्रा च तमुपाद्रवत् ॥ २०० ॥
केवलं अस्य चोत्पेदे तदुत्सवविधित्सया । तदानीं च समाजग्मुः सुनासीरादयः सुरा २०१ ॥
सीतायाः प्रेक्ष्य तद्देवाः शक्रमेवं व्यजिज्ञपन् । लोकालीकापवादेन सीता वह्नौ प्रवेक्ष्यति ॥ २०२ ॥

१ सीसकम् । २ शस्त्रधारम् । ३ जयभूषणः । ४ सुनासीर· इन्द्रः ।

पत्यनीकपतिं सीतासान्निध्यायादिशद्धरि । तस्यर्षे केवलज्ञानोत्सवं तु विदधे स्वयम् ॥ २०३ ॥
रामाज्ञयाथ भृतकास्त गर्तं चन्दनाश्रितम् । परितो ज्वालयामासुर्दुः प्रेक्ष्य चक्षुषामपि ॥ २०४ ॥
ज्वालाकरालं तं प्रेक्ष्य रामो दध्याविदं हृदि । अहो अत्यन्तविषमं किं ममेदमुपस्थितम् ॥ २०५ ॥
इयं महासती नूनं निःशङ्कामो प्रवेक्ष्यति । दैवस्येव हि दिव्यस्य प्रायेण विषमा गतिः ॥ २०६ ॥
मया सहास्या निर्वासो हरणं रावणेन च । वने त्यागो मया भूयो भूयोऽप्येतच्च मत्कृतम् ॥ २०७ ॥
एवं सोऽचिन्तयद्यावत्तावत्सीतोपपावकम् । स्थित्वा स्मृत्वा च सर्वज्ञं चक्रे सत्यापनामिति ॥ २०८ ॥
हे लोकपाला लोकाश्च सर्वे शृणुत यद्यहम् । अन्यमन्यत्र रामाच्चकाङ्क्षिषं दहत्वयम् ॥ २०९ ॥
अन्यथा तु सुखस्पर्शो वारिवास्त्विन्त्युदीर्य सा । झम्पां स्मृतनमस्कारा ददौ तस्मिन् हुताशने ॥ २१० ॥
यावत्सा प्राविशत्तावद्विध्यातो वह्निराश्वपि । गर्तं स्वच्छोदकापूर्णं स तु वापीत्वमाययौ ॥ २११ ॥
सीता त्वधिजलं पद्मोपरि सिंहासनस्थिता । पद्मवास्थात्सतीभावतुष्टदेवप्रभावतः ॥ २१२ ॥
कुर्वाणं क्वापि हुङ्कारं क्वचिद्गुलुगुलारवम् । क्वापि भम्भायितध्वानं क्वचित्पटपटाध्वनिम् ॥ २१३ ॥
क्वचिद्दिलिदिलिध्वानं क्वचित् खलखलास्वनम् । समुद्रान्म इवाम्भस्तत्र सावर्तमैस्यत ॥ २१४ ॥
॥ युग्मम् ॥
तदुच्छलज्जलं वाप्या उद्वेलस्येव वारिधेः । आप्लावयितुमारेभे मञ्चानपि गरीयसः ॥ २१५ ॥

१ सेवकाः । २ अग्निप्रवेशनम् । ३ लक्ष्मीरिव ।

विद्याधरा भयोद्भ्रान्ताः समुत्पत्येयुरम्बरे । भूचरास्तुकुशुश्चैवं पाहि सीते महासति ॥ २१६ ॥
सीताप्युत्तीर्णमम्भस्तत् स्वपाणिभ्यामवालयत् । पुनर्वापीप्रमाणं तदभूत्तस्याः प्रभावतः ॥ २१७ ॥
उत्पलैः कुमुदैः पद्म पुण्डरीकैर्निरन्तरा । सौरभोद्भ्रान्तभृङ्गालीसङ्गीता हंसशालिनी ॥ २१८ ॥
आस्फलद्वीचिनिचयमणिसोपानबन्धुरा । बद्धोभयतटा रत्नोपलैर्वापी बभूव सा ॥ २१९ ॥

॥ युग्मम् ॥

ननृतुर्नारदाद्याः खे सीताशीलप्रशंसिनः । सीतोपरिष्टात्तुष्टाश्च पुष्पवृष्टिं व्यधुः सुराः ॥ २२० ॥
अहो शीलमहो शीलं रामपत्न्या यशस्करम् । इति लोकप्रघोषोऽभूद्रोदःकुक्षिम्भरिः क्षणात् ॥ २२१ ॥
मातुः प्रभावं तं दृष्ट्वा मुदितौ लवणाङ्कुशौ । हंसाविव तरन्तौ तौ तत्समीपमुपेयतुः ॥ २२२ ॥
तौ मूर्ध्न्याघ्राय वैदेह्या पार्श्वयोरुपवेशितौ । कलभाविव रेजाते नदीतीरद्वयस्थितौ ॥ २२३ ॥
गत्वा सौमित्रिशत्रुघ्नभामण्डलबिभीषणाः । सुग्रीवाद्याश्च वैदेही नमश्चक्रुः सभक्तयः ॥ २२४ ॥
सीतामुपाययौ रामोऽप्यभिरामतरद्युतिः । पश्चात्तापत्रपापूर्ण इत्यूचे रचिताञ्जलिः ॥ २२५ ॥
स्वभावादप्यसद्दोषग्राहिणां पुरवासिनाम् । छन्दानुवृत्त्या त्यक्तासि मया देवि सहस्व तत् ॥ २२६ ॥
त्यक्तोग्रश्वापदेऽरण्येऽजीवस्त्वं स्वप्रभावतः । एकं दिव्य तदप्यासीन्नाज्ञासिषमहं पुनः ॥ २२७ ॥
क्षान्त्वा सर्वं ममेदानीमिदमध्यास्स्व पुष्पकम् । चलस्व वेश्मनि प्राग्वद्रमस्व सहिता मया ॥ २२८ ॥

---

१ ईयुर्जग्मुः । २ उच्छलितम् । ३ सौरभेण सुगन्धेनोद्भ्रान्ता या भृङ्गाली भ्रमरसमूहस्तस्या सङ्गीतं यस्यां सा । ४ आस्फलन्तो वीचिनिचयास्तरङ्गसमूहा यत्रैतादृशैर्मणिसोपानैर्बन्धुरा व्याप्ता । ५ इच्छानुवर्तनेन ।

सीताप्यूचे न ते दोषो न च लोकस्य कश्चन । नान्यस्यापि कस्यापि किं तु मत्पूर्वकर्मणाम् ॥ २२९ ॥
निर्विण्णा कर्मणामीदृग्दुःखावर्तप्रदायिनाम् । ग्रहीष्यामि परिव्रज्या तेषामुच्छेदकारिणीम् ॥ २३० ॥
इत्युक्त्वा मैथिली केशानुच्चखान स्वमुष्टिना । रामस्य चार्पयामास शक्रस्येव जिनेश्वर ॥ २३१ ॥
सद्यो मुमूर्छ काकुत्स्थो नोत्तस्थौ यावदेष च । तावत्सीता ययौ साधुजयभूषणसन्निधौ ॥ २३२ ॥

केवली स जयभूषणो मुनिर्मैथिलीं विधिवदप्यदीक्षयत् ।
सुप्रभाख्यगणिनीपरिच्छदे तां चकार च तपःपरायणाम् ॥ २३३ ॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरित्रे महाकाव्ये सप्तमे पर्वणि सीताशुद्धिव्रतग्रहणो नाम नवमः सर्गः ।



## ॥ अथ दशम-सर्गः ॥

अथ सिक्तश्चन्दनेन लब्धसङ्ज्ञो रघूद्वहः । व्याजहार क्व ननु सा सीताऽवी मनस्विनी ॥ १ ॥
भो भूचराः खेचराश्च न चेद्युयं मुमूर्षवः । तन्मे लुञ्चितकेशामप्याशु दर्शयत प्रियाम् ॥ २ ॥
वत्स वत्सेहि सौमित्रे तूणौ तूणौ धनुर्धनु । यदमी सन्त्युदासीनाः सुस्थिता दुस्थिते मयि ॥ ३ ॥
इत्युक्त्वा धन्व गृह्णन्तं त नत्वा लक्ष्मणोऽब्रवीत् । आर्यार्य किमिदं लोकः खल्वेप तव किङ्करः ॥ ४ ॥
सीतां यथा दोपभीतोऽत्याक्षीस्त्वं न्यायनैष्ठिकः । भवभीता स्वार्थनिष्ठा तथा सा सर्वमत्यजत् ॥ ५ ॥
प्रत्यक्षमिह वः सीता स्वयमुत्पाट्य कुन्तलान् । आददे विधिवद्दीक्षा जयभूषणसन्निधौ ॥ ६ ॥
इदानीमेव तस्यैरुदपद्यत केवलम् । तज्ज्ञानमहिमावश्यकृत्यमस्ति तवापि हि ॥ ७ ॥
तत्रास्ते स्वामिनी सीता स्वामिन्नात्तमहाव्रता । दर्शयन्ती मुक्तिमार्गं सतीमार्गमिवानया ॥ ८ ॥
रामः प्रकृतिमालम्ब्योवाच साधु मम प्रिया । उपाददे परिव्रज्यां तस्य केवलिनोऽन्तिके ॥ ९ ॥
इत्युक्त्वा सपरीवारो जगाम जयभूषणम् । नत्वा च देशनां तस्माच्छुश्राव रघुपुङ्गवः ॥ १० ॥
देशनान्ते च पप्रच्छ नात्मानं वेद्म्यहं प्रभो । भव्योऽहं किमुताभव्यस्तदाचक्ष्व प्रसीद मे ॥ ११ ॥
अथाख्यत्केवली सोऽपि भव्योऽसि त्वं न केवलम् । सिद्धिं यास्यस्यनेनैव जन्मनोत्पन्नकेवलः ॥ १२ ॥
रामः पप्रच्छ भूयोऽपि मोक्षः प्रव्रज्यया भवेत् । सर्वत्यागेन सा किं तु लक्ष्मणो दुस्त्यजो मम ॥ १३ ॥

---

१ सा प्रव्रज्या सर्वत्यागेन भवेत्, परन्तु लक्ष्मणः मम दुस्त्यजोऽत सर्वत्यागः कथं भवेदिति तात्पर्यम्।

मुनिराख्यदवश्य ते मोक्तव्या बलसम्पद । तदन्ते त्यक्तसङ्ग सन् प्रव्रज्य शिवमाप्स्यसि ॥ १४ ॥
भरता विभीषणोऽपृच्छत् फल प्राग्ज मकर्मणा । जहार रावण सीता लक्ष्मणस्त न्यहन् युधि ॥ १५ ॥
सुग्रीवो भामण्डलश्च तथेमौ लवणाङ्कुशौ । अह च कर्मणा केनात्यन्तरक्ता रघूद्वहे ॥ १६ ॥
भगवानाचचक्षेऽथ भरतार्धेऽत्र दक्षिणे । पुरे क्षेमपुरे नाम्ना नयदत्तोऽभवद्वणिक् ॥ १७ ॥
धनदत्तवसुदत्तौ सुनन्दाकुक्षिजौ सुतौ । तस्याभूतां तयोर्मित्र याज्ञवल्क्योऽभवद्द्विज ॥ १८ ॥
नाम्ना सागरदत्तश्च पुरे तस्मिन्नभूद्वणिक् । तस्य चन्द्रगुणधर कन्या गुणवती पुन ॥ १९ ॥
दत्ता सागरदत्तेन नयदत्तात्मजन्मने । धनदत्ताय गुणवत्यनुरूपगुणाय सा ॥ २० ॥
श्रीकान्तनाम्ने चाढ्याय तत्रत्यायार्थलोभत । ददौ गुणवतीं छन्न माता रत्नप्रभा पुन ॥ २१ ॥
याज्ञवल्क्यस्तु तज्ज्ञात्वा नयदत्तात्मजन्मनो । स्वमित्रयो समाचख्यावसहो मित्रवञ्चने ॥ २२ ॥
वसुदत्तस्ततो गत्वा श्रीकान्तमवधीन्निशि । श्रीकान्तेनापि खड्गेन वसुदत्तो निपातित ॥ २३ ॥
विन्ध्याटव्यामभूतां तावुभावपि कुरङ्गकौ । गुणवत्यप्यनूढैव मृत्वा तत्राभवन्मृगी ॥ २४ ॥
तस्या कृते च तत्रापि युद्ध्वा पञ्चत्वमीयतु । मियो वैरेण तावेव भूयास भ्रमतुर्भवम् ॥ २५ ॥
तदानीं धनदत्तोऽपि स्वभ्रातृवधपीडित । निर्धर्मोऽटन्निशि साधून् ददर्श क्षुधितोऽन्यदा ॥ २६ ॥
ययाचे भोजन तेभ्यस्तेष्वेको मुनिरब्रवीत् । दिवापि न हि साधूनां भक्तपानादिसग्रह ॥ २७ ॥
तथापि नोचित रात्रौ भोक्तु पातु च भद्रक । को वेत्ति जीवसंसक्तिमन्नादौ तमसीदृशे ॥ २८ ॥

इत्यादि बोधितस्तेन सुधयेवोक्षितो हृदि । श्रावकीभूय मृत्वा च सौधर्मे त्रिदशोऽभवत् ॥ २९ ॥
च्युत्वा महापुरपुरे धारणीमेरुनन्दनः । नाम्ना पद्मरुचिः श्रेष्ठी परमश्रावकोऽभवत् ॥ ३० ॥
सोऽन्यदा गोकुलं गच्छन्नश्वारूढो यदृच्छया । जरद्वृषभमद्राक्षीन्मुमूर्षुं पतितं पथि ॥ ३१ ॥
कृपालुः सोऽवरुह्याश्वान्निकटीभूय तस्य तु । कर्णमूले ददौ पञ्चपरमेष्ठिनमस्कृतीः ॥ ३२ ॥
मृत्वा च तत्प्रभावेण तत्रैव स सुतोऽभवत् । छत्रच्छायनरेन्द्रश्रीदत्तयोर्वृषभध्वजः ॥ ३३ ॥
स्वैरं भ्रमन् सोऽन्यदा तां जरद्वृषभुवं ययौ । लेभे च जातिस्मरणं प्राग्जन्मस्थानदर्शनात् ॥ ३४ ॥
तत्र चाकारयच्चैत्यं तस्य चैत्यस्य चैकतः । भित्तावालेखयामास मुमूर्षुं तं जरद्गवम् ॥ ३५ ॥
तत्कर्णान्ते नमस्कारदायिनं पुरुषं च तम् । तदभ्यर्णे तदीयं च सपर्याणं तुरङ्गमम् ॥ ३६ ॥ युग्मम् ॥
आरक्षांस्तत्र चादिक्षच्चित्रं परमार्थतः । इदं विदन्नुदीक्ष्येत स ज्ञाप्यस्त्वरितं मम ॥ ३७ ॥
इत्युक्त्वा स ययौ वेश्म चैत्ये तत्रान्यदा पुनः । वन्दनायाययौ पद्मरुचिः स श्रेष्ठिपुङ्गवः ॥ ३८ ॥
वन्दित्वा तत्र सोऽर्हन्तं भित्तिचित्रमुदैक्षत । सर्वं मे संवदत्येतदित्यूचे च सविस्मयः ॥ ३९ ॥
विज्ञप्तो थ तदारक्षैस्तत्रागाद्वृषभध्वजः । किं वेत्सि चित्रवृत्तान्तमित्यपृच्छच्च तं नरम् ॥ ४० ॥
गवेऽस्मै म्रियमाणाय नमस्कारानदां पुरा । इहाभिज्ञेन केनापि लिखितोऽस्मीत्युवाच सः ॥ ४१ ॥
त नत्वोवाच वृषभध्वजो योऽयं जरद्गवः । राजपुत्रोऽभवं सोऽहं नमस्कारप्रभावतः ॥ ४२ ॥
कामयास्यमहं योनिं तिर्यग्योनिस्तदाप्यहम् । कृपालुस्त्वं न चेन्मह्यं नमस्कारानदास्यथाः ॥ ४३ ॥

१ सिक्तः ।

सर्वथा त्वं गुरु स्वामी दैवतं चासि मे खलु । भुङ्क्ष्व राज्यमिदं प्राज्यं त्वयायत्तं ममापि यत् ॥ ४४ ॥
इत्युक्त्वा पद्मरुचिना सहैव वृषभध्वज । विजहाराकृतद्वेषं पालयञ्छ्रावकव्रतम् ॥ ४५ ॥
श्रावकत्वं चिरं सम्यक् पालयित्वा विपद्य च । ईशानकल्पे जज्ञाते तौ देवौ परमर्द्धिकौ ॥ ४६ ॥
च्युत्वा ततः पद्मरुचिर्मेरोरपरतो गिरौ । वैताढ्ये नगरे नन्द्यावर्ते नन्दीश्वरात्मजः ॥ ४७ ॥
कनकाभाकुक्षिजन्मा नयनानन्द इत्यभूत् । राज्यं भुक्त्वा परिव्रज्य माहेन्द्रे त्रिदशोऽभवत् ॥ ४८ ॥
॥ युग्मम् ॥
च्युत्वा च प्राग्विदेहेषु क्षेमाया पुरि भूपतेः । विपुलवाहनस्याभूत्पद्मावत्यां स नन्दनः ॥ ४९ ॥
श्रीचन्द्रो नाम भुक्त्वा च राज्यं प्रव्रज्य चान्तिके । समाधिगुप्तस्य मुनेर्ब्रह्मलोकेन्द्रतां ययौ ॥ ५० ॥
॥ युग्मम् ॥
च्युत्वा ततोऽय पद्मोऽभूद्रामभद्रो महाबलः । सुग्रीव एष वृषभध्वजजीवस्त्वभूत्क्रमात् ॥ ५१ ॥
भ्रान्त्वा श्रीकान्तजीवोऽभून्मृणालकन्दपत्तने । राजसूनुर्वज्रकण्ठो शम्भुहेमवतीभवः ॥ ५२ ॥
भ्रान्त्वा च वसुदत्तोऽभूच्छम्भुराजपुरोधसः । विजयस्य रत्नचूडाभवः श्रीभूतिरात्मजः ॥ ५३ ॥
गुणवत्यपि सा भ्रान्त्वा श्रीभूतेस्तस्य नन्दना । सरस्वतीकुक्षिभवा नाम्ना वेगवतीत्यभूत् ॥ ५४ ॥
सोद्यौवना यदा साधु प्रतिमास्थं सुदर्शनम् । वन्द्यमानं जनैर्दृष्ट्वा सोपहासमदोऽवदत् ॥ ५५ ॥
अहो साधुरयं दृष्टः पुरा क्रीडन्महेलया । सानेन प्रेषितान्यत्र तद्वन्द्यः कथं जनाः ॥ ५६ ॥

---

१ न कृत द्वेषः येन स्तो विधः इति यावत् । २ स्त्रिया ।

श्रुत्वा विपरिणम्याशु लोकः सर्वोऽपि तं मुनिम्। विप्लावयितुमारेभे कलङ्कोद्घोषपूर्वकम् ॥ ५७ ॥
न मे यावत्कलङ्कोऽयमुत्तरिष्यति सर्वथा। न तावत्पारयिष्यामीत्यभिजग्राह सोऽप्यृषिः ॥ ५८ ॥
ततश्च देवतारोषाच्छूनं वेगवतीमुखम्। साधुव्यतिकरं ज्ञात्वा सा पित्रा भर्त्सिता भृशम् ॥ ५९ ॥
रोषात् पितुश्च सा भीता सुदर्शनमुनेः पुरः। प्रत्यक्षं सर्वलोकानामित्युच्चैःस्वरमब्रवीत् ॥ ६० ॥
निर्दोषः सर्वथासि त्वं दोषोऽलीकोऽयमेव ते। मयैवारोपितः स्वामिंस्तितिक्षस्व क्षमानिधे ॥ ६१ ॥
श्रुत्वेति तद्वचो लोको भूयोऽप्यानर्च तं मुनिम्। उल्लाघाभूद्वेगवती तदादि श्राविका च सा ॥ ६२ ॥
तां च रूपवतीं दृष्ट्वा ययाचे शम्भुभूपतिः। दास्ये मिथ्यादृशे नेति श्रीभूतिः प्रत्युवाच तम् ॥ ६३ ॥
शम्भुर्निहत्य श्रीभूतिं बुभुजे तां बलादपि। भवान्तरे ते वधाय भूयासमिति साशपत् ॥ ६४ ॥
शम्भुनापि विमुक्ता सा हरिकान्तार्यिकान्तिके। प्रवव्राजाथ पूर्णायुर्ब्रह्मलोकमुपाययौ ॥ ६५ ॥
ततश्च्युत्वा शम्भुजीवरक्षोनाथस्य मृत्यवे। निदानवशतो जज्ञे सीतेयं जनकात्मजा ॥ ६६ ॥
सुदर्शनमुनेस्तस्यालीकदोषाधिरोपणात्। अस्याः कलङ्कोऽलीकोऽयं लोकेनेहाधिरोपितः ॥ ६७ ॥
भवं भ्रान्त्वा शम्भुजीवोऽप्युदपादि द्विजन्मनः। कुशध्वजस्य सावित्र्यां प्रभासो नाम नन्दनः ॥ ६८ ॥
स प्रवव्राज विजयसेनर्षेरन्तिकेऽन्यदा। परमं च तपस्तेपे सहमानः परीषहान् ॥ ६९ ॥
सम्मेतयात्राचलितं विद्याधरनरेश्वरम्। कनकप्रभमद्राक्षीदिन्द्रवत्परमर्द्धिकम् ॥ ७० ॥
तपसानेन भूयासमीदृगृद्धिरिति व्यधात्। स निदानं विपद्याथोत्पेदे कल्पे तृतीयके ॥ ७१ ॥

१ श्यामम्। २ निर्मला।

ततश्च्युत्वा रावणोऽभूत् खेचरेन्द्रस्तथाग्रज । कनकप्रभऋद्धेर्यो निदानमकरोत्तदा ॥ ७२ ॥
धनदत्तवसुदत्तमित्रं यस्तु द्विजोऽभवत् । याज्ञवल्क्यो भव भ्रान्त्वा त्वभभू स विभीषण ॥ ७३ ॥
राज्ञा हतस्तु श्रीभूतिर्यो जगाम ततश्च्युत । सुप्रतिष्ठपुरे विद्याधरोऽजनि पुनर्वसु ॥ ७४ ॥
स पुण्डरीकविजयेऽपजहार स्मरातुर । कन्यां त्रिभुवनानन्दचक्रिणोऽनङ्गसुन्दरीम् ॥ ७५ ॥
चक्रिणा प्रेषितैर्विद्याधरैर्व्याकुलस्य तु । विमानात्तस्य पपात सा निकुञ्जेऽनङ्गसुन्दरी ॥ ७६ ॥
कृत्वा निदानं तत्प्राप्त्यै प्रव्रज्य च पुनर्वसु । स्वर्गे ययौ ततश्च्युत्वा लक्ष्मणोऽयमजायत ॥ ७७ ॥
वनस्थिता साप्यनङ्गसुन्दर्युग्रं तपोऽकरोत् । निहितानशना चान्ते जग्रसेऽजगरेण सा ॥ ७८ ॥
मृत्वा समाधिना साऽभूद्देवी कल्पे द्वितीयके । ततश्च्युत्वा विशल्याभूल्लक्ष्मणस्य महिष्यसौ ॥ ७९ ॥
योऽभूद्गुणवतीभ्राता नाम्ना गुणधर स तु । भव भ्रान्त्वाभवद्राजपुत्र कुण्डलमण्डित ॥ ८० ॥
श्रावकत्वं पालयित्वा चिराय च विपद्य स । सीतासोदर एषोऽभूद्भामण्डलनरेश्वर ॥ ८१ ॥
इतोऽभूतां च काकन्द्यां वामदेवद्विजन्मन । श्यामलाकुक्षिजौ पुत्रौ वसुनन्दसुनन्दनौ ॥ ८२ ॥
एकदा च तयोर्गेहे तिष्ठतोराययौ मुनि । मासोपवासी ताभ्यां च भक्तितः प्रतिलम्भित ॥ ८३ ॥
मृत्वा तद्दानधर्मेणोत्तरेषु तु कुरुष्वथ । अभूतां युग्मिनौ मृत्वा सौधर्मे तौ सुरौ तत ॥ ८४ ॥
च्युत्वाभूतां च काकन्द्यां रतिवर्धनभूपते । सुदर्शनाभवौ पुत्रौ प्रियङ्करशुभङ्करौ ॥ ८५ ॥
राज्यं चिरं पालयित्वा प्रव्रज्य च विपद्य च । सुरौ ग्रैवेयकेऽभूतां च्युत्वा च लवणाङ्कुशौ ॥ ८६ ॥
सुदर्शना तयो पूर्वभवमाता भवं चिरम् । भ्रान्त्वाभूदेष सिद्धार्थोऽध्यापको रामपुत्रयो ॥ ८७ ॥

एवं मुनिवचः श्रुत्वा संवेग बहवो ययुः । तदैव रामसेनानीः कृतान्तः प्राव्रजत्पुनः ॥ ८८ ॥
अथोत्थाय नमश्चक्रे काकुत्स्थो जयभूषणम् । उपसीतं च गत्वैवं चिन्तयामास चेतसि ॥ ८९ ॥
असौ शिरीषमृद्वङ्गी राजपुत्री मम प्रिया । सीता शीतातपक्लेशं कथं नाम सहिष्यते ॥ ९० ॥
इमं संयमभारं च सर्वभारातिशायिनम् । उद्वक्ष्यति कथं नाम हृदयेनापि दुर्वहम् ॥ ९१ ॥
यद्वा सतीव्रतं यस्या न भङ्क्तु रावणोऽप्यलम् । सा निर्व्यूढप्रतिज्ञैव भाविनी संयमेऽपि हि ॥ ९२ ॥
एवं विमृश्य वैदेहीं ववन्दे लक्ष्मणाग्रजः । लक्ष्मणोऽन्ये च राजानः श्रद्धानिर्धौतचेतसः ॥ ९३ ॥
इतश्च सपरीवारो रामोऽयोध्यां ययौ पुनः । सीताकृतान्तवदनौ तेपाते च परं तपः ॥ ९४ ॥
तपस्तप्त्वा ब्रह्मलोके कृतान्तवदनो ययौ । सीतापि षष्टिं वर्षाणि विदधे विविधं तपः ॥ ९५ ॥
त्रयस्त्रिंशदहोरात्रीं कृत्वान्तेऽनशनं मृता । द्वाविंशत्यर्णवायुः सोऽच्युतेन्द्रः समजायत ॥ ९६ ॥
इतश्च शैले वैताढ्येऽभूत् काञ्चनपुरे पुरे । नामतः कनकरथो विद्याधरपतिस्तदा ॥ ९७ ॥
मन्दाकिनीचन्द्रमुख्योः कन्ययोः स स्वयंवरे । सपुत्रान् भूपतीन्रामलक्ष्मणादीनथाह्वयत् ॥ ९८ ॥
तत्रासीनेषु भूपेषु मन्दाकिन्या निजेच्छया । अनङ्गलवणो वव्रे चन्द्रमुख्याङ्कुशः पुनः ॥ ९९ ॥
लक्ष्मणस्य सुतास्तत्र क्रोधादुत्तस्थिरे युधि । सार्धे शते द्वे अपि ते युगपच्छ्रीधरादयः ॥ १०० ॥
श्रुत्वा सन्नह्यतस्तांश्च प्रोचाते लवणाङ्कुशौ । को नाम योत्स्यतेऽमीभिरवध्या भ्रातरः खलु ॥ १०१ ॥
यथा न तातयोर्भेदः कोऽपि ज्येष्ठकनिष्ठयोः । तत्पुत्राणां तथास्माकममीषामपि मास्तु सः ॥ १०२ ॥

---

१ स भेद ।

एव तयोर्वचो ज्ञात्वा चरेभ्यो लक्ष्मणात्मजाः । दीक्षापक्षा निनिन्दु स्व तु कर्मारम्भसम्मुखम् ॥ १०३ ॥
सद्य संवेगमापन्ना पितरावनुमान्य ते । महाबलमुने पादपद्मान्ते जगृहुर्व्रतम् ॥ १०४ ॥
जातोद्वाहौ तदानीं तावनङ्गलवणाङ्कुशौ । सहैव सीरिशार्ङ्गिभ्यामयोध्यामीयतु पुरीम् ॥ १०५ ॥
इतश्च स्वपुरे हर्म्यमूर्ध्नि भामण्डल स्थित । कदाचिदत्र मनसा चिन्तयामास शुद्धधी ॥ १०६ ॥
श्रेणिद्वय वशीकृत्यास्खलन् सर्वत्र लीलया । विहृत्यान्ते चाचदीक्षो भवेय पूर्णवाञ्छित ॥ १०७ ॥
एव चिन्तयतस्तस्य मूर्ध्नि विद्युत्पपात खात् । स मृत्वा देवकुरुषु जज्ञे युगलधर्मिषु ॥ १०८ ॥
इतश्च हनुमांश्चैत्रे चैत्यवन्दनहेतवे । मेरु गतो निवृत्तोऽस्तमयन्त सूर्यमैक्षत ॥ १०९ ॥
एव च दध्यावुदयो यथा ह्यस्त तथा खलु । निदर्शनमय सूर्यो धिग्धिक् सर्वमशाश्वतम् ॥ ११० ॥
एव विचिन्त्य स्वपुरे गत्वा राज्य सुते न्यधात् । धर्मरत्नाचार्यपार्श्वे प्रव्रज्यामाददे स्वयम् ॥ १११ ॥
तमनुप्राव्रजन्राज्ञा सार्धसप्तशतानि च । आर्यालक्ष्मीवतीपार्श्वेऽभुवस्तत्पत्न्यश्च दीक्षिता ॥ ११२ ॥
ध्यानानलेन निर्दह्य क्रमात् कर्माणि मूलत । श्रीशैल प्राप्य शैलेशीं जगाम पदमव्ययम् ॥ ११३ ॥
हनूमन्त प्रव्रजित ज्ञात्वा दध्यौ रघूद्वह । हित्वा भोगसुख कथ दीक्षा किमयमाददे ॥ ११४ ॥
तां रामचिन्तामवधेर्ज्ञात्वा सौधर्मवासव । ऊचे सभ्येसभमहो कर्मणा निपमा गति ॥ ११५ ॥
रामश्चरमदेहोऽपि यद्धर्म हसति स्वयम् । सौख्य विषयसम्भूत प्रत्युतैष प्रशसति ॥ ११६ ॥
अथवा ज्ञातमनयो रामलक्ष्मणयोर्मिथ । स्नेहो गाढतर कोऽपि भवानिर्वेदकारणम् ॥ ११७ ॥

---

१ विस्मय प्राप्ता । २ भवति गच्छति समयन्तम् । ३ हसति ।

द्वौ देवौ कौतुकात्तत्र तयोः स्नेहं परीक्षितुम् । उपेयतुरयोध्यायां लक्ष्मणस्य निकेतने ॥ ११८ ॥
दर्शयामासतुः सद्यो मायया लक्ष्मणस्य तौ । सर्वमन्तःपुरस्त्रैणमाक्रन्दत् करुणस्वरम् ॥ ११९ ॥
हा पद्म पद्मनयन बन्धुपद्मदिवाकर । अकाण्डमृत्युः कोऽयं ते विश्वस्यापि भयङ्करः ॥ १२० ॥
एवं च रुदतीर्वक्षांस्याघ्नाना मुक्तकुन्तलाः । अन्तःपुरवधूः प्रेक्ष्य विषण्णो लक्ष्मणोऽवदत् ॥ १२१ ॥
ममासौ किं मृतो भ्राता जीवितस्यापि जीवितम् । पिशुनेन कृतान्तेन किं कृतं छलघातिना ॥ १२२ ॥
एवं च भाषमाणस्य वचसा सह जीवितम् । सौमित्रेर्निर्ययौ कर्मविपाको दुरतिक्रमः ॥ १२३ ॥
स्वर्णस्तम्भमवष्टभ्य स्थितः सिंहासनेऽपि हि । सोऽथ प्रसारिताक्षोऽस्थाल्लेप्यमूर्तिरिवाक्रियः ॥ १२४ ॥
परासुं लक्ष्मणं दृष्ट्वा विषण्णौ तौ सुरावपि । मिथो जजल्पतुरहो किमावाभ्यामिदं कृतम् ॥ १२५ ॥
विश्वाधारः पुमानेष किमावाभ्यां हहा हतः । इति स्वं बहु निन्दन्तौ स्वकल्पं जग्मतुः पुनः ॥ १२६ ॥
परासुं लक्ष्मणं प्रेक्ष्य तत्र चान्तःपुरस्त्रियः । चक्रन्दुः सपरीवारा विलुलत्कुन्तलालिकाः ॥ १२७ ॥
तदाक्रन्दितमाकर्ण्य तत्र रामः समाययौ । उवाच च किमारब्धमविज्ञायाप्यमङ्गलम् ॥ १२८ ॥
जीवन्नेवैष तिष्ठामि जीवत्येष च मेऽनुजः । कोऽप्ययं बाधते व्याधिर्भेषजं तत्प्रतिक्रिया ॥ १२९ ॥
इत्युक्त्वाजुहवद्रामो वैद्याञ्ज्योतिषिकानपि । प्रयोगं मन्त्रतन्त्राणां कारयामास चासकृत् ॥ १३० ॥
वैफल्ये मन्त्रतन्त्राणां मूर्छां प्राप रघूद्वहः । कथञ्चिल्लब्धसञ्ज्ञः सन् विललापोच्चकैःस्वरम् ॥ १३१ ॥
ते विभीषणसुग्रीवशत्रुघ्नाद्या उदश्रवः । विमुक्तकण्ठं रुरुदुर्दूताः स्म इति भाषिणः ॥ १३२ ॥

---

१ बन्धव एव पद्मानि तेषु दिवाकर सूर्यस्तत्सम्बुद्धौ । २ मृतम् । ३ विलुलन् कुन्तलालि केशपङ्क्तिर्यासां ता ।

कौशल्याद्या मातरश्च स्नुषाभिः सह साश्रवः । भूयो भूयोऽपि मूर्छन्त्यथाक्रन्दन् करुणस्वरम् ॥ १३३ ॥
प्रतिभागं प्रतिगृहं प्रत्यहं क्रन्दनात्तदा । शोकाद्वैक्लव्यमभूत् सर्वं रसान्तरमलिम्लुचम् ॥ १३४ ॥
नत्वाथ राममूचतुः कुमारौ लवणाङ्कुशौ । भवाद्व्याधिभीतौ स्वः कनीयस्तातमृत्युना ॥ १३५ ॥
अकस्मादापतत्येष मृत्युः सर्वस्य वर्ष्मणि । तत्परं परलोकाय स्थातव्यं मूलतोऽपि हि ॥ १३६ ॥
अनुमन्यस्व दीक्षायै न नो युक्तमतः परम् । कनीयस्तातमुक्तानां गृहे स्थातुं मनागपि ॥ १३७ ॥
इत्युक्त्वा राममानम्यामृतघोषमुने [illegible] । उभौ जगृहतुर्दीक्षां क्रमाच्च शिवमीयतुः ॥ १३८ ॥
रामो भ्रातृविपत्त्या च वियोगेन च पुत्रयोः । मुमूर्छ भूयो भूयोऽपि मोहादेवं जगाद च ॥ १३९ ॥
मयापमानतः कापि किञ्चिद्वत्सेऽद्य बान्धव । कस्मादकस्मादालम्बि भवता मौनमीदृशम् ॥ १४० ॥
त्वयि ह्येष स्थिते भ्रातः पुरश्यामपि योज्झितः । प्रविशन्ति च्छिद्रमते नृणां भूतशतानि हि ॥ १४१ ॥
उन्मत्तमार्गं चैव राममेत्य कथञ्चन । बिभीषणाद्याः सम्भूय जगदुर्गद्गदस्वरम् ॥ ॥१४२ ॥
धीरेष्वपि हि धीरस्त्वं वीरो वीरेष्विव प्रभो । लज्जाकरमिदं तस्माद्धैर्यं मुञ्च सम्प्रति ॥ १४३ ॥
लोकप्रसिद्धमधुना सौमित्रेरौर्ध्वदेहिकम् । अङ्गसंस्कारपूर्वं हि कर्तव्यं समयोचितम् ॥ १४४ ॥
इत्युक्त्या कुपितो रामस्तान्वे विधुताधरः । जीवत्येष हि मे भ्राता किमिदं वो वच खलाः ॥ १४५ ॥
सर्वेषां च सबन्धूनां ज्वलने दाहपूर्वकम् । मृतकार्यं विधातव्यं दीर्घायुष्मान्ममानुजः ॥ १४६ ॥
भ्रातर्भ्रातर्ब्रूहि शीघ्रं वत्स लक्ष्मण नन्वयम् । दुर्जनानां प्रवेशोऽस्ति किं खेदयसि मा चिरम् ॥ १४७ ॥
यद्वा खलसमक्षं न वत्स कोपस्तवोचितः । इत्युक्त्वांसे तमारोप्य ययावन्यत्र राघवः ॥ १४८ ॥

नीत्वा स्नानगृहे रामः कदाप्यस्नपयत् स्वयम् । ततश्च तं स्वहस्तेन विलिलेप विलेपनैः ॥ १४९ ॥
आनाय्य दिव्यभोज्यानि पूरयित्वा च भाजनम् । कदाचित्तस्य पुरतो मुमोच स्वयमेव च ॥ १५० ॥
कदाप्यारोपयदङ्के निजेऽचुम्बच्छिरो मुहुः । कदाप्यस्वापयत्तल्पे वाससाच्छादिते स्वयम् ॥ १५१ ॥
कदापि स्वयमाभाष्य स्वयं स्म प्रतिभाषते । स्वयं संवाहकीभूय ममर्द च कदाचन ॥ १५२ ॥
इत्यादि चेष्टा विकलाः स्नेहोन्मत्तस्य कुर्वतः । ययौ रामस्य षण्मासी विस्मृताशेषकर्मणः ॥ १५३ ॥
श्रुत्वा च तं तथोन्मत्तमिन्द्रजित्सुन्दसूनवः । खेचरा विद्विषोऽन्येऽपि रामस्येयुर्जिघांसवः ॥ १५४ ॥
अयोध्यां रुरुधुः सैन्यैरुन्मत्तरघुपुङ्गवाम् । सुप्तसिंहां गिरिगुहामिव व्याधाश्छलौजसः ॥ १५५ ॥
रामोऽपि लक्ष्मणं स्वाङ्के निधायास्फालयद्धनुः । वज्रावर्तमकालेऽपि संवर्तस्य प्रवर्तकम् ॥ १५६ ॥
तदा चासनकम्पेन माहेन्द्रानाकिभिः समम् । जटायुराययौ रामं द्रष्टात्प्राग्जन्मसौहृदात् ॥ १५७ ॥
अद्यापि नाकिनो रामगृह्या इति विभाषिणः । इन्द्रजित्प्रमुखास्ते दुद्रुवुः खेचरा द्रुतम् ॥ १५८ ॥
अत्र देवसखा रामो हन्ता नोऽग्रेविभीषणः । इति भीता लज्जिताश्च ते संवेगं परं दधुः ॥ १५९ ॥
ते मुनेरतिवेगस्य पार्श्वे संवेगधारिणः । उपेत्य दीक्षां जगृहुर्गृहवासपराङ्मुखाः ॥ १६० ॥
ततो जटायुरमरो बोधार्थं राघवस्य हि । पुरःस्थांय तरुं शुष्कं सिषेच मुहुरम्भसा ॥ १६१ ॥
क्षिप्त्वा करीषं दृषदि रोपयामास पद्मिनीम् । बीजान्युवापाकालेऽपि मृतोक्ष्णा लाङ्गलेन च ॥ १६२ ॥

१ अग्रे पुरः विभीषणो यस्य इति रामविशेषणम् । २ पुरः स्थितवान् । ३ शुष्कगोमयराशिं । ४ मृतवृषभेण ।

यन्त्रे च वालुकां क्षिप्त्वा तैलार्थं पर्यपीलयत् । इत्याद्यसाधकं रामस्यान्यदप्युदभावयत् ॥ १६३ ॥
रामस्तमूचे किं शुष्कं तरुं सिञ्चसि भो मुधा । फलं दूरेऽस्तु किं नाम मुसलं क्वापि पुष्यति ॥ १६४ ॥
शिलायां पद्मिनीखण्डमारोपयसि मुग्ध किम् । किं वा वपसि बीजानि निर्जलेऽपि मृतैर्वृषैः ॥ १६५ ॥
न वालुकाभ्यस्तैलं स्यात् किं पीलयसि मूर्ख भो । अनुपायविदस्तेऽसौ प्रयासः सर्वथा वृथा ॥ १६६ ॥
स्मित्वा जटायुरप्यूचे यद्यस्यदपि वेत्सि भो । अज्ञानचिह्नं मृतकं स्कन्धे वहसि तर्हि किम् ॥ १६७ ॥
सौमित्रिवपुरालिङ्ग्य रामस्तं प्रत्यभाषत । अमङ्गलं भाषसे किं त्यज दृष्टिपथं मम ॥ १६८ ॥
एवं जटायुषि रामे भाषमाणेऽवधेर्विदन् । कृतान्तवदनो देवस्तद्बोधार्थं समाययौ ॥ १६९ ॥
स्कन्धे स्त्रीमृतकं न्यस्योपरामं विचचार सः । रामोऽप्यूचे किमु मत्तोऽस्यवं स्त्रीमृतकं वहन् ॥ १७० ॥
प्रत्युवाच कृतान्तोऽपि भाषसे किममङ्गलम् । ममेषा प्रेयसी त्वं तु किं शवं वहसि स्वयम् ॥ १७१ ॥
मृतां जानासि मे भार्यामभ्रमाना मया यदि । निजस्कन्धस्थितं किं न मृतकं वेत्सि बुद्धिमन् ॥ १७२ ॥
तेनैव दर्शितैस्तैर्हेतुभिर्जातचेतनः । रामो दध्यौ किं नु सत्यं न जीवति ममानुजः ॥ १७३ ॥
एतस्तौ स्वप्रबोधाय रामाय स्वमशंसताम् । देवौ जटायुकृतान्तौ निजस्थानं च जग्मतुः ॥ १७४ ॥
मृतकार्यं ततो रामश्चकार स्वानुजन्मनः । दीक्षां प्रपित्सुः शत्रुघ्नं राज्यादानाय चादिशत् ॥ १७५ ॥
अहमप्यनुयास्यामि भवत्पादानिति ब्रुवन् । प्रत्यादिदेश शत्रुघ्नो राज्यं भवपराङ्मुखः ॥ १७६ ॥
ततो लवणपुत्रस्यानङ्गदेवस्य राघवः । ददौ राज्यं स्वयं तुर्यपुमार्थाय सत्वरः ॥ १७७ ॥

१ निर्विवेक । २ तुर्य चतुर्थो मोक्षस्तस्मै ।

मुनिसुव्रतवंशस्य सुव्रतस्य महामुनेः । अर्हद्दासश्रावकेणोपदिष्टस्यान्तिकं ययौ ॥ १७८ ॥
तत्र शत्रुघ्नसुग्रीवबिभीषणविराधितैः । अन्यैश्च राजभिः सार्धं रामो व्रतमुपाददे ॥ १७९ ॥
रामभद्रे तु निष्क्रान्ते निष्क्रान्तान्यथ षोडश । महीभुजां सहस्राणि भववैराग्ययोगतः ॥ १८० ॥
सप्तत्रिंशत्सहस्राणि प्राव्रजन् वरयोषितः । श्रीमत्याः श्रमणायाश्च ता-बभूवुः परिच्छदे ॥ १८१ ॥
षष्ठ्यब्दी गुरुपादान्ते विविधाभिग्रहोद्यतः । तेपे तपांसि रामर्षिः पूर्वाङ्गश्रुतभावितः ॥ १८२ ॥
अथ रामः प्रपन्नैकविहारो गुर्वनुज्ञया । एकाकी प्रययौ निर्भीरटव्यां गिरिकन्दरे ॥ १८३ ॥
तस्यामेव विभावर्यां तत्र ध्यानजुषः सतः । उदभूदवधिज्ञानं रामभद्रमहामुनेः ॥ १८४ ॥
पश्यंश्चतुर्दशरज्जुप्रमं विश्वं करस्थवत् । देवाभ्यां हतमज्ञासीद्भ्रातं च नरकेऽनुजम् ॥ १८५ ॥
इदं च चिन्तयामास रामभट्टारकस्तदा । धनदत्ताभिधोऽभूवमहं पूर्वत्र जन्मनि ॥ १८६ ॥
वसुदत्तोऽभिधानेन लक्ष्मणो भून्ममानुजः । तत्राप्यकृतकृत्योऽसावेवमेव व्यपद्यत ॥ १८७ ॥
भवेऽस्मिन्मे वसुदत्तजीवोऽभूल्लक्ष्मणोऽनुजः । तत्राप्यमुष्य कौमारे सुधागाच्छरदां शतम् ॥ १८८ ॥
शतत्रयं मण्डलित्वे चत्वारिंशत्तु दिग्जये । वर्षैकादशसहस्राः सार्धा राज्येऽब्दषष्टि च ॥ १८९ ॥
द्वादशाब्दसहस्राणि सर्वमायुरिति क्रमात् । ययावविरतस्यैव केवलं नरकावहम् ॥ १९० ॥
न दोषो देवयोः कोऽपि मायावधकयोस्तयोः । विपाकः कर्मणामीदृग्भवत्येव शरीरिणः ॥ १९१ ॥
एवं विचिन्तयन्रामः कर्मच्छेदेऽधिकोद्यतः । तप समाधिनिष्ठोऽभून्निर्मम सन् विशेषत ॥ १९२ ॥

अथ षष्ठोपवासान्ते प्राविशत् पारणाय स । पुरमानन्दवर्द्धिनगरे स्यन्दनस्थले ॥ १९३ ॥
निशाकरमिवावन्यामायान्त नयनोत्सवम् । सम्मुखीना समापेतु पौरा प्रचुरसम्मदा ॥ १९४ ॥
पौर्यं स्वस्वगृहद्वारि भिक्षादानाय तस्य च । विचित्रभोज्यपूर्णानि भाजनानि पुरो दधु ॥ १९५ ॥
पौराणां हर्षतस्तत्र तुमुलोऽभूत्तथा यथा । स्तम्भान् बभञ्जु करिणो ययुश्चोत्कर्णता हया ॥ १९६ ॥
रामोऽप्युज्झितधर्माभिरतत्वात् पौरढौकितम् । आहार नाग्रहीत्तेभ्योऽभ्यागात्तु नृपवेश्मनि ॥ १९७ ॥
तत्र चोज्झितधर्मेणाहारेण प्रत्यलम्भयत् । प्रतिनन्दिनृपो राम विधिवद्बुभुजे च स ॥ १९८ ॥
अमरैर्विदधे तत्र वसुधारादिपञ्चकम् । भगवान् रामभद्रोऽपि तदरण्य ययौ पुन ॥ १९९ ॥
मा भूद्भूय पुरक्षोभ सङ्कटो मे च मा स्म भूत् । इति बुद्ध्या शुद्धबुद्धि सोऽभिग्रहमिम व्यधात् ॥२००॥
अरण्येऽत्र चेद्भिक्षाकाल भिक्षोपलप्स्यते । तदानीं पारम कार्यमस्माभिर्यथा पुन ॥ २०१ ॥
इत्यभिग्रहभृद्रामो निरपेक्षो वपुष्यपि । स समाधिमापन्नोऽत्तस्थे प्रतिमाधर ॥ २०२ ॥
तत्रान्येद्युर्विपर्यस्तशिक्षेणाश्वेन वेगिना । आकृष्यमाण आयासीत्प्रतिनन्दी नरेश्वर ॥ २०३ ॥
पङ्के नन्दनपुण्याख्यसरसोऽश्वो ममज्ज स । समापपातानुपदं सैन्य च प्रतिनन्दिन ॥ २०४ ॥
पश्चात्तमश्वमुत्तार्य शिबिर न्यस्य तत्र च । स्नात्वा च स नृपश्चक्रे भोजन सपरिच्छद ॥ २०५ ॥
तदा च पारितध्यानो रामर्षि पारणेच्छया । तत्राजगाम भगवानभ्युत्तस्थौ च त नृप ॥ २०६ ॥
अवशिष्टैर्भक्तपानै स राम प्रत्यलम्भयत् । कृतपारणके तस्मिन् रत्नवृष्टिरभूद्दिवि ॥ २०७ ॥

---

१ प्रचुर सम्मदो हर्षो येषा ते । २ उज्झितो धर्मोऽथ य आहारस्तस्मिन्नभिरतत्वात् । ३ विपरीतशिक्षेण ।

रामर्षिदेशना चक्रे प्रतिनन्द्यादयोऽथ ते । बभूवुः श्रावकाः सम्यग्द्वादशव्रतधारिणः ॥ २०८ ॥
ततः प्रभृति तत्रैव रामस्तस्थौ चिरं वने । देवीभिर्वनवासाभिः पूज्यमानो महातपाः ॥ २०९ ॥
मासेनैकेन मासाभ्यां मासैस्त्रिचतुरैरपि । रामर्षिः पारयामास भवपारयियासया ॥ २१० ॥
पर्यङ्कस्थः कदाप्यस्थात् प्रलम्बितभुजोऽन्यदा । कदाप्युत्कटिकासीन ऊर्ध्वबाहुः कदाचन ॥ २११ ॥
अङ्गुष्ठस्थोऽन्यदा तस्थौ पार्ष्णिस्थश्च कदापि हि । इति नानासनो ध्यानी स तेपे दुस्तपं तपः ॥२१२॥
विहरन्नन्यदा रामो ययौ कोटिशिलां शिलाम् । विद्याधरसमक्षं या लक्ष्मणेन पुरोद्दधे ॥ २१३ ॥
तामध्यासीच्छिलां रामः क्षपकश्रेणिमाश्रितः । शुक्लध्यानान्तरं भेजे निशायां प्रतिमाधरः ॥ २१४ ॥
तदा चावधिना ज्ञात्वा सीतेन्द्रः पर्यचिन्तयत् । अयं भवी भवति चेद्रामो युज्येऽमुना पुनः ॥ २१५ ॥
अनुकूलैरुपसर्गैः क्षपकश्रेणिवर्तिनः । उपद्रवं करोम्यस्य यथा स्यान्मत्सुहृत्सुरः ॥ २१६ ॥
इति सञ्चिन्त्य सीतेन्द्र उपरामं समापयौ । विचक्रे च महोद्यानं वसन्तर्तुविभूषितम् ॥ २१७ ॥
चुकूज कोकिलकुलं ववौ च मलयानिलः । रणन्तो भ्रमरा भ्रेमुः कुसुमामोदमोदिनः ॥ २१८ ॥
चूतचम्पककङ्कोल्लिपाटला बकुलादयः । दधुः सद्योऽपि पुष्पाणि नव्यास्त्राणि मनोभुवः ॥ २१९ ॥
सीतारूपं च सीतेन्द्रो विकृत्य स्त्रीजनानपि । ऊचे प्रिय प्रिया तेऽस्मि सीतेह समुपस्थिता ॥ २२० ॥
रक्तं त्यक्त्वा तदानीं त्वामहं पण्डितमानिनी । प्राव्रजं नाथ पश्चाच्च पश्चात्तापो ममाभवत्[1] ॥ २२१ ॥
विद्याधरकुमारीभिराभिरद्याहमर्थिता । प्रसीद नाथे स्वं नाथं रामं नाशीकुरुष्व नः ॥ २२२ ॥

१ ससारी ।

त्वं च मुञ्च परिव्रज्यां रामस्य महिषी भव । त्वदादेशात्तस्य पत्न्यो भविष्यामोऽधुना वयम् ॥ २२३ ॥
अमूर्विद्याधरवधूस्तदुद्वह रघूद्वह । आश्वत्सह त्वया रंस्ये ता सहस्रावमाननाम् ॥ २२४ ॥
इति ब्रुवाणे सीतेन्द्रे चक्रिरस्य खेचरस्त्रिय । सङ्गीतं विविधं चक्रु स्मरोज्जीवनभेषजम् ॥ २२५ ॥
सीतेन्द्रवचनैस्तैश्च तेन सङ्गीतकेन च । वसन्तेन च नाक्षुभ्यद्रामभद्रमहामुनि ॥ २२६ ॥
माघस्य शुक्लद्वादश्यां तदा यामेऽन्तिमे निशि । उदपद्यत रामर्षे केवलज्ञानमुज्ज्वलम् ॥ २२७ ॥
रामस्य केवलज्ञानमहिमानं समक्तिकः । सीतेन्द्रो नाकिनोऽन्ये च विदधुर्विधिपूर्वकम् ॥ २२८ ॥
दिव्यस्वर्णाम्बुजासीनो दिव्यचामरराजित । दिव्यातपत्रधात्रामो विदधे धर्मदेशनाम् ॥ २२९ ॥
देशनान्ते क्षमयित्वा सीतेन्द्रः प्रणम्य च । सौमित्रिरावणगतिं पृष्टो रामर्षिरभ्यधात् ॥ २३० ॥
अधुना नरके तुर्ये सशम्बूको दशानन । लक्ष्मणश्चास्ति गतय कर्माधीना हि देहिनाम् ॥ २३१ ॥
नरकायुश्चानुभूय तौ दशाननलक्ष्मणौ । नगर्यां विजयावत्यां प्राग्विदेहविभूषणे ॥ २३२ ॥
सुनन्दरोहिणीपुत्रौ जिनदाससुदर्शनौ । भविष्यतोऽर्हद्धर्मं च सततं पालयिष्यत ॥ २३३ ॥
॥ युग्मम् ॥
ततो विपद्य सौधर्मे त्रिदशौ तौ भविष्यत । च्युत्वा च विजयापुर्यां श्रावकौ भाविनौ पुन ॥ २३४ ॥
ततोऽपि मृत्वा पुरुषौ हरिवर्षे भविष्यत । तौ चावसानमासाद्य देवलोकं गमिष्यत ॥ २३५ ॥
च्युत्वा च विजयापुर्यां जयकान्तजयप्रभौ । कुमारवार्तराड्लक्ष्म्योस्तौ कुमारौ भविष्यत ॥ २३६ ॥

१ विक्रियया समुत्पन्नाः ।

जिनोक्तं संयमं तत्र पालयित्वा विपद्य च । गीर्वाणौ लान्तके कल्पे भविष्यत उभावपि ॥ २३७ ॥
तदा त्वमच्युताच्च्युत्वा क्षेत्रे चात्रैव भारते । सर्वरत्नमतिर्नाम चक्रवर्ती भविष्यसि ॥ २३८ ॥
च्युत्वा तौ भाविनाविन्द्रायुधमेघरथाभिधौ । सुतौ ते त्वं परिव्रज्य वैजयन्ते व्रजिष्यसि ॥ २३९ ॥
इन्द्रायुधः स तु जीवो रावणस्य भवत्रयम् । शुभं भ्रान्त्वा तीर्थकरगोत्रकर्मार्जयिष्यति ॥ २४० ॥
ततो रावणजीवः स तीर्थनाथो भविष्यति । वैजयन्ताच्च्युतस्तस्य भावी गणधरो भवान् ॥ २४१ ॥
ततस्तौ यास्यतो मोक्षं स जीवो लक्ष्मणस्य तु । भवत्सुतुर्मेघरथो व्रजिष्यति गतीः शुभाः ॥ २४२ ॥
ततश्च पुष्करद्वीपे प्राग्विदेहविभूषणे । नगर्यां रत्नचित्रायां चक्रवर्ती भविष्यति ॥ २४३ ॥
चक्रवर्तिश्रियं भुक्त्वा परिव्रज्य क्रमेण च । स तीर्थनाथो भविता निर्वाणं च प्रपत्स्यते ॥ २४४ ॥
एवमाकर्ण्य सीतेन्द्रो रामभद्रं प्रणम्य च । ययौ प्राक्स्नेहवशतो दुःखभाग्यत्र लक्ष्मणः ॥ २४५ ॥
सिंहादिरूपैर्विकृतैस्तत्र शम्बूकरावणौ । लक्ष्मणेन समं क्रुद्धौ युध्यमानौ ददर्श सः ॥ २४६ ॥
नैवं वो युध्यमानानां दुःखं भावीति वादिनः । परमाधार्मिकाः क्रुद्धा अग्निकुण्डेषु तान्यधुः ॥ २४७ ॥
दह्यमानास्त्रयोऽप्युच्चैरटन्तो गलिताङ्गकाः । ततः कृष्ट्वा तप्ततैलकुम्भ्यां निदधिरे बलात् ॥ २४८ ॥
विलीनदेहास्तत्रापि भ्राष्ट्रे चिक्षिपिरे चिरम् । तडत्तडिति शब्देन स्फुटन्तो दुद्रुवुः पुनः ॥ २४९ ॥
इत्यादि दुःख तेषां स प्रेक्ष्योवाचासुरानिति । किं रे न वित्थ यदमी आसन् पुरुषपुङ्गवाः ॥ २५० ॥
अपयातासुरा दूरं मुञ्चतैतान्महात्मनः । निषिध्येत्यसुरानूचे सोऽथ शम्बूकरावणौ ॥ २५१ ॥

युवाभ्यां तत्कृत पूर्वं येनेम नरक गतौ । पूर्ववैर किमद्यापि दृष्टोदर्क न मुञ्चितम् ॥ २५२ ॥
तावप्येव निषिध्येन्द्र सौमित्रे रावणस्य च । रामकेवलिनाख्यातमाचख्यौ बोधहेतवे ॥ २५३ ॥
तावप्यथ शमापन्नौ साध्वकार्षी कृपानिधे । भवच्छुभोपदेशेन जाता नो दु खविस्मृति ॥ २५४ ॥
प्राग्जन्मोपार्जितैस्तैस्तै क्रूरै कर्मभिरर्पित । दीर्घो नौ नरकावासस्तत्तु स कोऽप्यनेष्यति ॥ २५५ ॥
इत्युक्त्वा करुणापूर्ण सीतेन्द्र प्रत्यवोचत । नेष्यामि सुरलोके त्रीनपि वो नरकादित ॥ २५६ ॥
इत्युक्त्वा पाणिनोद्धर्तु स तांस्त्रीनपि ते पुन । विशीर्य कणश पेतु पाणे पारदवत्क्षणात् ॥ २५७ ॥
भूयोऽपि मिलिताङ्गांस्तानुद्दध्रे स यथा यथा । पुनरेव पतन्ति स्म पूर्ववत्ते तथा तथा ॥ २५८ ॥
तत सीतेन्द्रमूचुस्ते भवत्यधिकमेव न । दु खमुद्ध्रियमाणानां तन्मुञ्चास्मान् दिव व्रज ॥ २५९ ॥
तान्मुक्त्वैवाथ सीतेन्द्रो राम नत्वा ततोऽगमत् । शाश्वतार्हच्चैत्ययात्राकृते नन्दीश्वरादिषु ॥ २६० ॥
गच्छन्नपी देवकुरुप्रदेशे निरीक्ष्य भामण्डलराजजीवम् ।
प्राक्स्नेहयोगात् प्रतिबोध्य सम्यग् निज स सीतेन्द्र इयाय कल्पम् ॥ २६१ ॥
उत्पन्ने सति केवले स शरदां पञ्चाधिकां विंशतिं, मेदिन्यां सविकाम् प्रबोध्य भगवाञ्छ्रीरामभट्टारक ।
आयुश्च व्यतिलङ्घ्य पञ्चदश चाब्दाना सहस्रान् कृती । शैलेशीं प्रतिपद्य शाश्वतसुखानन्द प्रपदे पदम् ॥२६२॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि
रामनिर्वाणगमनो नाम दशम सर्ग समाप्त ।

---

१ दृष्ट उदर्क परिणामो यस्य तत् ।

श्रीरामलक्ष्मणरावणचरित्रसंवलित श्री जैनरामायण
समाप्तिमगात् ।

## ॥ अथ एकादशः सर्गः ॥

### श्रीनमिनाथचरित्रम् ।

नमो नमिजिनेन्द्राय सुरेन्द्रमहिताङ्घ्रये । कर्मद्रुमगजेन्द्राय धरित्रीकल्पशाखिने ॥ १ ॥
तस्यैव कीर्तयिष्यामश्चरित्रमतिपावनम् । विश्वस्याप्युपकाराय परलोकेहलोकयोः ॥ २ ॥
जम्बूद्वीपेऽत्रैव प्रत्यग्विदेहे भरताभिधे । विजये सम्पदां कोशः कौशाम्बी नामतोऽस्ति पूः ॥ ३ ॥
आखण्डल इवाखण्डशासनस्तत्र चाभवत् । सिद्धार्थीकृतसर्वार्थी सिद्धार्थो नाम पार्थिवः ॥ ४ ॥
गाम्भीर्यधैर्यमौदार्यं वीर्यं बुद्धिरथापरे । अन्योन्यस्पर्द्धयेवासन् सर्वे तस्याद्भुता गुणाः ॥ ५ ॥
सम्पद्विस्तारमापन्ना तस्यात्युन्नतिशालिनः । अभूद्विश्वोपकाराय छाया मार्गतरोरिव ॥ ६ ॥
धर्मो मनसि तस्यैको नित्यमत्यन्तनिर्मले । निवासं कारयामास राजहंस इवाम्बुजे ॥ ७ ॥
भवाद्विरक्तः सोऽन्येद्युरुत्सृज्य तृणवच्छ्रियम् । सुदर्शनमुनेः पादमूले दीक्षामुपाददे ॥ ८ ॥
आर्जयत्स्थानकैः कैश्चित्तीर्थकृन्नाम कर्म सः । सम्यग्व्रत पालयित्वा मृत्वागादपराजिते ॥ ९ ॥
इतश्च जम्बूद्वीपेऽस्मिन् क्षेत्रे चात्रैव भारते । नगरी मिथिलेत्यस्ति धर्माशिथिलनागरा ॥ १० ॥
प्राकारवलयो रत्नस्वर्णहर्म्याद्रिगर्भितः । तस्यामाभाति सर्वस्वसमुद्गक इवाचनैः ॥ ११ ॥

---

१ सुरेन्द्रैण पूजितावङ्घ्री चरणौ यस्य तस्मै । २ असिद्धार्थान् सिद्धार्थीकृता, सर्वेऽर्थिनो याचका येन सः । ३ स्वार्थेऽयन्तस्य रूपम् । ४ धर्मेऽशिथिला अनलसा नागराः पौरा यस्या सा ।

परितो रत्नखचितास्तस्यामुद्यानदीर्घिका । तद्द्रुमपरागेण यान्ति पङ्किरता यदि ॥ १२ ॥
तस्या सर्वारिविजयी विजयो नाम पार्थिव । बभूव भूवासक्ता दधान परया श्रिया ॥ १३ ॥
भ्रूभङ्गमप्यकृत्वेवासन्नाद्यापि वरूथिनीम् । स लीलया पराजिग्ये परान् यून इव स्मर ॥ १४ ॥
स सागर इवागाधोऽभिरामश्चन्द्रमा इव । समीरण इवौजस्वी तजस्वी भानुमानिव ॥ १५ ॥
वप्रेति नामतस्तस्य सर्वान्त पुरमण्डनम् । मण्डनीभूतशीलाभूद्भूरिवाङ्गवती प्रिया ॥ १६ ॥
गङ्गेव स्वच्छगम्भीरा जगतोऽपि हि पावनी । ज्योत्स्नेव नयनानन्ददायिनी सा व्यराजत ॥ १७ ॥
ये ये वस्तुनशीलाया निरीक्ष्यन्त गुणा किल । अवदातैरभूत्तैस्ते लीणा सैका निदर्शनम् ॥ १८ ॥
इतश्च सिद्धार्थजीवो विमाने सोऽपराजिते । स्वमायु पू यामास त्रयस्त्रिंशार्णवोपमम् ॥ १९ ॥
च्युत्वाश्वयुक्पूर्णिमायामश्विन्यामवातरत् । वप्राद्या स उदर कृतोद्योतो जगत्त्रये ॥ २० ॥
तया च यामिनीशेषे वप्रादेवी चतुर्दश । उदैक्षत महास्वप्नास्तीर्थकृज्जन्मसूचकान् ॥ २१ ॥
पितुर्भनोरथ इव गर्भ ऽवव्रधे क्रमात् । अतिलावण्यजननो जनया सुरलक्ष्य स ॥ २२ ॥
पूर्णे काले नभ कृष्णाष्टम्यां मे चाश्वदवते । नीलोत्पलाङ्क स्वर्णाभ देवी सुतमसूत सा ॥ २३ ॥
अथैत्यासनकम्पेन षट्पञ्चाशद्दिक्कुमार्यो । तदैव सूतिकर्माणि विधिवद्दिक्कुमारिका ॥ २४ ॥
शक्रो निन्ये मेरुमूर्धन्यच्युताद्याश्च वासवा । चतु षष्टिरपि तीर्थाम्भोभिरस्नपयन् प्रभुम् ॥ २५ ॥

---

१ अङ्गवती मूर्तिमती भू पृथ्वीव । २ आश्विनस्य पूर्णिमायाम् । ३ अश्विनीनक्षत्र । ४ श्रावणकृष्णा-
ष्टम्याम् । ५ अश्वो देवता यस्य तस्मिन्नश्विनीनक्षत्र इत्यर्थ ।

स्नपनान्ते जगन्नाथमभ्यर्च्य कुसुमादिभिः । रचितारात्रिकः शक्र इति स्तोतुं प्रचक्रमे ॥ २६ ॥
व्याहर्ता मोक्षमार्गस्य संहर्ता सर्वकर्मणाम् । प्रहर्ता च कषायाणां जय त्वं परमेश्वर ॥ २७ ॥
कुमतस्यापनेतारं नेतारं जगतामपि । सद्बोधस्य प्रणेतारं त्वां नमामि जगद्गुरो ॥ २८ ॥
विश्वैश्वर्यस्याधिकर्त्रा न्यक्कर्त्रा विश्वपाप्मनाम् । अविकर्त्रोपकर्त्रा च सनाथं भवता जगत् ॥ २९ ॥
धर्मबीजसमुद्धर्त्रे धर्त्रेऽतिशयसम्पदाम् । श्रुतस्कन्धविधात्रे च भगवन् भवते नमः ॥ ३० ॥
प्रत्यादेष्टुः कुमार्गाणामादेष्टुर्मुक्तिवर्त्मनः । धर्मः समभविता त्वत्त उपदेष्टुरतः परम् ॥ ३१ ॥
नव्यतीर्थप्रतिष्ठातुरनुष्ठातुस्तपःश्रियाम् । प्रभो जगदधिष्ठातुर्भवतः किङ्करा वयम् ॥ ३२ ॥
औदार्यपर्वगेस्य विश्वस्याभयदातरि । त्वयि त्रैलोक्यशरणे प्रपन्नशरणोऽस्म्यहम् ॥ ३३ ॥
अस्मिन् भवे यथाभूस्त्वं प्रभुर्मम जगत्पते । भवान्तरेष्वपि तथा भूया नान्यो मनोरथः ॥ ३४ ॥
इति स्तुत्वा जगन्नाथं पुनरादाय वासवः । मुमोच वप्रास्वामिन्याः पार्श्वे नीत्वा यथास्थिति ॥ ३५ ॥
राजापि विजयः प्रातः सूनोर्जन्ममहोत्सवम् । चकार कारामोक्षादिपूर्वकं परया मुदा ॥ ३६ ॥
प्रभौ गर्भस्थिते रुद्वा पुर्यासीन्मिथिलारिभिः । अधिप्रासादमारोहद्वप्रादेवी च तत्क्षणम् ॥ ३७ ॥
वप्रां प्रेक्ष्य च तद्गर्भानुभावाद्विजयं नृपम् । यन्नेमुर्द्विष इत्यस्य नमिरित्यभिधा ददे ॥ ३८ ॥
पाल्यमानोऽथ धात्रीभिः शक्रादिष्टाभिरन्वहम् । नमिनाथः प्रववृधे निशानाथ इवापरः ॥ ३९ ॥

---

१ कथयिता-वक्ता । २ दूर कर्तारम् नाशकमितियावत् । ३ नायकम् । ४ कर्तारम् । ५ अविकारिणा । ६ औ समन्तादातरि । ७ प्रपन्नं शरणं येन स । ८ स्वामी जातोऽसि ।

विमुक्तशैशव स्वामी धनूंषि दश पञ्च च। उच्छ्रितात्र पर्यणैषीत् कन्यां पितृनिदेशतः ॥ ४० ॥
सार्धवर्षसहस्रे द्वे व्यतिक्रम्य स जन्मतः । दश पित्रादद राज्य कर्मभोगफल विदन् ॥ ४१ ॥
पञ्चस्वब्दसहस्रेषु राज्याद्यातेष्वथ प्रभुम् । तीर्थं प्रवर्तयेत्यूचुरेत्य लोकान्तिकामराः ॥ ४२ ॥
निवेश्य सुप्रभ नाम पुत्र राज्ये नमिप्रभुः । प्रददौ वार्षिकं दानं धनैर्जृम्भकाहृतैः ॥ ४३ ॥
सुप्रभाद्यैर्नृपैः शक्रादिभिर्देवैर्वृतः प्रभुः । देवकुर्वां शिबिकयाऽऽरुह्य सहस्राम्रवणं ययौ ॥ ४४ ॥
कदम्बकुसुमनासक्तमधुव्रतकदम्बकम् । मल्लिकाकुसुमोच्चायव्याकुलोद्यानपालकम् ॥ ४५ ॥
विगलत्पाटलापुष्पपाटलीभूतभूतलम् । कामुकस्तरीभूतशिरीषकुसुमोत्करम् ॥ ४६ ॥
वहमानारघट्टोत्थे मौक्तिकच्छीकरोत्करे । ग्रीष्मेऽपि दर्शिताब्दर्तु तद्वनं प्राविशत्प्रभुः ॥ ४७ ॥
॥ त्रिभिर्विशेषकम् ॥
आषाढकृष्णनवम्यामश्विन्या चरमेऽहनि । समं राज्ञां सहस्रेण षष्ठेन प्राव्रजत् प्रभुः ॥ ४८ ॥
तदोत्पन्नमनोज्ञानो द्वितीयेऽहनि पारणम् । स क्षैरेय्या वीरपुरे चक्रे दत्तनृपौकसि ॥ ४९ ॥
चक्रे च विबुधैस्तत्र वसुधारादि दत्तगृहे । पीठं च व्यहृतान्यत्र नवमासांस्ततः प्रभुः ॥ ५० ॥
ततः सहस्राम्रवणं दीक्षास्थानं तदा ययौ । षष्ठेन बकुलस्याधस्तस्थौ च प्रतिमाधरः ॥ ५१ ॥

१ कदम्बपुष्पाणां चुम्बने आसक्तो मधुव्रतानां भ्रमराणां कदम्बकः समूहो यस्मिंस्तत् । २ मल्लिकापुष्पाणामवचये व्याकुला उद्यानपालका यस्मिंस्तत् । ३ कामुकजनस्यासनं शय्या वा । ४ अरघट्टो जलयन्त्रम् । ५ दर्शितोऽब्दानां मेघानामृतुर्येन तत् ।

मार्गस्य शुक्लैकादश्यामश्विन्यां मे नमिप्रभोः । घातिकर्मक्षयादाविरभूत् केवलमुज्ज्वलम् ॥ ५२ ॥
सद्योऽपि देवाः समवसरणं विदधुस्ततः । अशीत्यग्रशवधनुस्तुङ्गाशोकद्रुभूषितम् ॥ ५३ ॥
तत्र प्रदक्षिणीकृत्याशोकं तीर्थाय चानमत् । न्यषदत्प्राङ्मुखः पूर्वरत्नसिंहासने प्रभुः ॥ ५४ ॥
रत्नसिंहासनस्थानि प्रतिबिम्बानि च प्रभोः । विचक्रुर्व्यन्तरसुरा दिक्ष्वन्यास्वपि तत्क्षणम् ॥ ५५ ॥
अन्तस्थे यथास्थानं श्रीमान् सङ्घश्चतुर्विधः । भगवन्तं नमस्कृत्य सौधर्मेन्द्रोऽस्तवीदिति ॥ ५६ ॥
केवलज्ञानसज्ज्ञेन चक्षुषा वीक्षसेऽखिलम् । जगदेतत्तदेवं ते त्रिनेत्राय नमः प्रभो ॥ ५७ ॥
पञ्चत्रिंशदतिशयवचसे परमेष्ठिने । चतुस्त्रिंशदतिशयान्विताय भवते नमः ॥ ५८ ॥
मालवकैशिकीमुख्यग्रामरागमनोरमाम् । सर्वभाषानुगां नाथ तव वाचमुपास्महे ॥ ५९ ॥
त्वद्दर्शनात् प्रणश्यन्ति कर्मपाशाः शरीरिणाम् । तार्क्ष्यावलोकनान्नागपाशा इव दृढा अपि ॥ ६० ॥
त्वद्दर्शनादेहभाजोऽधिरोहन्ति शनैः शनैः । निश्रेणिमिव मोक्षस्य गुणस्थानकमालिकाम् ॥ ६१ ॥
स्मृतः श्रुतः स्तुतो ध्यातो दृष्टः स्पृष्टो नमस्कृतः । येन तेन प्रकारेण स्वामिन् भवसि शर्मणे ॥ ६२ ॥
स्वामिन् पुण्यानुबन्धीनि पूर्वपुण्यानि नः खलु । यस्त्वं दृग्गोचरं नीतोऽसाधारणगतिप्रदः ॥ ६३ ॥
यथा तथा ममास्त्वन्यत् स्वर्गराज्यादि सर्वतः । मा जातु हृदयाद्यान्तु नाथ त्वद्देशनागिरः ॥ ६४ ॥
इति स्वामिगुणस्तोत्रं विधीय विरते हरौ । जगत्त्रयगुरुधर्मदेशनामकरोदिमाम् ॥ ६५ ॥
असारः खलु संसारः चलदूर्मिचलं धनम् । विद्युद्विलाससदृशं शरीरमपि नश्वरम् ॥ ६६ ॥

१ पञ्चत्रिंशदतिशया यस्मिन्नेतादृशं वचो यस्य तस्मै ।

अनास्थां सर्वथा तेषु तद्विधाय विचक्षण । यतेत यतिधर्माय मुमुक्षुर्मोक्षवर्त्मने ॥ ६७ ॥
अशक्तस्तद्विधाने चेद्दाकाङ्क्षी तथापि हि । सम्यक्श्रावकधर्मायोत्तिष्ठेत श्राद्धात्मने ॥ ६८ ॥
नयेन्नित्यमहोरात्र श्रावकस्त्वप्रमद्वर । धर्म्यामिरिति चेष्टाभिर्मनोवाक्कायनर्मभि ॥ ६९ ॥
ब्राह्मे मुहूर्त उत्तिष्ठेत् परमेष्ठिस्तुतिं पठन् । किंधर्मा किंकुलश्चास्मि किंव्रतोऽस्मीति च स्मरन् ॥ ७० ॥
शुचि पुष्पादिभिस्तोत्रैर्देवमभ्यर्च्य वेश्मनि । प्रत्याख्यानं यथाशक्ति कृत्वा देवगृहं व्रजेत् ॥ ७१ ॥
प्रविश्य विधिना तत्र त्रि प्रदक्षिणयेज्जिनम् । पुष्पादिभिस्तमभ्यर्च्य स्तवनैरुत्तमै स्तुयात् ॥ ७२ ॥
ततो गुरूणामभ्यर्णे प्रतिपत्तिपुर सरम् । विदधीत विशुद्धात्मा प्रत्याख्यानप्रकाशनम् ॥ ७३ ॥
अभ्युत्थानं तदालोकेऽभियानं च तदागमे । शिरस्यञ्जलिसंश्लेष स्वयमासनढौकनम् ॥ ७४ ॥
आसनाभिग्रहो भक्त्या वन्दना पर्युपासनम् । तद्यानेऽनुगमश्चेति प्रतिपत्तिरियं गुरो ॥ ७५ ॥
तत प्रतिनिवृत्त सन् स्थानं गत्वा यथोचितम् । सुधीर्धर्माविरोधेन विदधीतार्थचिन्तनम् ॥ ७६ ॥
ततो मध्याह्निकीं पूजां कुर्यात् कृत्वाथ भोजनम् । तद्विद्भि सह शास्त्रार्थरहस्यानि विचारयेत् ॥ ७७ ॥
ततश्च सन्ध्यासमये कृत्वा देवार्चनं पुन । कृतावश्यककर्मा च कुर्यात् स्वाध्यायमुत्तमम् ॥ ७८ ॥
न्याय्ये काले ततो देवगुरुस्मृतिपवित्रित । निद्रामल्पामुपासीत प्रायेणाब्रह्मवर्जक ॥ ७९ ॥
निद्राछेदे योषिदङ्गसतत्त्व परिचिन्तयेत् । महात्मनां मुनीनां हि तन्निवृत्तिं परामृशन् ॥ ८० ॥

१ संसारादिषु । २ चारित्राकाङ्क्षी । ३ को धर्मो यस्य स तथा । ४ आमिष नैवेद्यम् । ५ नायकस्य सतत्त्वं याथार्थ्यं वक्ष्यमाणमशुचित्वादि । ६ विचारयन् ।

यकृच्छकृन्मलश्लेष्ममज्जास्थिपरिपूरिताः । स्नायुस्यूता बही रम्याः स्त्रियश्चर्मप्रसेविकाः ॥ ८१ ॥
बहिरन्तर्विपर्यासः स्त्रीशरीरस्य चेद्भवेत् । तस्यैव कामुकः कुर्याद्गृध्रगोमायुगोपनम् ॥ ८२ ॥
स्त्रीशस्त्रेणापि चेत्कामो जगदेतज्जिगीषति । तुच्छपिच्छमयं शस्त्रं किं नाददे स मूढधीः ॥ ८३ ॥
संकल्पयोनिनानेन हहा विश्वं विडम्बितम् । तदुत्खनामि सङ्कल्पं मूलमस्येति चिन्तयेत् ॥ ८४ ॥
॥ चतुर्भिः कलापकम् ॥
यो यः स्याद्बाधको दोषस्तस्य तस्य प्रतिक्रियाम् । चिन्तयेद्दोषमुक्तेषु प्रमोदं यतिषु व्रजन् ॥ ८५ ॥
दुःस्थां भवस्थितिं स्थेम्ना सर्वजीवेषु चिन्तयन् । निसर्गसुखसर्गं तेष्वपवर्गं विमार्गयेत् ॥ ८६ ॥
जिनो देवः कृपा धर्मो गुरवो यत्र साधवः । श्रावकत्वाय कस्तस्मै न श्लाघेताविमूढधीः ॥ ८७ ॥
जिनधर्मविनिर्मुक्तो मा भूवं चक्रवर्त्यपि । स्यां चेटोऽपि दरिद्रोऽपि जिनधर्माधिवासितः ॥ ८८ ॥
त्यक्तसङ्गो जीर्णवासा मलक्लिन्नकलेवरः । भजन्माधुकरीं वृत्तिं मुनिचर्यां कदाश्रये ॥ ८९ ॥
त्यजन् दुःशीलसंसर्गं गुरुपादरजः स्पृशन् । कदाहं योगमभ्यस्यन् प्रभवेयं भवच्छिदे ॥ ९० ॥
महानिशायां प्रकृतकायोत्सर्गं पुराद्बहिः । स्तम्भवत् स्कन्धकषणं वृषाः कुर्युः कदा मयि ॥ ९१ ॥
वने पद्मासनासीनं क्रोडस्थितमृगार्भकम् । कदा घ्रास्यन्ति वक्त्रे मां जरन्तो मृगयूथपाः ॥ ९२ ॥
शत्रौ मित्रे तृणे स्त्रैणे स्वर्णेऽश्मनि मणौ मृदि । मोक्षे भवे भविष्यामि निर्विशेषमतिः कदा ॥ ९३ ॥

---

१ चर्मगोणी । २ गृध्रशृगालाभ्यां रक्षणम् । ३ कामेन । ४ तत्तस्मात् अस्य कामस्य मूलं सङ्कल्पं अहं दुत्खनामि उन्मूलनं करोमि । ५ स्थैर्येण । ६ निसर्गसुखस्य सर्ग उत्पत्तिर्यस्मिन्नेतादृशमपवर्गं मोक्षम् । ७ दासः । ८ प्रकर्षेण कृतः कायोत्सर्गो येन तस्मिन्मयि ।

अधिरोढुं गुणश्रेणीं निःश्रेणीं मुक्तिवेश्मनः । परानन्दलताकन्दान् कुर्यादिति मनोरथान् ॥ ९४ ॥

॥ सप्तभिः कुलकम् ॥

इत्यहोरात्रिकीं चर्यामप्रमत्तः समाचरन् । यथावदुक्तवृत्तस्थो गृहस्थोऽपि विशुध्यति ॥ ९५ ॥

श्रुत्वेमां देशनां भर्तुर्बहवः प्राव्रजञ्जनाः । कुम्भाद्यो गणधरास्तत्र सप्तदशाभवन् ॥ ९६ ॥

देशनान्ते जगद्भर्तुः कुम्भो व्यधित देशनाम् । तद्देशनान्ते नत्वेशं शक्राद्याः स्वं पदं ययुः ॥ ९७ ॥

तत्तीर्थजन्मा भृकुटिर्यक्षश्चतुर्मुखः । स्वर्णवर्णो वृषरथश्चतुर्भिर्दक्षिणैर्भुजैः ॥ ९८ ॥

धृतमातुलिङ्गशक्तिमुद्गराभयदैर्युतः । वामैः पुनर्नकुलकपरशुवज्राक्षसूत्रिभिः ॥ ९९ ॥

॥ युग्मम् ॥

तथैव देवी गान्धारी श्यामाङ्गी हंसवाहना । दोर्भ्यां वरदखड्गिभ्यां दक्षिणाभ्यां विराजिता ॥ १०० ॥

वामाभ्यां बीजपूरिभ्यां बाहुभ्यामुपशोभिता । अभूतामित्युभे भर्तुर्नमेः शासनदेवते ॥ १०१ ॥

ताभ्यामुपात्तसान्निध्यो विजहार वसुन्धराम् । सार्धं वर्षसहस्रं स नवमासोनितं विभुः ॥ १०२ ॥

प्रभोरभूवन् साधूनां सहस्राण्यथ विंशतिः । व्रतिनीनां पुनरेकचत्वारिंशत्सहस्र्यपि ॥ १०३ ॥

चतुर्दशपूर्वभृतां सार्धं शतचतुष्टयम् । अवधिज्ञानभाजां तु सहस्रं षट् शताधिकम् ॥ १०४ ॥

पञ्चाढ्या द्वादशशती मनःपर्ययशालिनाम् । शतानि षोडश पुनः केवलज्ञानधारिणाम् ॥ १०५ ॥

जातवैक्रियलब्धीनां सहस्राः पञ्च सप्तधा । तथा सहस्रमेकं तु वादलब्ध्युपशोभिनाम् ॥ १०६ ॥

---

१ परः श्रेष्ठो यः आनन्दः स एव लता तस्याः कन्दा मूलभूतास्तान् । २ आचरणाम् । ३ बीजपूरमस्ति अनयोरिति ।

श्रावकाणां लक्षमेकं सहस्राणि च सप्ततिः । श्राविकाणां त्रिलक्ष्यष्टचत्वारिंशत्सहस्रयुक् ॥ १०७ ॥
मोक्षकालमथ ज्ञात्वा सम्मेताद्रिमगात्प्रभुः । समं मुनिसहस्रेणानशनं प्रत्यपादि च ॥ १०८ ॥
मासान्ते वैशाखकृष्णदशम्यामश्विनीयुजि । समं तैर्मुनिभिः स्वामी प्रपेदे पदमव्ययम् ॥ १०९ ॥
कौमारेऽब्दानां सहस्रौ सार्धौ राज्ये तु पञ्च ते । व्रते सार्धा सहस्रौ चेत्ययुतायुर्नमिप्रभुः ॥ ११० ॥
मुनिसुव्रतनिर्वाणान्निर्वाणं श्रीनमिप्रभोः । वर्षाणां षट्सु लक्षेषु व्यतिक्रान्तेष्वजायत ॥ १११ ॥

निर्वाणकल्याणमुपेत्य तत्र गीर्वाणनाथास्त्रिदशैः समेताः ।
शरीरसंस्कारपुरःसरं श्रीनमेरकार्षुः सपरिच्छदस्य ॥ ११२ ॥

॥ इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि नमिनाथचरितवर्णनो नामैकादशः सर्गः ।

## ॥ अथ द्वादश सर्ग ॥

### श्रीहरिषेणचक्रिचरितम्

इतश्च विरहत्येव नमिनाम्नि जिनेश्वरे । हरिषेणोऽभवच्चक्री चरित तस्य कीर्त्यते ॥ १ ॥
इहैव भरतेऽनन्ततीर्थे नरपुरे पुरे । नराभिरामो नृपतिरभिरामो नरेष्वभूत् ॥ २ ॥
क्रमेण च भवोद्विग्न परिव्रज्या प्रपद्य स । सनत्कुमारकल्पेऽभूदमर परमर्द्धिक ॥ ३ ॥
इतश्च पञ्चालदेशाकल्प स्व कल्पमृद्धिभि । परीकम्प्य काम्पील्यमित्यस्ति प्रवर पुरम् ॥ ४ ॥
तस्मिन्महाहरिर्नाम राजा हरिरिवौजसा । इक्ष्वाकुवंशतिलको बभूव भुवि विश्रुत ॥ ५ ॥
तस्याभूत्महिषी नाम्ना मेरा स्मेराम्बुजानना । शीलालङ्करणा रूपेणालङ्कृतमहीतला ॥ ६ ॥
नराभिरामजीवोऽपि तस्या कुक्षाववातरत् । चतुर्दशमहास्वप्नाख्यातचक्रधरर्द्धिक ॥ ७ ॥
सा कालेऽसूत हेमाभं हरिषेणाभिध सुतम् । पञ्चदशधनूत्तुङ्गो यो युवराज्येऽभ्यषेचि स ॥ ८ ॥
पैतृक शासतस्तस्य राज्य भ्राज्यभुजौजस । अन्येद्युरस्त्रशालायां चक्ररत्नमजायत ॥ ९ ॥
पुरोधोवर्धकिगृहिसेनानीप्रभृतीन्यपि । तस्य त्रयोदशान्यानि क्रमाद्रत्नानि जज्ञिरे ॥ १० ॥
चक्रमार्गानुग प्राच्या गत्वा तीर्थे स मागधे । मागधतीर्थकुमार दिग्जयादावसाधयत् ॥ ११ ॥
दक्षिणस्यामथोपेत्य दक्षिणाम्भोधिवर्तिनम् । वरदामपति देव वशीचक्रे महाभुज ॥ १२ ॥

---

१ पञ्चालदेशस्यालङ्कारो भूषणम् । २ स्वर्गतुल्यम् ३ स्वर्णकान्तिम् ।

उपेत्य दिशि वारुण्यां प्रभासाधिपतिं सुरम् । सोऽसाधयदखण्डौजा बिडौजा इव भूस्थितः ॥ १३ ॥
महानदीमेत्य सिन्धुं दिक्सिन्धुरपराक्रमः । क्रमाद्दक्षंवदीचक्रे चक्रभृद्भ्रमोऽथ सः ॥ १४ ॥
ततोऽभिसृत्य वैताढ्य वैताढ्याद्रिकुमारकम् । विधिना साधयामास दिक्साधनपण्डितः ॥ १५ ॥
कृतमालामरं चाथ कृती स्वयमसाधयत् । पश्चाच्च सेनापतिना पश्चिमं सिन्धुनिष्कुटम् ॥ १६ ॥
वामान्यकुम्भविन्यस्तमणिरत्नेन कुम्भिना । सेनान्युद्घाटितद्वारां तमिस्रां प्रविवेश सः ॥ १७ ॥
काकिणीरत्नलिखितमण्डलोद्योतितान्तराम् । पद्ययोत्तीर्य चोन्मग्नानिमग्ने तामलङ्घयत् ॥ १८ ॥
स्वयमुद्घाटितोदीच्यद्वारा तस्या विनिर्ययौ । आपातसङ्ख्यान्म्लेच्छांस्तान् स्वच्छन्दानजयच्च सः ॥ १९ ॥
अज्ञापयच्च सेनान्या सिन्धोः पश्चिमनिष्कुटम् । गत्वा च क्षुद्रहिमवत्कुमारमजयत् स्वयम् ॥ २० ॥
काकिण्या ऋषभकूटे स्वनामालिख्य सञ्चलन् । जगाम साधयद्गाङ्गं सेनान्या पूर्वनिष्कुटम् ॥ २१ ॥
विद्याधरैर्दत्तदण्ड उभयश्रेणिवर्तिभिः । स्वयं चासाधयामास नाट्यमालमथापरम् ॥ २२ ॥
सेनान्योद्घाटितां खण्डप्रपातां प्राविशद्गुहाम् । चक्रानुगश्चक्रवर्ती निर्जगाम च पूर्ववत् ॥ २३ ॥
सेनान्या साधयामास गाङ्गं प्राचीननिष्कुटम् । स्वयमावासयामास गङ्गायां वसुधाधिपः ॥ २४ ॥
नवापि निधयो गङ्गामुखमागधवासिनः । सिध्यन्ति स्म स्वयं तस्योत्कृष्टपुण्यानुभावतः ॥ २५ ॥
सम्पूर्णचक्रवर्तिश्रीर्जितषट्खण्डभारतः । अथाजगाम काम्पील्यपुरं स श्रीपुरन्दरः ॥ २६ ॥
तस्य चक्रित्वाभिषेकश्चक्रे देवैर्नरैरपि । महोत्सवः पुरे चासीद्यावद्द्वादश वत्सरान् ॥ २७ ॥

---

१ सिन्धुरो गजः । २ वामान्य दक्षिणम् । ३ पद्यया सेतुना ।

भूपाले पाल्यमानाङ्गो भरते सकलेऽपि ह । धर्माविबाधया भोगान् बुभुजे स महाभुज ॥ २८ ॥
भवाद्विरक्त सोऽन्येद्यू राज्यमुत्सृज्य लीलया । उपादत्त परिव्रज्या शिवव्रज्योत्सवोत्सुक ॥ २९ ॥
हरिषेणस्य कौमारे सपादाब्दशतत्रयी । मण्डलित्वेऽपि तावन्त्य सार्धमब्दशत जये ॥ ३० ॥
चक्रभृत्त्वे पुनरष्टौ सहस्राणि शताष्टकम् । पश्चाच्च व्रतकाले पुन सार्ध शतत्रयम् ॥ ३१ ॥
वर्षायुतायु परिपाल्य सम्यक् तीव्र व्रत घातितघातिकर्मा ।
उत्केवलज्ञान इयाय नित्यसुख पद तद्धरिषेणचक्री ॥ ३२ ॥

इत्याचार्यश्रीहेमचन्द्रविरचिते त्रिषष्टिशलाकापुरुषचरिते महाकाव्ये सप्तमे पर्वणि हरिषेणचक्रवर्ति-चरितवर्णनो नाम द्वादश सर्ग समाप्त ।



१ शिव मोक्ष प्रति व्रज्या गमन तस्योत्सव उत्सुक ।

## ॥ अथ त्रयोदशः सर्गः ॥

( जयचक्रिचरित्रम् )

नमेर्भगवतस्तीर्थे समुत्पन्नस्य चक्रिणः । जयस्य जेयिनः पुण्यं चरित्रमिदमुच्यते ॥ १ ॥
अस्यैव जम्बूद्वीपस्यैरवते श्रीपुरे पुरे । वसुन्धरापतिरभूत् ख्यातो नाम्ना वसुन्धरः ॥ २ ॥
स प्रेयस्याः पद्मवत्या मृत्युनोद्विग्नमानसः । राज्ये निवेशयामास तनयं विनयन्धरम् ॥ ३ ॥
मनोहरवने पार्श्वे वरधर्ममहामुनेः । तत्त्वं श्रुत्वा प्रतिबुद्धः परिव्रज्यामुपाददे ॥ ४ ॥
चिरकालं परिव्रज्यां स यथावदपालयत् । विपद्य सप्तमे कल्पे देवभूयमियाय च ॥ ५ ॥
इतश्चास्ति राजगृहं पुरं मगधमण्डनम् । श्रियामेकं कुलगृहं स्वःपुर्या इव सोदरम् ॥ ६ ॥
इक्ष्वाकुवंशप्रभवः प्रभवो न्यायवर्त्मनः । विजयी विजयो नाम तत्राभूत्पृथिवीपतिः ॥ ७ ॥
वप्राभिधाना तस्याभून्महिषी शीलशालिनी । भूगता कापि देवीव रूपलावण्यसम्पदा ॥ ८ ॥
काले गच्छति तस्याश्च कुक्षाववततार सः । वसुन्धरमहीपालजीवः शुक्रात् परिच्युतः ॥ ९ ॥
जज्ञे तस्यां जयो नाम धनुर्द्वादशकोन्नतिः । स तु चतुर्दशस्वप्नसूचितः काञ्चनच्छविः ॥ १० ॥
पित्रा राज्येऽभिषिक्तश्च तस्यायुधगृहेऽन्यदा । चक्ररत्नं समुत्पेदे प्रथमं चक्रिलक्षणम् ॥ ११ ॥
तथा च्छत्रं मणिर्दण्डो निस्त्रिंशश्चर्म काकिणी । जज्ञिरे तस्य सप्तैवं रत्नान्येकेन्द्रियाणि च ॥ १२ ॥

---

१ जयनशीलस्य । २ मनोहरनाम्नि वने ३ चक्रेण सह सप्त ।

पुरोधोगृहिहस्त्यश्वसेनानीवर्धकिस्त्रिय । पञ्चेन्द्रियाणि सप्तैव तस्य रत्नानि जज्ञिरे ॥ १३ ॥
दिग्यात्रार्थं सोऽनुचक्र पूर्वं पूर्वाम्बिमभ्यगात् । मागधतीर्थकुमार तत्र चक्रे वशवदम् ॥ १४ ॥
ततो निवृत्य याम्याब्धौ वरदामपतिं सुरम् । सोऽसाधयन्न देवोऽपि मुव्यल चक्रवर्तिने ॥ १५ ॥
गत्वा च पश्चिमाम्भोधौ प्रभासाधीश्वर सुरम् । चिक्षेनैकेन बाणेन वशीचक्रे स लीलया ॥ १६ ॥
ततश्चासाधयत् सिन्धु सिन्धुराज इवापर । वैताढ्याद्रिकुमार च सुर सुरवरोपम ॥ १७ ॥
सोऽथ स्वय वशीचक्रे कृतमालामिध सुरम् । सेनान्यातु महानद्या सिन्धो पश्चिमनिष्कुटम् ॥ १८ ॥
यथाविधि तमिस्रा स प्रविश्य च निरीय च । आपातमाम्न किरातान्निर्जिगाय महाभुज ॥ १९ ॥
पश्चिम निष्कुट सिन्धो सेनान्या स विजित्य च । वशीचकार हिमवत्कुमार देवविक्रम ॥ २० ॥
काकिण्या ऋषभकूटे स लिखित्वात्मनोऽभिधाम् । सेनान्या निष्कुट गाङ्ग प्राचीन चलितोऽजयत् ॥ २१ ॥
साधयित्वा स्वय गङ्गा जित्वा विद्याधरेश्वरान् । खण्डप्रपाताद्वारस्थ नाट्यमालमसाधयत् ॥ २२ ॥
खण्डप्रपातागुहया वैताढ्यान्निर्जगाम स । सेनान्यासाधयच्चाशु गाङ्ग प्राचीननिष्कुटम् ॥ २३ ॥
आवासितस्य गङ्गाया तेऽथ गङ्गामुखस्थिता । नवापि निधयस्तस्य नैसर्पाद्या वशेऽभवन् ॥ २४ ॥
सोऽथ सम्पूर्णचक्रिश्रीराजगाम निज पुरम् । चक्रे चक्रित्वाभिषेकश्चास्य देवैर्नृपैरपि ॥ २५ ॥
षट् खण्डां बुभुजे पृथ्वीमखण्डितपराक्रम । क्रमेण च परिव्रज्या भवोद्विग्न स आददे ॥ २६ ॥
एव जयस्य कौमारे वत्सराणां शतत्रयम् । तदेव मण्डलित्वेऽब्दशत [illegible] ककुभां जये ॥ २७ ॥

१ निर्गत्य ।

# शुद्धिपत्रकम् ।

| पृष्ठ | पङ्क्ति | अशुद्ध | शुद्ध | पृष्ठ | पङ्क्ति | अशुद्धः | शुद्धः |
|---|---|---|---|---|---|---|---|
| ४।१ | ८ | पुया | पुर्यां | १२।२ | ३ | जलाञ्जलि | जलाञ्जलि |
| ४।२ | ११ | रतु | रन्तु | १२।२ | १२ | मवद्रली | मवद्गली |
| ५।२ | २ | प | पत्रं | १३।२ | ७ | श्वशुय | श्वशुर्यं |
| ५।२ | ४ | साघ | साधं | १५।२ | २ | मामूढ्वा | मामूढ्वा |
| ६।१ | ७ | प्रगे | [3]प्रगे | १६।२ | ५ | नदम्भोज | तदम्भोजे |
| ६।२ | १४ | सतमे | सप्तमे | १७।२ | १४ | शिरश्छेदा | शिरश्छेदा |
| ८।१ | ४ | रव | स्व | १९।२ | १६ | चाण्डाल | चाण्डालैः |
| ८।१ | १२ | मनाप्तेन् | मनाप्तेन | २०।१ | १४ | पाश्व | पार्श्वे |
| ८।२ | ३ | चक्र | चक्रु | २०।१ | १४ | राजपुत्री | राजपुत्रो |
| ९।२ | ८ | किञ्चद | किञ्चिद् | २२।२ | ६ | बृहद्ध्वजो | बृहद्ध्वजो |
| ९।२ | ६ | कुमारणां | कुमाराणा | २३।२ | १३ | सव | सर्व |
| १०।१ | १ | ययौ | ययौं | २३।२ | १४ | यक्ष | यक्षे |
| १०।१ | ८ | स्तस्पितृणा | स्तत्पितृणा | २४।१ | १३ | [2]गुर्व्यंभूत् | [2]गुर्व्यंभूत् |
| ११।१ | १५ | ताञ्जलिः | ताञ्जलि | २५।२ | ५ | खडग | खड्ग |
| ११।२ | २ | किञ्चन्तो | किञ्चिन्तो | २६।१ | १ | विध्यया | विधया |
| १२।२ | ६ | हरितरत्न | हस्तिरत्न | २६।१ | १२ | अक्ष | अथ |
| ११।२ | १० | भुवनालङ्कार | भुवनालङ्कार | २६।१ | १६ | शरीरेणव | शरीरेणेव |
| १२।१ | १२ | क्रुद्दन | क्रुद्धेन | २६।२ | १२ | कर्णग्रन्तो | कर्णाग्रजो |
| १२।१ | १५ | सवगुणा | सर्वगुणा | २६।२ | १३ | सहस्रारा | सहस्रारो |

| पृष्ठ | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|
| २७।२ | ६ | मत्तारऽपि | मत्तोऽपि |
| २८।२ | १३ | सैनिकरेभि | सैनिकैरेभि |
| २८।२ | १६ | न्योऽन्य | न्योऽन्य |
| २८।१ | २ | मिथोघाते | मिथोघातै |
| २८।२ | ५ | पितृभिक्षा | पुत्रभिक्षा |
| २९।१ | १६ | विद्यत् | विद्युत् |
| २९।२ | ५ | वर | वर |
| ३०।१ | १३ | प्रापस्त्य | प्रापस्त्य |
| ३०।१ | १९ | त | तु |
| ३ ।१ | १७ | त्वच्याद्वारा | त्वच्चद्वार |
| ३१।२ | १३ | त | ता |
| ३३।८ | १३ | श्वश्रा | श्वश्वा |
| ३३।१ | १३ | चिह्न | चिह्न |
| ३४।१ | १ | श्वश्वा | श्वश्वा |
| ३४।२ | २ | श्वश्रु से दहितणा | श्वशुसे दुहितृणां |
| ३५।१ | १० | न्येषदयाने | चेशुद्याने |
| ३६।१ | ४ | ककचशरद्यान | ककचाङ्कुरद्यान |
| ३७।२ | १० | प्रियमित्र घत | प्रियमित्र घने |
| ३८।२ | १५ | श्राम्यम् | श्राम्यन् |
| ३८।२ | ४ | दैवाज्ञात्वा | दैवात् ज्ञात्वा |
| ३८।१ | ७ | साग्र | साग्रे |
| ३ ।१ | १२ | अस्तुतद्वचनो | श्रुतद्वचनो |
| ३८।२ | ७ | भोक्णा | भोक्तृणा |
| ३९।१ | ८ | हनुमघतः | हनुमद्युत |
| ३९।१ | १६ | स्थयपवतः | स्थैर्यपर्वत |
| ३९।२ | १४ | पुत्रेयशवद्म् | पुत्रैवैशयद्म् |
| ४१।२ | १८ | पञ्चविंशति | पञ्चविंशतिः |
| ४१।१ | १६ | स्वपरमाथरूपा | स्वपरमार्थरूपा |
| ४१।२ | १३ | पत्य | पत्यौ |
| ४२।१ | ७ | गुर्व्यत्य | गुर्वीत्य |
| ४२।२ | ५ | तिद्धीचक्र | विद्धीचक्रे |
| ४२।२ | ५ | ककथा | कर्कशा |
| ४२।२ | ५ | कुवन्ती | कुर्वन्ती |
| ४२।२ | ९ | हिरण्यगभ | हिरण्यगर्भ |
| ४२।२ | १७ | उत्पद्म केवलज्ञान | उत्पन्न केवलज्ञान |
| ४४।१ | १० | वृथरथोऽपर | वृथरथोऽपरः |
| ४४।१ | १५ | प्रदराजः | प्रमदराजः |
| ४४।२ | ७ | ककेयी | कैकेयी |
| ४४।२ | १२ | भुञ्जानो | भुञ्जानो |
| ४४।१ | १२ | तजथाख्यान | तथैवाख्यान |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ४६।२ | १२ | म्भोद्वण | म्भोद्वर्ण | ७१।२ | ८ | विजहु· | विजह्· |
| ४९।२ | १२ | कथञ्चिदाजान | कथञ्चिद्राजान | ७१।२ | १५ | वशागह्वरे | वशगह्वरे |
| ५०।२ | १ | वाह्योभ | वाह्योष्ठ | ७२।१ | १३ | द्रुत | द्रुत |
| ५०।१ | ४ | भिरेनेकश | भिरनेकश | ७३।२ | १५ | पक्षा | पक्षौ |
| ५४।२ | १२ | प्रवेयका | ग्रैवेयका | ७६।१ | १६ | तीक्ष्ण | तीक्ष्णं |
| ५७।१ | ९ | नगयशोढा | नगर्यशोध्या | ७६।२ | २ | हरणमिद् | हरणमिद |
| ५७।१ | १३ | ककेयी | कैकेयी | ७७।१ | १५ | मत्तभ | मत्तेभ |
| ५९।१ | ९ | कि | किं | ७७।२ | १३ | धिग्मा | धिग्मां |
| ५९।२ | १५ | सवकृपा | सर्वकृपा | ७७२ | १६ | छेको | छेकौ |
| ६३।१ | १३ | क्रर | क्रूर | ८१।१ | ४ | पर | परं |
| ६३।२ | १२ | यथकालं | यथाकाल | ८१।१ | १० | कम्पयस्तं | कम्पयस्त |
| ६४।२ | १२ | अत्वा | श्रुत्वा | ८१।२ | ५ | द्विपष्वद्रिषु | द्विपेष्वद्रिषु |
| ६५।२ | २ | भ्रात्रेऽमुषम | भ्रात्रऽमुर्षं | ८२।२ | २ | श्रयते | श्रूयते |
| ६६।१ | १२ | स्रीसंन्य | स्रीसैन्य | ८२।२ | ७ | पद्मय | पद्ममयं |
| ६६।२ | १३ | मद्दीधर | महीधर | ८२।२ | १३ | सकुटुम्ब | सकुटुम्बं |
| ६६।२ | १४ | तताकार्पी | तदाकार्पी | ८३।२ | २ | वदेहीशुद्धये | वैदेहीशुद्धयै |
| ६७।१ | ६ | क्षेमाञ्जलि | क्षेमाञ्जलि | ८३।२ | ९ | दवाग्नि | दवाग्नि |
| ६७।१ | १६ | सावरवर्णिनी | सा वरवर्णिनी | ८७।१ | १३ | ज्जत्रयोरहम् | ज्जैत्रयोरहम् |
| ६८।२ | १५ | मोघीचक्रे | मोघी चक्रे | ८७।२ | ४ | र्वातालाप | र्वार्तालाप |
| ६९।२ | ९ | महालोचनद्वोऽपि | महालोचन | ९१।१ | १ | त्वामागतोऽस्सि | त्वामागतोऽस्मि |
| | | | देवोऽपि | ९१।२ | ७ | वताढ्यस्येव | वैताढ्यस्येव |
| ७१।२ | ५ | तस्येप्सित | तस्येप्सित | ९३।१ | १६ | कुात्सत | कुत्सित |

| पृष्ठ | पङ्क्तिः | अशुद्धः | शुद्ध | पृष्ठ | पङ्क्ति | अशुद्ध | शुद्ध |
|---|---|---|---|---|---|---|---|
| ९।२ | १६ | समीपमुसौमिथि | समीप | १२३।२ | १९ | युस्त्वा | युस्त्वा |
| | | | मुपसौमिथि | १२४।१ | ११ | मविस्मय | मविस्मय |
| ९९।१ | १३ | स्तहम् | स्तहम् | १२५।१ | ५ | सयथासि | सवथासि |
| १०।२ | १ | चेत्त | चेत्तो | १२५।१ | १० | ततश्चयुत्या | ततश्चयुत्या |
| १०२।१ | १३ | तावद्रूप | तावद्रूप | १२५।२ | १३ | त्द्दानधर्मेणो | तद्दानधर्मेणो |
| १०२।२ | ५ | चक्रण | चक्रेण | १२६।२ | १० | यताढ्ये | वैताढ्ये |
| १०३।२ | १५ | यस तोरवे | यस तोऽन्वे | १२६।२ | ७ | हनुमाश्चत्र | हनुमाश्चेत्र |
| १०५।१ | ३ | मि द्रजिन् | मि द्रजित् | १२८।२ | ५ | जरायुरप्यूचे | जटायुरप्यूचे |
| १०५।२ | १ | तिष्ठाचाहनि | तिष्ठाचाह्नानि | १२९।१ | ७ | ध्यानद्रुप | ध्यानद्रुप |
| १०७।२ | १२ | दुविनीत | दुर्विनीत | १२९।२ | २ | प्रचुरसम्मदाः | [1]प्रचुरसम्मदाः |
| १०८।१ | २ | जातिस्मृति | जातिस्मृति | १३०।२ | ११ | पालयिप्यत | पालयिष्यत |
| १०९।२ | १४ | भ्रातन् | भ्रातृन् | १३३।२ | १ | दीर्धिका | दीर्धिका |
| ११७।१ | ४ | मानिन | मानिन | १३४।१ | ६ | सवजीवेतु | सर्वजीवेषु |
| ११७।१ | ६ | गङ्गा | गङ्गा | १३६।२ | ७ | दोर्भ्यां | दोर्भ्यां |
| ११७।२ | १२ | अथ थ | अथे थ | १३६।१ | १० | स्नहस्रयपि | सहस्रेयपि |
| ११७।२ | १४ | च्छुत्वा | श्रुत्वा | १३६।२ | १२ | पष्ठयप्रा | पष्ठ्यप्रा |
| ११७।२ | १४ | मुपयाय | मुपेयाय | १३७।२ | २ | स्नहस्रेणनशान | सहस्रेणानशान |
| ११९।१ | १२ | त्पत्यङ्कुशं | प्रत्यङ्कुशं | १३७।२ | १४ | वेय | देय |
| ११९।२ | ४ | हपरथाने | हपस्थाने | १३८।१ | १३ | रम | स्म |
| १२२।१ | [illegible] | ——— | मम्मस्तव[१] | १३८।२ | १ | ह | ह्रि |